P1 = **पाटण**मध्ये **खे**तरवसीपाडामध्ये विद्यमाना प्रतिः, पेटी नं. ५४(२) ३।३।१ तः ५।४।८९ पर्यन्तम्, पत्रसंख्या १-२३१ ।

P2 = **पाटण**मध्ये संघवीपाडाभंडारसत्का प्रतिः, पेटी नं. १८०(१) ३।३।१ तः ५।४।८९ पर्यन्तम्, पत्रसंख्या १-२३० ।

P3 = **पाटण**मध्ये संघवीपाडाभंडारसत्का प्रतिः, पेटी नं. १३७(२) ३।३।१ तः ५।४।९० पर्यन्तम्, पत्रसंख्या २-२०१ । प्रतिरियं १२२१ तमे वैक्रमे संवत्सरे लिखिता।

P3 = **पाटण**मध्ये संघवीपाडाभंडारसत्का प्रतिः, पेटी नं. १५६(२) ६।१।१ तः ७।४।१२२ पर्यन्तम्, पत्रसंख्या १-११९ ।

J1 = **जेसलमेर**मध्ये जिनभद्रसूरिसंस्थापिततालपत्रीयग्रन्थभाण्डागारे विद्यमाना प्रतिः,क्रमाङ्कः २९७, ५।१।१ तः ५।४।९० पर्यन्तम्, पत्रसंख्या १-९१ । प्रतिरियं १२०६ तमे वैक्रमे संवत्सरे लिखिता ।

J2 = **जेसलमेर**मध्ये जिनभद्रसूरिसंस्थापिततालपत्रीयग्रन्थभाण्डागारे विद्यमाना प्रतिः,क्रमाङ्कः २९८, ३।३।१ तः ५।४।९० पर्यन्तम्, पत्रसंख्या १-१२३।

J1 = **जेसलमेर**मध्ये जिनभद्रसूरिसंस्थापिततालपत्रीयग्रन्थभाण्डागारे विद्यमाना प्रतिः,क्रमाङ्कः २९९, ६।१।१ तः ७।४।१०७ पर्यन्तम्, ७।१।७७ तः ७।२।१६७ सूत्रात्मकानि पत्राणि न सन्ति । पत्रसंख्या १-१७१ ।

J2 = **जेसलमेर**मध्ये जिनभंद्रसूरिसंस्थापिततालपत्रीयग्रन्थभाण्डागारे विद्यमाना प्रतिः,क्रमाङ्कः ३००, ६।१।१ तः ७।४।१२२ पर्यन्तम्, पत्रसंख्या १-१९८।

J3 = **जेसलमेर**मध्ये-विद्यमाना कागदपत्रोपरि लिखिता प्रतिः, पोथी नं. ७, क्रमाङ्कः ७६, १।१।१ तः ७।१।७७ पर्यन्तम्, अपूर्णा प्रतिः, पत्रसंख्या ५१-१२२।

J3 विहाय उपरि निर्दिष्टाः सर्वेऽपि आदर्शाः तालपत्रोपरि लिखिताः।

लघुवृत्तेरादर्शेषु सूत्रपाठो विद्यत एव । तथापि विशेषतः क्वचित् सूत्रपाठ-निर्णयार्थं केवलसूत्रपाठवन्तो निम्नलिखिता आदर्शा अपि अस्माभिरत्र उपयुक्ताः—

**खं१** = खंभातनगरे शान्तिनाथतालपत्रीयजैनग्रन्थभाण्डागारे विद्यमाना प्रतिः,

नं. २३८, पत्रसंख्या १-८५ ।

**खं२** = **खंभात**नगरे शान्तिनाथतालपत्रीयजैनग्रन्थभाण्डागारे विद्यमाना प्रतिः, नं. २३९, पत्रसंख्या १-८३ ।

**पा०** = **पाटण**नगरे शान्तिनाथतालपत्रीयजैनग्रन्थभाण्डागारे विद्यमाना संघभंडार सत्का प्रतिः, डाभडो नं. ११०, पोथी नं. १३२, पत्रसंख्या १-९१ ।

**प्रा०** = अहमदाबादनगरे **प्राच्यविद्याभवने** विद्यमाना प्रतिः, पत्रसंख्या १-४० ।

तालपत्रोपरि लिखितेषु एतेषु चतुर्ष्वपि आदर्शेषु केवलः सूत्रपाठः, व्याकरणसम्बन्धिनो न्यायाः, नामलिङ्गानुशासनम्, धातुपाठः, उणादिसूत्रपाठः इत्येतद् वर्तते । द्वितीये परिशिष्टे धातुपाठः एतानादर्शानिवलम्ब्य अस्माभिरुपन्यस्तः ।

कतिपयेषु स्थानेषु सूत्रस्य वृत्तेश्च पाठनिर्णयार्थं बृहद्वृत्तेरपि तालपत्रोपरि लिखिता आदर्शा अस्माभिरुपयुक्ताः, तथाहि —

J = **जेसलमेर**स्थिता प्रतिः

K = **खंभात**नगरे विद्यमाना प्रतिः, तत्र K1 प्रतिः क्रमाङ्कः २४३, K2 प्रतिः क्रमाङ्कः २४४ ।

P = **पाटण**नगरे विद्यमाना प्रतिः ।

ये केचन पाठा मूलादर्शेषु नासन् किन्तु पश्चात् केनचित् पत्रस्य उपरितने भागे अधस्तने भागे पार्श्वयोर्वा संशोध्य संस्कृत्य वा निर्दिष्टास्ते पाठाः टिप्पणेषु P1**सं०** इत्यादिरूपेण **सं०** इति संकेतेन सह अस्माभिरत्र निर्दिष्टाः, ये तु मूलादर्शस्थाः पाठास्ते P1**मू०** इत्येवं **मू०** इति संकेतेन सह निर्दिष्टाः ।

अस्य संशोधने **पाणिनीय-चान्द्र-जैनेन्द्र-शाकटायन-मलयगिरिशब्दानुशासनादिव्याकरणान्यपि** यथायोगमुपयुक्तानि ।

महता प्रयत्नेन विहितेऽपि संशोधने याः काश्चन अशुद्धयः अस्माकं मतिदोषाद् दृष्टिदोषाद्वा दृष्टिगोचरा भवेयुः ताः स्वयमेव पठितृभिः प्रमार्जनीया अस्मभ्यमपि च निवेद्याः । वयं तेषामुपकारं मंस्यामहे ।

अस्य ग्रन्थस्य संशोधने सम्पादने च यतो यतः किमपि साहायकं लब्धं तेभ्यः सर्वेभ्यो भूयो भूयो धन्यवादान् वितरामि, विशेषतस्तु इमानत्र वयं संस्मरामः।

अत्र नव परिशिष्टानि संयोजितानि । तेषु द्वि-त्राणि परिशिष्टानि पन्यासश्री**दक्षविजय**गणिसंपादितात् स्वोपज्ञलघुवृत्तिविभूषितात् श्री **सिद्ध**हेमचन्द्र-शब्दानुशासनादत्र संगृहीतानि ।

परमोपकारिणी परमपूज्या वयोवृद्धा मम माता साध्वीश्री**मनोहरश्री**-रिहलोक-परलोककल्याणकारिभिराशीर्वचनैर्निरन्तरं महत् साहायकं सर्वैः प्रकारै-र्विधत्ते ।

मम दिवंगतोऽन्तेवासी वयोवृद्धो देवतुल्यो मुनि**देवभद्रविजयः** सदा मे मानसिकं बलं पुष्णाति ।

ममातिविनीतोऽन्तेवासी मुनि**धर्मचन्द्रविजयः** तच्छिष्यश्च मुनि**पुण्डरीक-रत्नविजयः** मुद्रितप्रारम्भिकपत्रसमूह(प्रुफ)पठन- परिशिष्टविधानादिषु अनेक-विधेषु कार्येषु महद् महत् साहायकमनुष्ठितवन्तौ ।

मम मातुः साध्वीश्री **मनोहरश्रियः** शिष्यायाः साध्वीश्री **सूर्यप्रभाश्रियः** शिष्यया साध्वीश्री **जिनेन्द्रप्रभाश्रिया** पाठभेदसंग्रहादिकं प्रभूतं प्रभूतं कार्यं महता महता परिश्रमेण विहितम् ।

**पाटण**निवासिनः **त्रिक्रमलाला**त्मजश्रेष्ठिश्री**व्रजलाल**महोदयस्य सुपुत्रः **मयूरः** कोम्प्युटरद्वारा सर्वमिदं महता परिश्रमेण मुद्रितवान् ।

झींझुवाडावास्तव्य-**'बाबुलाल-कुबेरदास-गांधी'** सुपुत्रैरस्य सर्वोऽपि मुद्रणादिव्ययो विहितः ।

मम मातुः पुण्यनाम्ना संकलितायां **माता साध्वीजी श्रीमनोहरश्रीजी-जन्मशताब्दीजैनग्रन्थमालायां** प्रथमपुष्परूपेण ग्रन्थोऽयं प्रकाश्यत इति मे महाना-नन्दः ।

परमकृपालूनां परमेश्वराणां देवाधिदेवश्री **शङ्खेश्वरपार्श्वनाथप्रभूणां** परमोप-कारिणां पूज्यपादानां पितृचरणानां सद्गुरुदेवानां मुनिराजश्री **भुवनविजयजी**महा-राजानां चरणेषु अनन्तशः प्रणिपातं विधाय येषां परमात्मनां कृपया साहाय्याच्च कार्यमिदं सिद्धं तेषां परमकृपालूनां **झींझुवाडा**नगरे जिनप्रासादे मूलनायकरूपेण

विराजमानानां श्री **शान्तिनाथ**भगवतां करकमलमेतद्ग्रन्थात्मकेन पुष्पेण पूजयित्वा अद्य परममानन्दमनुभवामि ।

इत्यावेदयति –

| | |
|---|---|
| विक्रमसंवत् | पूज्यपादाचार्यदेवश्रीमद्विजय**सिद्धि**सूरीश्वरपट्टालंकार- |
| २०५० | पूज्यपादाचार्यदेवश्रीमद्विजय**मेघ**सूरीश्वरशिष्य- |
| पौषशुक्लद्वितीया | पूज्यपादगुरुदेवमुनिराजश्री**भुवनविजया**न्तेवासी |
| गुरुवासरः | मुनि **जम्बूविजयः** |
| ता. १३-१-९४ | |
| **झींझुवाडा** | |
| (गुजरातराज्यम्) | |
| Pin 382755 | |

## अत्रेदमादावश्यमवधेयम्—

आचार्यभगवतां श्री **हेमचन्द्र**सूरीणां स्वर्गवासो वैक्रमे १२२९ वर्षे समजनि । तेषां विद्यमानतायां तालपत्रोपरि लिखितास्त्रयः **श्रीसिद्धहेमचन्द्रशब्दानुशासनस्य** आदर्शाः समुपलभ्यन्ते । तत्र विक्रमसंवत् १२०६ मध्ये तालपत्रोपरि लिखिते **जेसलमेर**स्थे २९७ ग्रन्थाङ्कयुते J1 आदर्शे ५।१।१ तः ५।४।९० पर्यन्तं सूत्राणि **लघुवृत्ति**सहितानि सन्ति । विक्रमसंवत् १२२१ मध्ये तालपत्रोपरि लिखिते **पाटण**नगरस्थे संघवीपाडाभंडारसत्के १३७(२) ग्रन्थाङ्कयुते P3 आदर्शे ३।३।१ तः ५।४।९० पर्यन्तं सूत्राणि **लघुवृत्ति**सहितानि सन्ति । विक्रमसंवत् १२१८ मध्ये तालपत्रोपरि लिखिते **जेसलमेर**स्थे ३०१ ग्रन्थाङ्कयुते आदर्शे सर्वेऽपि सप्त अध्यायाः स्वोपज्ञ**रहस्यवृत्ति**सहिताः सन्ति । श्रीसिद्धहेमचन्द्रशब्दानुशासने सप्तसु अध्यायेषु ३५६६ सूत्राणि सन्ति, तेषु प्रायः १६७० सूत्राणि एव अस्यां **रहस्यवृत्तौ** व्याख्यातानि ।

एतदवलोकनेन स्पष्टमेव प्रतिभाति यद् *ऋदुदितः* [१।४।९०] इति सूत्रं प्रारम्भे आ.भ.श्री **हेमचन्द्रसूरि**भिर्नैव विरचितम् । किन्तु सर्वेऽपि ऋदितः उदितश्च प्रत्ययाः 'शन्तृ, अन्तृ, अन्तृश्, क्वंसु, ईयंसु' ... इत्येवम् उपान्त्य'न्'सहिता एव तैः स्वीकृताः । *डित्यन्त्यस्वरादेः* [२।१।११४] इति सूत्रानन्तरं च ईदृशानि त्रीणि सूत्राणि रहस्यवृत्तौ दृश्यन्ते—

***"अघुटचुपान्त्यनोऽक्रुंचुचु(ऽक्रुञ्चञ्चु)दितः [२।१।११५]***

*क्रुञ्च्-[अञ्च्]-उदिद्वर्जस्य उपान्त्यनस्य लुक् स्यात्, न तु घुटि । महतः । श्रेयः । अक्रुंचुंचु(अक्रुञ्चञ्चु)दित इति किम् ? क्रुञ्चा । साध्वञ्चा । सुकन्भ्याम् ।*

***अवर्णादश्नो वाऽन्तुरीङ्च्योः [२।१।११६]***

*श्नावर्जादवर्णात् परस्यान्तुरुपान्त्यनो लुग् वा स्यात् ई-ङ्च्योः । तुदती तुदन्ती कुले स्त्री वा । एवं भाती भान्ती । अवर्णादिति किम् ? अदती । [अ]श्न इति किम् ? लुनती ।*

***न श्यशवः [२।१।११७]***

*श्याच्छवश्च परस्यान्तुरीङ्च्योः परयोरुपान्त्यनो लुग् न स्यात् । दीव्यन्ती । पचन्ती ।''*

उपरिनिर्दिष्टादर्शत्रयानुसारेण प्राचीने सिद्धहेमचन्द्रशब्दानुशासने एवंविधानि सूत्राणि आसन्—

*न स्तं मन्त्वर्थे [१।१।२३], डत्यन्तु संख्यावत् [१।१।३९], अभ्वादेरन्त्वसः सौ [१।४।९०], स्रंस्-ध्वंस्-क्वंस्वनडुहो दः [२।१।६८], मावर्णोपान्तपञ्चमवर्गान् मन्तोर्मो वः [२।१।९४], क्वंसुषू मन्तौ च [२।१।१०५], अघुटच्चुपान्त्यनोऽक्रुञ्चञ्चुदितः [२।१।११५], अवर्णादश्नो वान्तुरीङ्योः [२।१।११६], न श्य-शवः [२।१।११७], तृन्नुदन्ताव्यय-क्वंस्वाना-ऽन्तृश्-शन्तृ-ङि-णकचू-खलर्थस्य [२।२।९०], अनजिरादिबहुस्वर-शरादीनां मन्तौ [३।२।७८], नवाद्यानि शन्तृ-क्वंसू च परस्मैपदम् [३।३।१९], घसेकस्वरातः क्वंसोः [४।४।८२], जॄषोऽन्तृः [५।१।१७३], क्त-क्तवन्तू [५।१।१७४], तत्र क्वंसु-कानौ तद्वत् [५।२।२], शन्त्रानशावेष्यति तु सस्यौ [५।२।२०], वा वेत्तेः क्वंसुः [५।२।२२], धारीङोऽकृच्छ्रेऽन्तृश् [५।२।२५], वाऽन्तोरिकः [६।४।१३२], इदंकिमोऽन्तुरिय् कियू चास्य [७।१।१४८], अन्तोरिथट् [७।१।१६१], तदस्यास्त्यस्मिन्निति मन्तुः [७।२।१], भवन्त्वायुष्मद्दीघायुर्देवानांप्रियैकार्थात् [७।२।९१], प्रायोऽन्तोर्द्वयसट्-मात्रट् [७।२।१५५], गुणाङ्गाद्वेष्ठेयंसू [७।३।९], कुमारीक्रीडनेयंसोः [७।३।१६], वयसि दन्तस्य दन्तृः [७।३।१५१], ईयंसोः [७।३।१७७], विन्मन्तोर्णीष्ठेयंसौ लुप् [७।४।३२]*

वृत्तावपि च एतदनुसारेणैव सर्वत्र पाठ आसीत् । प्राचीनतमादर्शावलोकनादेतत् स्पष्टमेवावसीयते ।

अधुना तु 'शतृ-अतृ-अतृश्-क्वसु-ईयसु... ' इत्यादिपाठयुक्तो यादृशः सूत्रपाठो दृश्यते तादृशः कदा संजातः ? आचार्यश्री**हेमचन्द्रसूरि**भिः स्वयमेव उत्तरकाले परिवर्तितः, अन्येन वा केनचित् परिवर्तितः ? इति वयं न जानीमः । किन्तु प्रायः अष्टाभ्य वर्षशतेभ्य पाठोऽयं प्रचलति इति अवश्यं ज्ञायते । संवत् १२९२ मध्ये तालपत्रोपरि लिखिते २३९ ग्रन्थाङ्कयुते **खंभात**नगरस्थे सिद्धहेमचन्द्रशब्दानुशासने 'शतृ-अतृ' इत्यादिपाठयुक्तान्येव सूत्राणि दृश्यन्ते । गूर्जरभाषायां लिखितायां प्रस्तावनायां [पृ० ६-११] विस्तरेण एतच्चर्चितमस्माभिः । विशेषतो जिज्ञासुभिस्तत्र विलोकनीयम् ।

# विषयानुक्रमः ।



# शुद्धिपत्रकम् ।

| पृ. | पं. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४२ | १७ | आद्वेरः | आ द्वेरः |
| ४२ | २१ | आद्वेस्त्यदां | आ द्वेस्त्यदां |
| ६२ | ७ | तद् भद्रा | तद्-भद्रा |
| ६९ | ७ | षष्ठ्यौ | षष्ठ्यौ |
| ६९ | २० | ङ्यम् | ङ्यम् |
| ९१ | १२ | कवर | कबर |
| ९९ | ९ | ङ्यादीदूतां च | ङ्या आदीदूतां च |
| १६७ | २५ | °तन्यां अङ् | °तन्याम् अङ् |
| १९३ | १५ | क्ङिति किम् | क्ङितीति किम् |
| १९६ | ८ | रदन्तात् | रदान्तात् |
| १९६ | १४ | तोख्याध्यः | तोऽख्याध्यः |
| २०६ | १ | भावाऽरम्भ | भावा-ऽऽरम्भ |
| २२३ | १५ | प्रकमितुम् | प्रक्रमितुम् |
| २६८ | २४ | समाह्वयौ | समाह्वया-ऽऽह्वयौ |
| २८१ | ७ | गन्ताऽस्मि | गन्तास्मि |
| ३०० | २० | °ब्रभ्रो | °बभ्रो |
| ३०० | २२ | ब्राभव्यः | बाभ्रव्यः |
| ३२२ | १८ | °ट्टचण् | °ट्टचण् ।६।२।१०७॥ |
| ४३७ | २१ | मद्रिमा | म्रदिमा |
| ४४७ | ४ | लं एनच्च | लम् एनच्च |

अपरं शुद्धिपत्रकं ४४९ तमे पत्रे द्रष्टव्यम् ।

श्री ऋषभदेवस्वामिने नमः ।

श्री शान्तिनाथाय नमः । श्री नेमिनाथाय नमः ।

श्री शङ्खेश्वरपार्श्वनाथाय नमः । श्री महावीरस्वामिने नमः ।

श्री गौतमस्वामिने नमः । श्री सद्गुरुभ्यो नमः ॥

ॐ श्रीँ ह्रीँ अर्हँ नमः ।

आचार्यभगवत्-कलिकालसर्वज्ञश्रीहेमचन्द्रसूरिप्रणीतं

स्वोपज्ञलघुवृत्तिविभूषितं

# श्रीसिद्धहेमचन्द्रशब्दानुशासनम् ॥

प्र[1]णम्य **परमात्मानं** श्रेयः शब्दानुशासनम् ।
आचार्य**हेमचन्द्रेण** स्मृत्वा किञ्चित् प्रकाश्यते ॥१॥

**अर्हँ ।१।१।१॥**

**अर्हँ**[2] इत्येतदक्षरं परमेश्वरस्य परमेष्ठिनो वाचकं मङ्गलार्थं शास्त्रस्याऽऽदौ प्रणिदध्महे ॥१॥

**सिद्धिः स्याद्वादात् ।१।१।२॥**

स्याद्वादाद् अनेकान्तवादात् प्रकृतानां शब्दानां **सिद्धिः** निष्पत्तिर्ज्ञप्तिश्च वेदितव्या ॥२॥

**लोकात् ।१।१।३॥**

अनुक्तानां संज्ञानां न्यायानां च लोकाद् वैयाकरणादेः **सिद्धिर्ज्ञप्तिर्वेदितव्या** , वर्णसमाम्नायस्य च ॥३॥ तत्र-

**औदन्ताः स्वराः ।१।१।४॥**

---

१. १।१।१। त आरभ्य ३।२।१५६। पर्यन्तमस्य संशोधने लघुवृत्तेरिमे हस्तलिखितादर्शाः सम्प्रयुक्ताः — पा१,२,३, खं१,२,३, J3 । एषां सर्वेषां स्वरूपं प्रस्तावनातोऽवगन्तव्यम् ॥ **२. अर्हमित्ये॑** खं१, पा१,J3 ॥

औकारावसाना वर्णाः स्वरसंज्ञाः स्युः । अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ ॥४॥

**एक-द्वि-त्रिमात्रा ह्रस्व-दीर्घ-प्लुताः ।१।१।५॥**

मात्रा कालविशेषः । एक-द्वि-त्र्युच्चारणमात्रा औदन्ता वर्णा यथासंख्यं ह्रस्व-दीर्घ-प्लुतसंज्ञाः स्युः । अ इ उ ऋ ऌ , आ ई ऊ ॠ ॡ , ए ऐ ओ औ , आ ३ ई ३ ऊ ३ इत्यादि ॥५॥

**अनवर्णा नामी ।१।१।६॥**

अवर्णवर्जा औदन्ता वर्णा नामिसंज्ञाः स्युः । इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ ॥६॥

**ॡदन्ताः समानाः ।१।१।७॥**

ॡकारावसाना वर्णाः समानाः स्युः । अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ॥७॥

**ए-ऐ-ओ-औ सन्ध्यक्षरम् ।१।१।८॥**

' ए ऐ ओ औ ' इत्येते वर्णाः सन्ध्यक्षराणि स्युः ॥८॥

**अं-अः अनुस्वार-विसर्गौ ।१।१।९॥**

अकारावुच्चारणार्थौ । ' अं ' इति नासिक्यो वर्णः ' अः ' इति च कण्ठ्यः यथासंख्यम् ' अनुस्वार-विसर्गौ ' स्याताम् ॥९॥

**कादिर्व्यञ्जनम् ।१।१।१०॥**

कादिर्वर्णो हपर्यन्तो व्यञ्जनं स्यात् । क ख ग घ ङ , च छ ज झ ञ , ट ठ ड ढ ण , त थ द ध न , प फ ब भ म , य र ल व , श ष स ह ॥१०॥

**अपञ्चमान्तस्थो धुट् ।१।१।११॥**

वर्गपञ्चमा-ऽन्तस्थावर्जः कादिर्वर्णो धुट् स्यात् । क ख ग घ , च छ ज झ , ट ठ ड ढ , त थ द ध , प फ ब भ , श ष स ह ॥११॥

**पञ्चको वर्गः ।१।१।१२॥**

कादिषु वर्णेषु यो यः पञ्चसंख्यापरिमाणो वर्गः स स वर्गः स्यात् । क ख ग घ ङ , च छ ज झ ञ , ट ठ ड ढ ण , त थ द ध न . प फ ब

भ म ॥१२॥

## आद्य-द्वितीय-श-ष-सा अघोषाः ।१।१।१३॥

वर्गाणामाद्य-द्वितीया वर्णाः श-ष-साश्च अघोषाः स्युः । क ख , च छ , ट ठ , त थ , प फ , श ष स ॥१३॥

## अन्यो घोषवान् ।१।१।१४॥

अघोषेभ्योऽन्यः कादिर्वर्णो घोषवान् स्यात् । ग घ ङ , ज झ ञ , ड ढ ण , द ध न , ब भ म , य र ल व , ह ॥१४॥

## य-र-ल-वा अन्तस्थाः ।१।१।१५॥

एते ' अन्तस्थाः ' स्युः ॥१५॥

## अं-अः≍क-≍प-श-ष-साः शिट् ।१।१।१६॥

अ-क-पा उच्चारणार्थाः , अनुस्वार-विसर्गौ वज्र-गजकुम्भाऽऽकृती च वर्णौ श-ष-साश्च शिटः स्युः ॥१६॥

## तुल्यस्थाना-ऽऽस्यप्रयत्नः स्वः ।१।१।१७॥

स्थानं[1] कण्ठादि । आस्ये प्रयत्न आस्यप्रयत्नः स्पृष्टतादिः । **तुल्यौ** वर्णान्तरेण सदृशौ स्थाना-ऽऽस्यप्रयत्नौ यस्य स वर्णस्तं प्रति स्वः स्यात् ।

तत्र त्रयोऽकारा उदात्ता-ऽनुदात्त-स्वरिताः प्रत्येकं सानुनासिक-निरनुनासिक-भेदात् षट् , एवं दीर्घ-प्लुतौ इति अष्टादश भेदा अवर्णस्य , ते सर्वे कण्ठस्थाना विवृतकरणाः परस्परं स्वाः । एवम् इवर्णास्तावन्तस्तालव्या विवृतकरणाः स्वाः । उवर्णा ओष्ठ्या विवृतकरणाः स्वाः । ऋवर्णा मूर्द्धन्या विवृतकरणाः स्वाः । ऌवर्णा दन्त्या विवृतकरणाः स्वाः । सन्ध्यक्षराणां ह्रस्वा न सन्ति , इति तानि प्रत्येकं द्वादशभेदानि । तत्र एकारास्तालव्या विवृततराः स्वाः । ऐकारास्तालव्या अतिविवृततराः स्वाः । ओकारा ओष्ठ्या विवृततराः स्वाः । औकारा ओष्ठ्या अतिविवृततराः स्वाः । वर्ग्याः पञ्च पञ्च परस्परं स्वाः । य-ल-वाना-मनुनासिकोऽननुनासिकश्च द्वौ भेदौ परस्परं स्वौ ॥१७॥

---

१. **"स्थानं कण्ठादि । यदाहुः — "अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा । जिह्वामूलं च दन्ताश्च नासिकौष्ठौ च तालु च ॥"** [पाणिनीयशिक्षा , श्लो० ८] इति बृहद्वृत्तौ ।

**स्यौ-जसमौ-शस्-टा-भ्याम्-भिस्-ङे-भ्याम्-भ्यस्-ङसि-भ्याम्-भ्यस्-ङसोसाम्-ङ्योस्-सुपां त्रयी त्रयी प्रथमादिः ।१।१।१८॥**

स्यादीनां प्रत्ययानां त्रयी त्रयी यथासंख्यं प्रथमा द्वितीया तृतीया चतुर्थी पञ्चमी षष्ठी सप्तमी च स्यात् ॥१८॥

**स्त्यादिर्विभक्तिः ।१।१।१९॥**

'स्' इति च 'ति' इति च उत्सृष्टानुबन्धस्य सेस्तिवश्च ग्रहणम् । स्यादयस्तिवादयश्च सुप्-स्यामहिपर्यन्ता विभक्तयः स्युः ॥१९॥

**तदन्तं पदम् ।१।१।२०॥**

स्याद्यन्तं त्याद्यन्तं च पदं स्यात् । धर्मो वः स्वम् , ददाति नः शास्त्रम् ॥२०॥

**नाम सिदय्व्यञ्जने ।१।१।२१॥**

सिति प्रत्यये यवर्जव्यञ्जनादौ च परे नाम पदं स्यात् । भवदीयः , पयोभ्याम् । अय् इति किम् ? वाच्यति ॥२१॥

**नं क्ये ।१।१।२२॥**

**क्ये** इति क्यन्-क्यङ्-क्यङ्षां ग्रहणम् । नान्तं नाम क्ये परे पदं स्यात् । राजीयति , राजायते , चर्मायति[१] ॥२२॥

**न स्तं मत्वर्थे ।१।१।२३॥**

सान्तं तान्तं च नाम मत्वर्थे परे पदं न स्यात् । यशस्वी , तडित्वान् ॥२३॥

**मनुर्नभोऽङ्गिरो वति ।१।१।२४॥**

एतानि वति परे पदं न स्युः । मनुष्वत् , नभस्वत् , अङ्गिरस्वत् ॥२४॥

**वृत्त्यन्तोऽसषे ।१।१।२५॥**

परार्थाभिधायी समासादिर्वृत्तिः , तस्या **अन्तः** अवसानं पदं न स्यात् **असषे** , सस्य तु षत्वे पदमेव । परमदिवौ , बहुदण्डिनौ । असष इति किम् ? दधिसेक् ॥२५॥

---

१. **चर्मायते** J ॥

**सविशेषणमाख्यातं वाक्यम् ।१।१।२६॥**

प्रयुज्यमानैरप्रयुज्यमानैर्वा विशेषणैः सहितं प्रयुज्यमानमप्रयुज्यमानं वा आख्यातं वाक्यं स्यात् । धर्मो वो रक्षतु , लुनीहि३ पृथुकाँश्च खाद , शीलं ते स्वम् ॥२६॥

**अधातु-विभक्ति-वाक्यमर्थवन्नाम ।१।१।२७॥**

धातु-विभक्त्यन्त-वाक्यवर्जमर्थवच्छब्दरूपं नाम स्यात् । वृक्षः , स्वः , धवश्च । अधातुविभक्तिवाक्यमिति किम् ? अहन् , वृक्षान् , साधुः धर्मं ब्रूते ॥२७॥

**शिर्घुट् ।१।१।२८॥**

जस्-शसादेशः शिर्घुट् स्यात् । पद्मानि , पयांसि[1] ॥२८॥

**पुं-स्त्रियोः स्यमौ-जस् ।१।१।२९॥**

स्यादयः पुं-स्त्रीलिङ्गयोर्घुटः स्युः । राजा[2] , राजानम् , राजानौ , राजानः , सीमा , सीमानम् , सीमानौ , सीमानः ॥२९॥

**स्वरादयोऽव्ययम् ।१।१।३०॥**

स्वरादयोऽव्ययानि स्युः । स्वः , अन्तः[3] , इत्यादि ॥३०॥

**चादयोऽसत्त्वे ।१।१।३१॥**

**असत्त्वे** अद्रव्ये वर्त्तमानाश्चादयोऽव्ययानि स्युः । वृक्षश्च इत्यादि ॥३१॥

**अधण्तस्वाद्या शसः ।१।१।३२॥**

धण्वर्जास्तस्वादयः शसूपर्यन्ता ये प्रत्ययास्तदन्तं नाम अव्ययं स्यात् । देवा अर्जुनतोऽभवन् , ततः , तत्र , बहुशः । अधणिति किम् ? पथि द्वैधानि ॥३२॥

**विभक्ति-थमन्ततसाद्याभाः ।१।१।३३॥**

विभक्त्यन्ताभाः थमवसानतसादिप्रत्ययान्ताभाश्चाऽव्ययानि स्युः । अहंयुः , अस्तिक्षीरा गौः , कुतः , कथम् ॥३३॥

**वत्-तस्याम् ।१।१।३४॥**

१. पयांसि खं१,३, पा३ मध्ये नास्ति ॥ २. सूत्रक्रमानुसारेण उदाहरणक्रमः ॥ ३. **अन्तः** प्रातः इत्यादि खं१ ॥

वत्-तसि-आम्प्रत्ययान्तमव्ययं स्यात्। मुनिवद् वृत्तम्, उरस्तः, उच्चैस्तराम् ॥३४॥

**क्त्वा-तुमम् ।१।१।३५॥**

क्त्वा-तुम्-अम्प्रत्ययान्तमव्ययं स्यात्। कृत्वा, कर्त्तुम्, यावज्जीवमदात् ॥३५॥

**गतिः ।१।१।३६॥**

गतिसंज्ञमव्ययं स्यात्। अदःकृत्य। रः सो न स्यात् ॥३६॥

**अप्रयोगीत् ।१।१।३७॥**

इह शास्त्रे उपदिश्यमानो वर्णस्तत्समुदायो वा प्रयोगेऽदृश्यमान इत् स्यात्। एधते, यजते, चित्रीयते ॥३७॥

**अनन्तः पञ्चम्याः प्रत्ययः ।१।१।३८॥**

पञ्चम्यर्थाद् विहितोऽन्तशब्दानिर्दिष्टः प्रत्ययः स्यात्। *नाम्नः प्रथमैक-द्वि-बहौ [२/२/३१]* वृक्षः। अनन्त इति किम्? आगमः प्रत्ययो मा भूत् ॥३८॥

**डत्यतु संख्यावत् ।१।१।३९॥**

डत्यन्तम् अत्वन्तं च संख्याकार्यभाक् स्यात्। कतिकः, यावत्कः ॥३९॥

**बहु-गणं भेदे ।१।१।४०॥**

बहु-गणशब्दौ भेदवृत्ती सङ्ख्यावत् स्याताम्। बहुकः, गणकः। भेद इति किम्? वैपुल्ये संघे च मा भूत्[1] ॥४०॥

**क-समासेऽध्यर्द्धः ।१।१।४१॥**

अध्यर्द्धशब्दः के[2] समासे च विधेये संख्यावत् स्यात्। अध्यर्द्धकम्, अध्यर्द्धशूर्पम् ॥४१॥

**अर्द्धपूर्वपदः पूरणः ।१।१।४२॥**

अर्द्धपूर्वपदः पूरणप्रत्ययान्तः समासः के समासे च कार्ये संख्यावत् स्यात्। अर्द्धपञ्चमकम्, अर्द्धपञ्चमशूर्पम् ॥४२॥

१. भूतां पा१ पासं२ पा३ ॥ २. के प्रत्यये समासे खं१ ॥

इत्याचार्यश्री **हेमचन्द्र**विरचितायां
**सिद्धहेमचन्द्रा**भिधानस्वोपज्ञशब्दानुशासनलघुवृत्तौ
प्रथमस्याध्यायस्य प्रथमः पादः समाप्तः ॥१।१॥

हरिरिव[१] बलिबन्धकरस्त्रिशक्तियुक्तः पिनाकपाणिरिव ।
कमलाश्रयश्च विधिरिव जयति श्री**मूलराज**नृपः ॥१॥

१. श्लोकोऽयं **प्रा०** मध्ये एव बृहद्वृत्तौ च दृश्यते, अन्येषु हस्तलिखितादर्शेषु न दृश्यते । एवं सर्वत्रापि प्रत्यध्यायान्तं प्रतिपादान्तं च विज्ञेयम् । अत्र तु पा२ मध्येऽपि वर्तते ॥

## [ द्वितीयः पादः ]

### समानानां तेन दीर्घः ।।१।२।१।।

समानानां **तेन** समानेन परेण सह दीर्घः स्यात् । दण्डाग्रम् , दधीदम् , नदीन्द्रः ।।१।।

### ऋलृति ह्रस्वो वा ।१।२।२।।

ऋति लृति च परे समानानां ह्रस्वो वा स्यात् । बालऋश्यः , कृऋषभः , होतृलृकारः । पक्षे बालर्श्यः इत्यादि ।।२।।

### लृत ॠॡ ऋलृभ्यां वा ।१।२।३।।

लृत ऋता लृता च सह यथासंख्यं ॠ-ॡ इत्येतौ वा स्याताम् । ऋता[1] कॄकारः , पक्षे कृऋकारः , कॄकारः । लृता-कॡकारः , पक्षे[2] कॡकारः , कॢलृकारः , ।।३।।

### ऋतो वा , तौ च ।१।२।४।।

ऋत ऋलृभ्यां सह यथासंख्यं ॠ-ॡ इत्येतौ वा स्याताम् , **तौ च** ऋकारलृकारौ ऋलृभ्यां सह वा स्याताम् । ऋता[3]-पितॄषभः , पक्षे पितॄषभः , पितृऋषभः । लृता-होतॢकारः , पक्षे होतृलृकारः , होतॄकारः । तौ च-पितृषभः , होतॢकारः , पक्षे पूर्ववत् ।।४।।

### ॠस्तयोः ।१।२।५।।

तयोः पूर्वस्थानिनोर्लृकार-ऋकारयोर्यथासंख्यम् ऋलृभ्यां सह 'ॠ' इति दीर्घः स्यात् । ॠषभः , होतॄकारः ।।५।।

### अवर्णस्येवर्णादिनैदोदरल् ।१।२।६।।

अवर्णस्य इ-उ-ऋ-लृवर्णैः सह यथासंख्यम् एत्[4] ओत् अर् अल् इत्येते स्युः । देवेन्द्रः , तवेहा , मालेयम् , सेक्षते , तवोदकम् , तवोढा , गङ्गोदकम् , सोढा , तवर्षिः , तवर्कारः , महर्षिः , सर्कारः , तवल्कारः , सल्कारेण ।।६।।

### ऋणे प्र-दशार्ण-वसन कम्बल-वत्सर-वत्सतरस्याऽऽर् ।१।२।७।।

---

१. ऋता जे३ विना नास्ति ।। २. पक्षे कॢलृकारः कॡकारः खं१,२ पा१ J3 ।। ३. ऋता J3 विना नास्ति ।। ४. ए ओ अर् J3 विना सर्वत्र ।।

प्रादीनामवर्णस्य ऋणे परे ऋता सह आर् स्यात् । प्रार्णम् , दशार्णम् , ऋणार्णम् , वसनार्णम् , कम्बलार्णम् , वत्सरार्णम् , वत्सतरार्णम् ॥७॥

**ऋते तृतीयासमासे ।१।२।८॥**

अवर्णस्य ऋते परे तृतीयासमासे ऋता सह आर् स्यात् । शीतार्त्तः । तृतीयासमास इति किम् ? परमर्त्तः , दुःखेनर्त्तः ॥८॥

**ऋत्यारुपसर्गस्य ।१।२।९॥**

उपसर्गस्थस्यावर्णस्य ऋकारादौ धातौ परे ऋता सह आर् स्यात् । प्रार्च्छति , परार्च्छति ॥९॥

**नाम्नि वा ।१।२।१०॥**

उपसर्गस्थस्यावर्णस्य ऋकारादौ नामावयवे धातौ परे ऋता सह आर् वा स्यात् । प्रार्षभीयति , प्रर्षभीयति ॥१०॥

**ऌत्याल् वा ।१।२।११॥**

उपसर्गस्थस्यावर्णस्य[1] ऌकारादौ नामावयवे धातौ परे ऌता सह आल् वा स्यात् । उपाल्कारीयति[2] , उपल्कारीयति ॥११॥

**ऐदौत् सन्ध्यक्षरैः ।१।२।१२॥**

अवर्णस्य सन्ध्यक्षरैः परैः सह ऐ-औ इत्येतौ स्याताम् । तवैषा , खट्वैषा , तवैन्द्री , सैन्द्री , तवौदनः , तवौपगवः ॥१२॥

**ऊटा ।१।२।१३॥**

अवर्णस्य परेण ऊटा सह औः स्यात् । धौतः , धौतवान् ॥१३॥

**प्रस्यैषैष्योढोढ्यूहे स्वरेण ।१।२।१४॥**

प्राऽवर्णस्य एषादिषु परेषु परेण स्वरेण सह ऐ-औ स्याताम् । प्रैषः , प्रैष्यः , प्रौढः , प्रौढिः , प्रौहः ॥१४॥

**स्वैर-स्वैर्यक्षौहिण्याम् ।१।२।१५॥**

स्वैरादिष्ववर्णस्य परेण स्वरेण सह ऐ-औ स्याताम् । स्वैरः , स्वैरी , अक्षौहिणी[3] ।१५॥

१. उपसर्गावर्णस्य खं१,२,३ । उपसर्गस्यावर्णस्य पा२,३ ॥ २. उपल्कारीयति उपाल्कारीयति पा१ ॥ ३. अक्षौहिणी सेना खं१ ॥

### अनियोगे लुगेवे ।१।२।१६॥

अनियोगो अनवधारणम् , तद्विषये एवे परेऽवर्णस्य लुक् स्यात् । इहेव तिष्ठ , अद्येव गच्छ । नियोगे तु-इहैव तिष्ठ , मा गाः ॥१६॥

### वौष्ठौतौ समासे ।१।२।१७॥

ओष्ठौत्वोः परयोः समासेऽवर्णस्य लुग् वा स्यात् । बिम्बोष्ठी , बिम्बौष्ठी ; स्थूलोतुः , स्थूलौतुः । समास इति किम् ? हे पुत्रौष्ठं पश्य ॥१७॥

### ओमाङि ।१।२।१८॥

अवर्णस्य ओमि आङादेशे च परे लुक् स्यात् । अद्योम् , सोम् , आ ऊढा ओढा- अद्योढा , सोढा ॥१८॥

### उपसर्गस्यानिणेधेदोति ।१।२।१९॥

[1]उपसर्गस्यावर्णस्य इणेधिवर्जे एदादावोदादौ च[2] धातौ परे लुक् स्यात् । प्रेलयति , परेलयति , प्रोषति , परोषति । अनिणेधिति किम् ? उपैति , प्रैधते ॥१९॥

### वा नाम्नि ।१।२।२०॥

नामावयवे एदोदादौ धातौ परे उपसर्गावर्णस्य लुग् वा स्यात् । उपेकीयति , उपैकीयति ; प्रोषधीयति , प्रौषधीयति ॥२०॥

### इवर्णादेरस्वे स्वरे य-व-र-लम् ।१।२।२१॥

इ-उ-ऋ-ऌवर्णानामस्वे स्वरे परे यथासंख्यं य् व् र् ल् इत्येते स्युः । दध्यत्र , नद्येषा , मध्वत्र , वध्वासनम् , पित्रर्थः , क्रादिः , लित् , लाकृतिः ॥२१॥

### ह्रस्वोऽपदे वा ।१।२।२२॥

इवर्णादीनामस्वे स्वरे [3]परे ह्रस्वो वा स्यात् , न चेत् तौ निमित्त-निमित्तिनावेकत्र पदे स्याताम् । नदि एषा , नद्येषा । मधु अत्र , मध्वत्र । अपद इति किम् ? नद्यौ , नद्यर्थः ॥२२॥

### एदैतोऽयाय् ।१।२।२३॥

एदैतोः स्वरे परे यथासंख्यम् अय्-आय् इत्येतौ स्याताम् । नयनम् , वृक्षयेव

१. उपसर्गावर्णस्य पा१,३ J3सं० विना ॥ २. च नास्ति खं२,३, पा२, खंमू१ पामू३ ॥ ३. परे पासं१. खं२. J3 विना नास्ति ॥

, नायकः , रायैन्द्री ॥२३॥

**ओदौतोऽवाव् ।१।२।२४॥**

ओदौतोः स्वरे परे यथासंख्यम् अव्-आव् इत्येतौ स्याताम् । लवनम् , पटवोतुः , लावकः , गावौ ॥२४॥

**य्यक्ये ।१।२।२५॥**

ओदौतोः क्यवर्जे यादौ प्रत्यये परे यथासंख्यम् अव्-आवौ स्याताम् । गव्यति , गव्यते , नाव्यति , नाव्यते , लव्यम् , लाव्यम् । अक्य इति किम् ? उपोयते , औयत ॥२५॥

**ऋतो रस्तद्धिते ।१।२।२६॥**

ऋकारस्य या[१]दौ तद्धिते परे रः स्यात् । पित्र्यम् । तद्धित इति किम् ? कार्यम् ॥२६॥

**एदोतः पदान्तेऽस्य लुक् ।१।२।२७॥**

एदोद्भ्यां पदान्तस्थाभ्यां परस्याऽकारस्य लुक् स्यात् । तेऽत्र , पटोऽत्र । पदान्त इति किम् ? नयनम् ॥२७॥

**गोर्नाम्न्यवोऽक्षे ।१।२।२८॥**

गोरोतः पदान्तस्थस्य अक्षे परे संज्ञायाम् अव इति स्यात् गवाक्षः । नाम्नीति किम् ? गोऽक्षाणि ॥२८॥

**स्वरे वाऽनक्षे ।१।२।२९॥**

गोरोतः पदान्तस्थस्य स्वरे परे अव इति वा स्यात् , स चेत् स्वरोऽक्षस्थो न स्यात् । गवाग्रम् , गोऽग्रम् , गवेशः , गवीशः । अनक्ष इति किम् ? गोऽक्षम् । ओत इत्येव - चित्रग्वर्थः ॥२९॥

**इन्द्रे ।१।२।३०॥**

गोरोतः पदान्तस्थस्य इन्द्रस्थे स्वरे परे अव इति स्यात् । गवेन्द्रः ॥३०॥

**मूवाऽत्यसन्धिः ।१।२।३१॥**

गोरोतः पदान्तस्थस्य अकारे परे सन्ध्यभावो वा स्यात् । गोअग्रम्,

---

१. यादौ प्रत्यये तद्धिते पा१ J3 ॥

गवाग्रम् , गोऽग्रम्[1] । अतीति किम् ? गवेङ्गितम् ॥३१॥

**प्लुतोऽनितौ ।१।२।३२॥**

इतिवर्जे स्वरे परे प्लुतः सन्धिभाग् न स्यात् । देवदत्त ३ ! अत्र न्वसि । अनिताविति किम् ? सुश्लोकेति ॥३२॥

**इ ३ वा ।१।२।३३॥**

इस्थानः प्लुतः स्वरे परे असन्धिर्वा स्यात् । लुनीहि ३ इति , लुनीहीति ॥३३॥

**ईदूदेद् द्विवचनम् ।१।२।३४॥**

ई-ऊ-ए इत्येवमन्तं द्विवचनान्तं स्वरे परे असन्धिः स्यात् । मुनी इह , साधू एतौ , माले इमे , पचेते इति । [[2]ईदूदेदिति किम् ? वृक्षावत्र । द्विवचनमिति किम् ? कुमार्यत्र] ॥३४॥

**अदोमु-मी ।१।२।३५॥**

अदसः सम्बन्धिनौ मु-मी इत्येतौ स्वरे परे असन्धी स्याताम् । अमुमुईचा । अमी अश्वाः ॥३५॥

**चादिः स्वरोऽनाङ् ।१।२।३६॥**

आङ्वर्जश्चादिः स्वरः स्वरे परे असन्धिः स्यात् । अ अपेहि , इ इन्द्रं पश्य , उ उत्तिष्ठ , आ एवं किल मन्यसे , आ एवं नु तत् । अनाङिति किम् ? आ इहि- एहि ॥३६॥

**ओदन्तः ।१।२।३७॥**

ओदन्तश्चादिः स्वरे परे असन्धिः स्यात् । अहो अत्र ॥३७॥

**सौ नवेतौ ।१।२।३८॥**

सिनिमित्त ओदन्त इतौ परे असन्धिर्वा स्यात् । पटो इति , पटविति ॥३८॥

**ऊँ चोञ् ।१।२।३९॥**

उञ् चादिरितौ परे असन्धिर्वा स्यात् , असन्धौ च उञ् ऊँ इति दीर्घोऽनुनासिको वा स्यात् । उ इति , ऊँ इति , विति ॥३९॥

---

१. **गोऽग्रम्** खं३ पा२, ३ मध्ये नास्ति ॥ २. [ ] J3 मध्ये एव ॥

**ञ्रवर्गात् स्वरे वोऽसन् ।१।२।४०।।**

ञ्रवर्जवर्गेभ्यः परः उञ् स्वरे परे वो वा स्यात् , स चाऽसन् । क्रुङ्ङ्वास्ते । क्रुङ्ङु आस्ते । असत्त्वाद् द्वित्वम् ।।४०।।

**अ-इ-उ-वर्णस्यान्तेऽनुनासिकोऽनीदादेः ।१।२।४१।।**

अ-इ-उ-वर्णाना**मन्ते** विरामे अनुनासिको वा स्यात् , न चेदेते ईदूदेद् *द्विवचनम् [१।२।३४]* इत्यादिसूत्रसम्बन्धिनः स्युः । सामँ , साम । खट्वाँ , खट्वा । दधिँ , दधि । कुमारीँ , कुमारी । मधुँ , मधु । अनीदादेरिति किम् ? अग्नी , अमी , किमु ।।४१।।

[इत्याचार्यश्री[१]**हेमचन्द्र**विरचितायां
**सिद्धहेमचन्द्रा**भिधानस्वोपज्ञशब्दानुशासनलघुवृत्तौ]
प्रथमस्याध्यायस्य द्वितीयः पादः समाप्तः[२] ।१।२।।

पू[३]र्वभवदारगोपीहरणस्मरणादिव ज्वलितमन्युः ।
श्री**मूलराज**पुरुषोत्तमोऽवधीद् दुर्मदाऽऽभीरान् ।।२।।

---

१. [ ] प्रथमपादानुसारेण परिपूरितोऽयं पाठोऽस्माभिः । एवमग्रेऽपि सर्वत्र बोध्यम् ।। २. **समाप्तः** पा१,२ J3 विना नास्ति ।। ३. श्लोकोऽयं पा१, प्रा०, बृहद्वृत्तौ च वर्तते ।।

## [तृतीयः पादः]

### तृतीयस्य पञ्चमे ।१।३।१॥

वेति पदान्त इति अनुनासिक इति च [१]अनुवर्त्तते । वर्गतृतीयस्य पदान्तस्थस्य पञ्चमे परे अनुनासिको वा स्यात् । वाङ् ङवते , वाग् ङवते । ककुम्मण्डलम् , ककुब्मण्डलम् ॥१॥

### प्रत्यये च ॥१।३।२॥

पदान्तस्थस्य तृतीयस्य प्रत्ययपञ्चमे परे अनुनासिको नित्यं स्यात् । वाङ्मयम् , षण्णाम् । च उत्तरत्र वाऽनुवृत्त्यर्थः ॥२॥

### ततो हश्चतुर्थः ।१।३।३॥

पदान्तस्थात् ततः तृतीयात् परस्य हस्य पूर्वसवर्गश्चतुर्थो वा स्यात् । वाग्घीनः , वाग्हीनः । ककुब्भासः , ककुब्हासः ॥३॥

### प्रथमादधुटि शश्छः ।१।३।४॥

पदान्तस्थात् प्रथमात् परस्य शस्याधुटि परे छो वा स्यात् । वाक्छूरः , वाक्शूरः । त्रिष्टुपछ्रुतम् , त्रिष्टुप्श्रुतम् । अधुटीति किम् ? वाक् श्च्योतति ॥४॥

### रः कख-पफयोःᳵक-ᳶपौ ।१।३।५॥

पदान्तस्थस्य रेफस्य कखे पफे च परे यथासंख्यं ᳵक-ᳶपौ वा स्याताम् । कᳵकरोति , कः करोति । कᳵखनति , कः खनति । कᳶपचति , कः पचति । कᳶफलति , कः फलति ॥५॥

### श-ष-से श-ष-सं वा ।१।३।६॥

पदान्तस्थस्य रस्य श-ष-सेषु परेषु यथासंख्यं श-ष-सा वा स्युः । कश्शेते । कः शेते । कष्षण्ढः , कः षण्ढः । कस्साधुः , कः साधुः ॥६॥

### च-ट-ते सद्वितीये ।१।३।७॥

पदान्तस्थस्य रस्य च-ट-तेषु सद्वितीयेषु परेषु यथासंख्यम् श-ष-सा नित्यं स्युः । कश्चरः , कश्छन्नः , कष्टः , कष्ठः , कस्तः , कस्थः ॥७॥

### नोऽप्रशानोऽनुस्वारा-ऽनुनासिकौ च पूर्वस्याऽधुट्परे ।१।३।८॥

१. अनु° पा१ J3 विना नास्ति ॥

पदान्तस्थस्य प्रशान्वर्जशब्दसम्बन्धिनो नस्य च-ट-तेषु सद्वितीयेषु अधुट्परेषु परेषु , श-ष-सा यथासंख्यं स्युः , अनुस्वारा-ऽनुनासिकौ चाऽऽगमा-ऽऽदेशौ पूर्वस्य क्रमेण स्याताम् । भवांश्चरः , भवाँश्चरः । भवांश्छ्यति , भवाँश्छ्यति । भवांष्टकः , भवाँष्टकः । भवांष्ठकारः , भवाँष्ठकारः । भवांस्तनुः , भवाँस्तनुः । भवांस्थुडति , भवाँस्थुडति । अप्रशान इति किम् ? प्रशाञ्चरः । अधुट्पर इति किम् ? भवान् त्सरुकः ॥८॥

**पुमोऽशिट्यघोषेऽख्यागि रः ।१।३।९॥**

पुम् इति पुंम्सोः[1] संयोगलुक्यनुकरणम् , अधुट्परे अघोषे शिट्-ख्याग्वर्जे परे पुम् इत्येतस्य रः स्यात् , अनुस्वारानुनासिकौ च पूर्वस्य । पुंस्कामा , पुँस्कामा । अशिटीति किम् ? पुंशरः । अघोषे इति किम् ? पुंदासः । अख्यागीति किम् ? पुंख्यातः । अधुट्पर इत्येव-पुंक्षारः ॥९॥

**नॄनः पेषु वा ।१।३।१०॥**

नॄन् इति शसन्तस्य[2] नुरनुकरणम् । नॄनः पे परे रो वा स्यात् , अनुस्वारानुनासिकौ च पूर्वस्य । नॄंॅपाहि , नॄँॅपाहि , नॄन्पाहि ॥१०॥

**द्विः कानः कानि सः ।१।३।११॥**

**कानः** किमः शसन्तस्य द्विरुक्तस्य कानि परे सः स्यात् , अनुस्वारानुनासिकौ च पूर्वस्य । कांस्कान् , काँस्कान् । द्विरिति किम् ? कान् कान् पश्यति ॥११॥

**स्सटि समः ।१।३।१२॥**

समः स्सटि परे सः स्यात् , अनुस्वारानुनासिकौ च पूर्वस्य । संस्स्कर्त्ता , सँस्स्कर्त्ता । स्सटीति किम् ? संकृतिः ॥१२॥

**लुक् ।१।३।१३॥**

समः[3] स्सटि परे लुक् स्यात् । सस्कर्ता ॥१३॥

**तौ मु-मो व्यञ्जने स्वौ ।१।३।१४॥**

**मोर्म्वागमस्य** पदान्तस्थस्य च मस्य व्यञ्जने परे तस्यैव स्वौ तौ अनुस्वारा-ऽनुनासिकौ क्रमेण स्याताम् । चंक्रम्यते , चङ्क्रम्यते । वंवम्यते , ववँवम्यते । त्वं करोषि , त्वङ्करोषि । कंवः , कवँवः ॥१४॥

---

१. **पुंसोः** पा१ खं२,३ J3 ॥ २. **°स्य नृशब्दस्यानुक°** खं१ खसं२ । **°स्यानुक°** J3 ॥ ३. **समो मस्य स्सटि** खं१ ॥

## म-न-य-व-लपरे हे ।१।३।१५॥

म-न-य-व-लपरे हे परे पदान्तस्थस्य मस्य अनुस्वारा-ऽनुनासिकौ स्वौ क्रमेण[1] स्याताम् । किं ह्मलयति , किम्ह्मलयति । किं ह्नुते , किन्ह्नुते । किं ह्यः , कियँह्यः । किं ह्वलयति , किवँह्वलयति । किं ह्लादते , किलँह्लादते ॥१५॥

## सम्राट् ।१।३।१६॥

समो मस्य राजौ क्विबन्ते[2] अनुस्वाराभावः स्यात् । सम्राट् , सम्राजौ ॥१६॥

## ङ्-णोः क-टावन्तौ शिटि नवा ।१।३।१७॥

पदान्तस्थयोर्ङ-णयोः शिटि परे यथासंख्यं क-टावन्तौ वा स्याताम् । प्राङ्क्[3] छेते , प्राङ्क् शेते , प्राङ् शेते । सुगण्ट्[4] छेते , सुगण्ट् शेते , सुगण् शेते ॥१७॥

## ड्नः सः त्सोऽश्चः ।१।३।१८॥

पदान्तस्थाभ्यां ड-नाभ्यां परस्य सस्य त्स इति तादिः सो वा स्यात् , **अश्चः** , श्चावयवश्चेत् सो न स्यात् । षड् त्सीदन्ति , षट् सीदन्ति । भवान् त्साधुः , भवान् साधुः । अश्च इति किम् ? षट् श्च्योतन्ति , भवाञ् श्च्योतति ॥१८॥

## नः शि ञ्च् ।१।३।१९॥

पदान्तस्थस्य नस्य शे परे ञ्च् वा स्यात् , अश्चः । भवाञ्च् छूरः , भवाञ्च्[5] शूरः , भवाञ् शूरः । अश्च इत्येव-भवाञ् श्च्योतति ॥१९॥

## अतोऽति रोरुः ।१।३।२०॥

आत् परस्य पदान्तस्थस्य रोरति परे उर्नित्यं स्यात् । कोऽर्थः ॥२०॥

## घोषवति ।१।३।२१॥

आत् परस्य पदान्तस्थस्य रोर्घोषवति परे उः स्यात् । धर्मो जेता ॥२१॥

## अवर्ण-भो-भगो-ऽघोर्लुगसन्धिः ।१।३।२२॥

अवर्णाद् भो-भगो-अघोभ्यश्च परस्य पदान्तस्थस्य रोर्घोषवति परे लुक् स्यात् , स च न सन्धेर्हेतुः । देवा यान्ति , भो यासि , भगो हस , अघो वद ॥२२॥

---

१. क्रमात् पा१ पामू२ पा३ J3 ॥ २. **क्विबन्ते परे अनु°** पा१ खं३ ॥ ३. **प्राङ्क् छेते** पा२ खं२ विना नास्ति ॥ ४. **सुगण्ट् छेते** पा२ खं२ विना नास्ति ॥ ५. **भवाञ्च् शूरः** नास्ति खं३ पा१,३ ॥

## व्योः ।१।३।२३।।

अवर्णात् परयोः पदान्तस्थयोर्वययोर्घोषवति परे लुक् स्यात् , स चाऽसन्धिः । वृक्षवृश्चम् अव्ययं चाऽऽचक्षाणो वृक्षव् , अव्यय् । वृक्ष याति , अव्य याति ।।२३।।

## स्वरे वा ।१।३।२४।।

अवर्ण-भो-भगो-अघोभ्यः परयोः पदान्तस्थयोर्वययोः स्वरे परे लुग् वा स्यात् , स चाऽसन्धिः । पट इह , पटविह । वृक्षा इह , वृक्षाविह । त आहुः , तयाहुः । तस्मा इदम् , तस्मायिदम् । भो अत्र , भोयत्र । भगो अत्र , भगोयत्र । अघो अत्र , अघोयत्र ।।२४।।

## अस्पष्टाववर्णात्त्वनुञि वा ।१।३।२५।।

अवर्ण-भो-भगो-अघोभ्यः परयोः पदान्तस्थयोर्वययोः , **अस्पष्टौ** ईषत्स्पृष्टतरौ वयौ स्वरे परे स्याताम् , अवर्णात्तु परयोर्व्योरुञ्वर्जे स्वरेऽस्पष्टौ वा स्याताम् । पटवुँ , असावुँ , कयुँ , देवायुँ , भोयँत्र , भगोयँत्र , अघोयँत्र । अवर्णात्त्वनुञि वा । पटविँह , पटविह । असाविँन्दुः , असाविन्दुः , तयिँह , तयिह , तस्मायिँदम् , तस्मायिदम् ।।२५।।

## रोर्यः ।१।३।२६।।

अवर्ण-भो-भगो-अघोभ्यः परस्य पदान्तस्थस्य रोः स्वरे परे यः स्यात् । कयास्ते , देवायासते , भोयत्र , भगोयत्र , अघोयत्र ।।२६।।

## ह्रस्वान्ङ-ण-नो द्वे ।१।३।२७।।

ह्रस्वात् परेषां पदान्तस्थानां ङ-ण-नानां[1] स्वरे परे द्वे रूपे स्याताम् । क्रुङ्ङास्ते , सुगण्णिह , कृषन्नास्ते ।।२७।।

## अनाङ्-माङो दीर्घाद् वा छः ।१।३।२८।।

आङ्-माङ्वर्जपदस्थाद् दीर्घात् पदान्तस्थात् परस्य छस्य द्वे रूपे वा स्याताम् । कन्याच्छत्रम् , कन्याछत्रम् । अनाङ्माङ[2] इति किम् ? आच्छाया , माच्छिदत् ।।२८।।

## प्लुताद् वा ।१।३।२९।।

१. ङ-ण-नां खंमू१, खं३ ।। २. °माङिति पा२,३, खं२ विना ।।

पदान्तस्थाद् दीर्घस्थात्[1] प्लुतात् परस्य छस्य द्वे रूपे वा स्याताम् । आगच्छ भो इन्द्रभूते ३ च्छत्रमानय , पक्षे छत्रमानय ॥२९॥

**स्वरेभ्यः ।१।३।३०॥**

स्वरात् परस्य छस्य द्वे रूपे स्याताम् । इच्छति , गच्छति ॥३०॥

**र्हादर्ह-स्वरस्याऽनु नवा ।१।३।३१॥**

स्वरात् पराभ्यां रहाभ्यां परस्य र-ह-स्वरवर्जस्य वर्णस्य द्वे रूपे वा स्याताम् , **अनु** कार्यान्तरात् पश्चात् । अर्क्कः , अर्कः । ब्रह्म्म , ब्रह्म । अर्ह-स्वरस्येति किम् ? पद्मह्रदः , अर्हः , करः । स्वरेभ्य इत्येव-अभ्रचते । अन्विति किम् ? प्रोर्ण्णुनाव ॥३१॥

**अदीर्घाद् विरामैकव्यञ्जने ।१।३।३२॥**

अदीर्घात् स्वरात् परस्य र-ह-स्वरवर्जस्य वर्णस्य विरामे असंयुक्तव्यञ्जने च परेऽनु द्वे रूपे वा स्याताम् । त्वक्क् , त्वक् । दद्ध्यत्र , दध्यत्र । गो ३ त्त्रात , गो३त्रात । अर्हस्वरस्येत्येव -वर्या , वह्मम् , तितउ ॥३२॥

**अञ्वर्गस्यान्तस्थातः ।१।३।३३॥**

अन्तस्थातः परस्य ञ्वर्जवर्गस्याऽनु द्वे रूपे वा स्याताम् । उल्क्का , उल्का । अञिति किम् ? हल्ञौ ॥३३॥

**ततोऽस्याः ।१।३।३४॥**

**ततो**ऽञ्वर्गात् परस्या **अस्या** अन्तस्थाया द्वे रूपे वा स्याताम् । दध्य्यत्र , दध्यत्र ॥३४॥

**शिटः प्रथम-द्वितीयस्य ।१।३।३५॥**

शिटः परयोः प्रथम-द्वितीययोर्द्वे रूपे वा स्याताम् । त्वं क्करोषि , त्वं करोषि । त्वं क्खनसि , त्वं खनसि ॥३५॥

**ततः शिटः ।१।३।३६॥**

**ततः** प्रथम-द्वितीयाभ्यां परस्य शिटो द्वे रूपे वा स्याताम् । तच् श्शेते , तच् शेते ॥३६॥

**न रात् स्वरे ।१।३।३७॥**

१. दीर्घात् J3 । ''दीर्घस्थानात्'' इति बृहद्वृत्तौ ॥

रात् परस्य शिटः स्वरे परे द्वे रूपे न स्याताम् । दर्शनम् ॥३७॥

**पुत्रस्याऽऽदिन्-पुत्रादिन्याक्रोशे ।१।३।३८॥**

आदिनि पुत्रादिनि च परे पुत्रस्थस्य तस्य आक्रोशविषये द्वे रूपे न स्याताम् । पुत्रादिनी त्वमसि पापे !, पुत्रपुत्रादिनी भव । आक्रोश इति किम् ? पुत्त्रादिनी शिशुमारी, पुत्रादिनीति वा । पुत्त्रपुत्रादिनी नागी, पुत्रपुत्रादिनीति वा ॥३८॥

**म्रां धुड्वर्गेऽन्त्योऽपदान्ते ।१।३।३९॥**

अपदान्तस्थानां म-नानां धुटि वर्गे परे निमित्तस्यैवान्त्योऽनु स्यात् । गन्ता शङ्किता, कम्पिता । धुडिति किम् ? आहन्महे । धुड्वर्ग इति किम् ? गम्यते । अपदान्त इति किम् ? भवान् करोति ॥३९॥

**शिड्-हेऽनुस्वारः ।१।३।४०॥**

अपदान्तस्थानां म्रां शिटि हे च परेऽनुस्वारोऽनु स्यात् । पुंसि, दंशः, बृंहणम् ॥४०॥

**रो रे लुग् दीर्घश्चाऽदिदुतः ।१।३।४१॥**

रस्य रे परेऽनु लुक् स्यात्, अ-इ-ऊनाञ्च दीर्घः । पुना रात्रिः, अग्नी रथेन, पटू राजा ॥४१॥

**ढस्तड्ढे ।१।३।४२॥**

तन्निमित्ते ढे परे ढस्याऽनु लुक् स्यात्, दीर्घश्चादिदुतः । माढिः, लीढम्, गूढम् । तड्ढ इति किम् ? मधुलिड् ढौकते ॥४२॥

**सहि-वहेरोच्चाऽवर्णस्य ।१।३।४३॥**

सहि-वह्योर्ढस्य तड्ढे परेऽनु लुक् स्यात्, ओच्चाऽवर्णस्य । सोढा, वोढा, उदवोढाम् ॥४३॥

**उदः स्था-स्तम्भः सः ।१।३।४४॥**

उदः परयोः स्था-स्तम्भोः सस्य लुक् स्यात् । उत्थाता, उत्तम्भिता ॥४४॥

**तदः सेः स्वरे पादार्था ।१।३।४५॥**

तदः परस्य सेः स्वरे परे लुक् स्यात्, सा चेत् पादपूरणी स्यात् । सैष दाशरथी रामः । पादार्था इति किम् ? स एष भरतो राजा । ॥४५॥

**एतदश्च व्यञ्जनेऽनग्-नञ्समासे ।१।३।४६॥**

एतदस्तदश्च परस्य सेर्व्यञ्जने परे लुक् स्यात् , अकि नञ्समासे च न । एष दत्ते , स लाति । अनग्नञ्समास इति किम् ? एषकः कृती , सको याति , अनेषो याति , असो वाति ॥४६॥

**व्यञ्जनात् पञ्चमा-ऽन्तस्थायाः सरूपे वा ।१।३।४७॥**

व्यञ्जनात् परस्य पञ्चमस्याऽन्तस्थायाश्च सरूपे वर्णे परे लुग् वा स्यात् । क्रुञ्चो ङ्ङौ क्रुङ्ङौ , क्रुङ्ङ्ङौ । आदित्यो देवताऽस्य- आदित्यः , आदित्य्यः । सरूप इति किम् ? वर्ण्यते ॥४७॥

**धुटो धुटि स्वे वा ।१।३।४८॥**

व्यञ्जनात् परस्य धुटो धुटि स्वे परे लुग् वा स्यात् । शिण्ढि[1] , शिण्ड्ढि । स्व इति किम् ? तर्प्ता , दर्प्ता ॥४८॥

**तृतीयस्तृतीय-चतुर्थे ।१।३।४९॥**

तृतीये चतुर्थे च परे धुटस्तृतीयः स्यात् । मज्जति , दोग्धा ॥४९॥

**अघोषे प्रथमोऽशिटः ।१।३।५०॥**

अघोषे परे शिड्वर्जस्य धुटः प्रथमः स्यात् । वाक्पूता । अशिट इति किम् ? पयस्सु ॥५०॥

**विरामे वा ॥१।३।५१॥**

विरामस्थस्याऽशिटो धुटः प्रथमो वा स्यात् । वाक् , वाग् ॥५१॥

**न सन्धिः ।१।३।५२॥**

उक्तो वक्ष्यमाणश्च सन्धिर्विरामे न स्यात् । दधि अत्र , तद् लुनाति ॥५२॥

**रः पदान्ते विसर्गस्तयोः ।१।३।५३॥**

पदान्तस्थस्य रस्य तयोर्विरामाघोषयोर्विसर्गः स्यात् । वृक्षः , स्वः , कः कृती । पदान्त इति किम् ? ईर्त्ते ॥५३॥

**ख्यागि ।१।३।५४॥**

पदान्तस्थस्य रस्य ख्यागि परे विसर्ग एव स्यात् । कः ख्यातः । नमः ख्यात्रे ॥५४॥

---

१. शिण्ढि शिण्ड्ढि पिण्ढि पिण्ड्ढि पा१ J3 ॥

## शिट्यघोषात् ।१।३।५५।।

अघोषात् परे शिटि परतः पदान्तस्थस्य रस्य विसर्ग एव स्यात् । पुरुषः त्सरुकः , सर्पिः प्साति , वासः क्षौमम् , अद्भिः प्सातम् ।।५५।।

## व्यत्यये लुग् वा ।१।३।५६।।

शिटः परोऽघोष इति व्यत्ययस्तस्मिन्सति पदान्तस्थस्य रस्य लुग् वा स्यात् । चक्षु श्च्योतति , चक्षुः श्च्योतति ।।५६।।

## अरोः सुपि रः ।१।३।५७।।

रोरन्यस्य रस्य सुपि परे र एव स्यात् । गीर्षु , धूर्षु । अरोरिति किम् ? पयस्सु ।।५७।।

## वाऽहर्पत्यादयः ।१।३।५८।।

अहर्पत्यादयो यथायोगमकृतविसर्गाः कृतोत्वाभावाश्च वा स्युः । अहर्पतिः , अहःपतिः ; गीर्पतिः , गीःपतिः ; प्रचेता राजन् ! , प्रचेतो राजन् ! ।।५८।।

## शिट्याद्यस्य द्वितीयो वा ।१।३।५९।।

प्रथमस्य शिटि परे द्वितीयो वा स्यात् । ख्षीरम् , क्षीरम् । अफ्सराः , अप्सराः ।।५९।।

## तवर्गस्य श्चवर्ग-ष्टवर्गाभ्यां योगे च-टवर्गौ ।१।३।६०।।

तवर्गस्य श-चवर्गाभ्यां ष-टवर्गाभ्यां च योगे यथासंख्यं चवर्ग-टवर्गौ स्याताम् । तच् शेते , भवाञ् शेते , तच्चारु , तञ्ञकारे[1] , पेष्टा , पूष्णः , तट्टके , तण्णकारे[2] , ईट्टे ।।६०।।

## सस्य श-षौ ।१।३।६१।।

सस्य श्चवर्ग-ष्टवर्गाभ्यां योगे यथासंख्यं श-षौ स्याताम् । चवर्गेण-श्च्योतति , वृश्चति । षेण- दोष्षु । टवर्गेण- पापट्षि ।।६१।।

## न शात् ।१।३।६२।।

शात् परस्य तवर्गस्य चवर्गो न स्यात् । अश्नाति , प्रश्नः ।।६२।।

१. तञ्ञकारेण खं१ पा३ J3 ।। २. तण्णकारेण खं१ ।।

**पदान्ताट्टवर्गादनाम्-नगरी-नवतेः ।१।३।६३॥**

पदान्तस्थाट्टवर्गात् परस्य नाम्-नगरी-नवतिवर्जस्थस्य तवर्गस्य सस्य च टवर्ग-षौ न स्याताम् । षट्तयम् , षण्नयाः , षट्सु । अनाम्-नगरी-नवतेरिति किम् ? षण्णाम् , षण्णगरी , षण्णवतिः ॥६३॥

**षि तवर्गस्य ।१।३।६४॥**

पदान्तस्थस्य तवर्गस्य षे परे टवर्गो न स्यात् । तीर्थकृत् षोडशः शान्तिः ॥६४॥

**लि लौ ।१।३।६५॥**

पदान्तस्थस्य तवर्गस्य ले परे लौ स्याताम् । तल्लूनम् , भवाल्लुँनाति ॥६५॥

[इत्याचार्यश्री**हेमचन्द्र**विरचितायां
**सिद्धहेमचन्द्रा**भिधानस्वोपज्ञशब्दानुशासनलघुवृत्तौ]
प्रथमस्याध्यायस्य तृतीयः पादः समाप्तः[1] ॥१।३॥

चक्रे[2] श्री**मूलराजेन** नवः कोऽपि यशोऽर्णवः ।
परकीर्तिस्रवन्तीनां न प्रवेशमदत्त यः ॥३॥

---

१. **समाप्तः** खं३ विना नास्ति ॥ २. प्रा० पा१-२ मध्ये एव बृहद्वृत्तौ च श्लोकोऽयमस्ति ॥

## [चतुर्थः पादः ]

### अत आः स्यादौ जस्-भ्याम्-ये ।१।४।१॥

स्यादौ जसि भ्यामि ये च परेऽकारस्य आः स्यात् । देवाः , आभ्याम् , सुखाय । स्यादाविति किम् ? बाणान् जस्यतीति[1] क्विप्-बाणजः ॥१॥

### भिस ऐस् ।१।४।२॥

आत् परस्य स्यादेर्भिस ऐस् स्यात् । देवैः । ऐस्करणाद् अतिजरसैः ॥२॥

### इदमदसोऽक्येव ।१।४।३॥

इदमदसोरक्येव सति आत् परस्य भिस ऐस् स्यात् । इमकैः , अमुकैः । अक्येवेति किम् ? एभिः , अमीभिः ॥३॥

### एद् बहुस्भोसि ।१।४।४॥

बह्वर्थे स्यादौ सादौ भादौ ओसि च परे अत एत् स्यात् । एषु , एभिः , देवयोः ॥४॥

### टा-ङसोरिन-स्यौ ।१।४।५॥

आत् परयोष्टा-ङसोर्यथासंख्यम् इन-स्यौ स्याताम् । तेन , यस्य ॥५॥

### ङे-ङस्योर्या-ऽऽतौ ।१।४।६॥

आत् परस्य ङेर्ङसेश्च यथासंख्यम् य आच्च स्याताम् । देवाय , देवात् ॥६॥

### सर्वादेः स्मै-स्मातौ ।१।४।७॥

सर्वादिरदन्तस्य सम्बन्धिनोर्ङे-ङस्योर्यथासंख्यम् स्मै-स्मातौ स्याताम् । सर्वस्मै , सर्वस्मात्[2] । सर्व , विश्व , उभ , उभयट् , अन्य , अन्यतर , इतर , डतर , डतम , त्व , त्वत् , नेम , सम-सिमौ सर्वार्थौ , पूर्व-परा-ऽवर-दक्षिणोत्तरा-ऽपरा-ऽधराणि व्यवस्थायाम् , स्वम् अज्ञाति-धनाख्यायाम् , अन्तरं बहिर्योगो-पसंव्यानयोरपुरि , त्यद् , तद् , यद् , अदस् , इदम् , एतद् , एक , द्वि , युष्मद्[3] , भवतु , अस्मद् , किम् , इत्यसंज्ञायां सर्वादिः ॥७॥

---

१. जस्यति क्विप् खं२,३ ॥ २. °स्मात् विश्वस्मै विश्वस्मात् पा१ खं१ ॥ ३. युस्मद् अस्मद् भवतु पा३ । सिद्धहेमचन्द्रशब्दानुशासनबृहद्वृत्ति-मध्यमवृत्ती मलयगिरिशब्दानुशासनं च विना पाणिनीय-शाकटायन-जैनेन्द्र-चान्द्रव्याकरणेषु अपि 'युष्मद् अस्मद् भवत्' इत्येव क्रम इति ध्येयम् ॥

**ङेः स्मिन् ॥१।४।८॥**

सर्वादिरदन्तस्य ङेः स्मिन् स्यात् । सर्वस्मिन् ॥८॥

**जस इः ।१।४।९॥**

सर्वादिरदन्तस्य जस इः स्यात् । सर्वे ॥९॥

**नेमा-ऽर्द्ध-प्रथम-चरम-तया-ऽया-ऽल्प-कतिपयस्य वा ।१।४।१०॥**

नेमादीनि नामानि , तयायौ प्रत्ययौ , तेषामदन्तानां जस इर्वा स्यात् । नेमे , नेमाः । अर्द्धे , अर्द्धाः । प्रथमे , प्रथमाः । चरमे , चरमाः । द्वितये , द्वितयाः । त्रये , त्रयाः । अल्पे , अल्पाः । कतिपये , कतिपयाः ॥१०॥

**द्वन्द्वे वा ।१।४।११॥**

द्वन्द्वसमासस्थस्याऽदन्तस्य सर्वादिर्जस इर्वा स्यात् । पूर्वोत्तरे , पूर्वोत्तराः ॥११॥

**न सर्वादिः ।१।४।१२॥**

द्वन्द्वे सर्वादिः सर्वादिर्न स्यात् । पूर्वापराय , पूर्वापरात् , पूर्वापरे । कतरकतमानाम् , कतरकतमकाः ॥१२॥

**तृतीयान्तात् पूर्वा-ऽवरं योगे ।१।४।१३॥**

तृतीयान्तात् परौ पूर्वा-ऽवरौ **योगे** सम्बन्धे सति सर्वादी न स्याताम् । मासेन पूर्वाय , मासपूर्वाय । दिनेनाऽवराय , दिनावराय । दिनेनाऽवराः , दिनाऽवराः । तृतीयान्तादिति किम् ? पूर्वस्मै मासेन ॥१३॥

**तीयं ङित्कार्ये वा ।१।४।१४॥**

तीयान्तं नाम ङे-ङसि-ङस्-ङीनां कार्ये सर्वादिर्वा[1] स्यात् । द्वितीयस्मै , द्वितीयाय । द्वितीयस्यै , द्वितीयायै । ङित्कार्य इति किम् ? द्वितीयकाय ॥१४॥

**अवर्णस्याऽऽमः साम् ।१।४।१५॥**

अवर्णान्तस्य सर्वादेरामः साम् स्यात् । सर्वेषाम् , विश्वासाम् ॥१५॥

**नवभ्यः पूर्वेभ्य इ-स्मात्-स्मिन् वा ।१।४।१६॥**

पूर्वादिभ्यो नवभ्यो ये इ-स्मात्-स्मिनो यथास्थानमुक्तास्ते वा स्युः । पूर्वे

१. सर्वादि वा खंर ॥

, पूर्वाः । पूर्वस्मात् , पूर्वात् । पूर्वस्मिन् , पूर्वे इत्यादि । नवभ्य इति किम् ? त्ये ॥१६॥

## आपो ङितां यै-यास्-यास्-याम् ।१।४।१७॥

आबन्तस्य **ङिताम्** ङे-ङसि-ङस्-ङीनां यथासंख्यम् यै-यास्-यास्-यामः स्युः । खट्वायै , खट्वायाः , खट्वायाः , खट्वायाम् ॥१७॥

## सर्वादेर्डस्पूर्वाः ।१।४।१८॥

सर्वादेराबन्तस्य ङिताम् यै-यास्-यास्-यामस्ते डस्पूर्वाः स्युः । सर्वस्यै , सर्वस्याः , सर्वस्याः , सर्वस्याम् ॥१८॥

## टौस्येत् ।१।४।१९॥

आबन्तस्य टौसोः परयोरेकारः स्यात् । बहुराजया , बहुराजयोः ॥१९॥

## औता ।१।४।२०॥

आबन्तस्य औता सहैकारः स्यात् । माले स्तः पश्य वा ॥२०॥

## इदुतोऽस्त्रेरीदूत् ।१।४।२१॥

स्त्रेरन्यस्येदन्तस्योदन्तस्य च औता सह यथासंख्यम् ईदूतौ स्याताम् । मुनी , साधू । अस्त्रेरिति किम् ? अतिस्त्रियौ नरौ ॥२१॥

## जस्येदोत् ।१।४।२२॥

इदुदन्तयोर्जसि परे यथासंख्यम् एदोतौ स्याताम् । मुनयः , साधवः ॥२२॥

## ङित्यदिति ।१।४।२३॥

अदिति ङिति स्यादौ परे , इदुदन्तयोर्यथासंख्यम् एदोतौ स्याताम् । अतिस्त्रये साधवे । अतिस्त्रेः साधोरागतं स्वं वा । अदितीति किम् ? बुद्ध्याः , धेन्वाः । स्यादावित्येव-शुची स्त्री ॥२३॥

## टः पुंसि ना ।१।४।२४॥

पुंवृत्तेरिदुदन्तात्[1] परस्याष्टाया ना स्यात् । अतिस्त्रिणा , अमुना । पुंसीति किम् ? बुद्ध्या ॥२४॥

१. पा१ J3 विना— **इदुदन्तात् परस्याः पुंवृत्तेष्टाया** पा२ । **इदुदन्तात् परस्याः पुंविषयाटाया (यायाष्टाया** खंसं१) खं१ । **इदुदन्तात् परस्याः पुंविषये टाया** खं३ । **इदुदन्तात् परस्याः पुंविष[ये** खंसं२] **टाया** खं२ ॥

**ङिर्डौ ।१।४।२५।।**

इदुदन्तात् परो ङिर्डौ स्यात् । मुनौ , धेनौ । अदिदित्येव-बुद्धयाम् ।।२५।।

**केवलसखिपतेरौ ।१।४।२६।।**

केवलसखिपतिभ्यामिदन्ताभ्यां परो ङि[१]रौ स्यात् । सख्यौ , पत्यौ । इत इत्येव-स[२]खायमिच्छति सख्यि । केवलेति किम् ? प्रियसखौ , नरपतौ ।।२६।।

**न ना ङिदेत् ।१।४।२७।।**

केवलसखिपतेर्यष्टाया ना , ङिति परे एच्चोक्तः , स न स्यात् । सख्या , पत्या । सख्ये , पत्ये । सख्युः पत्युः आगतं स्वं वा । सख्यौ , पत्यौ । ङिदिति किम् ? पतयः ।।२७।।

**स्त्रिया ङितां वा दै-दास्-दास्-दाम् ।१।४।२८।।**

स्त्रीलिङ्गादिदुदन्तात् परेषां **ङिताम्** ङे-ङसि-ङस्-ङीनां यथासंख्यं दै-दास्-दास्-दामो वा स्युः । बुद्ध्यै , बुद्धये । बुद्ध्याः बुद्धेः आगतं स्वं वा , बुद्ध्याम् , बुद्धौ । धेन्वै , धेनवे , धेन्वाः, धेनोः, धेन्वाम् , धेनौ । प्रियबुद्ध्यै , प्रियबुद्धये पुंसे स्त्रि[३]यै वा ।।२८।।

**स्त्रीदूतः ।१।४।२९।।**

नित्यं स्त्रीलिङ्गादीदन्तादूदन्ताच्च परेषां स्यादेर्ङितां यथासंख्यं दै-दास्-दास्-दामः स्युः । नद्यै, नद्याः , नद्याः , नद्याम् । कुर्व्यै , कुर्व्याः , कुर्व्याः , कुर्व्याम् । अतिलक्ष्म्यै पुंसे स्त्रियै वा । स्त्रीति किम् ? ग्रामण्ये खलप्वे स्त्रियै ।।२९।।

**वेयुवोऽस्त्रियाः ।१।४।३०।।**

इ[४]युवोः स्थानिनौ यौ स्त्रीदूतौ तदन्तात् स्त्रीवर्जात् परेषां स्यादेर्ङितां यथासंख्यं दै-दास्-दास्-दामो वा स्युः । श्रियै , श्रिये; श्रियाः , श्रियः ; श्रियाः , श्रियः ; श्रियाम् , श्रियि । अतिश्रियै , अतिश्रिये पुंसे स्त्रियै वा । भ्रुवै , भ्रुवे ; भ्रुवाः , भ्रुवः ; भ्रुवाः , भ्रुवः ; भ्रुवाम् , भ्रुवि । अतिभ्रुवै अतिभ्रुवे पुंसे स्त्रियै वा । इयुव इति किम् ? आध्यै । अस्त्रिया इति किम् ? स्त्रियै ।।३०।।

१. ङिरौः खं२, पा३ ।। २. सप्तम्यन्तम् । **'सखायमिच्छति क्यनि दीर्घत्वे सखीयतीति क्विपि 'य्वोः प्वय्व्यञ्जने [४।४।१२१] इति सूत्रेण यलोपे सखी , सख्यि । एवं पत्यि । केवलग्रहणं किम्'** J3 ।। ३. **स्त्रियै वा** पा१ J3 विना नास्ति ।। ४. **इयुवृस्थानिनौ** खं१,३ J3 ।।

## आमो नाम् वा ।१।४।३१॥

[1]इयुवोः स्थानिभ्यां स्त्रीदूदन्ताभ्यां परस्य आमो नाम् वा स्यात् , न तु स्त्रियाः । श्रीणाम् , श्रियाम् । भ्रूणाम् , भ्रुवाम् । अतिश्रीणाम् , अतिश्रियाम् , अतिभ्रूणाम् अतिभ्रुवाम् नृणां स्त्रीणां वा । इयुव इत्येव-प्रधीनाम् ॥३१॥

## ह्रस्वाऽऽपश्च ।१।४।३२॥

ह्रस्वान्तादाबन्तात् स्त्रीदूदन्ताच्च परस्याऽऽमो नाम् स्यात् । देवानाम् , मालानाम् , स्त्रीणाम् , वधूनाम् ॥३२॥

## संख्यानां र्ष्णाम् ।१।४।३३॥

र-ष-नान्तानां संख्यावाचिनामामो नाम् स्यात् । चतुर्णाम् , षण्णाम् , [2]पञ्चानाम् , अष्टानाम् ॥३३॥

## त्रेस्त्रयः ।१।४।३४॥

आमः सम्बन्धिनस्त्रेस्त्रयः स्यात् । त्रयाणाम् , [3]परमत्रयाणाम् ॥३४॥

## एदोद्भ्यां ङसि-ङसो रः ।१।४।३५॥

एदोद्भ्यां परयोः प्रत्येकं ङसि-ङसो रः स्यात् । मुनेः , मुनेः । धेनोः , धेनोः । गोः , गोः । द्योः , द्योः ॥३५॥

## खि-ति-खी-तीय उर् ।१।४।३६॥

खि-ति-खी-[4]तीसम्बन्धिनो यात् परयोर्ङसिङसोरुर् स्यात् । सख्युः , सख्युः । पत्युः , पत्युः । सखायं पतिं चेच्छतः सख्युः , सख्युः , पत्युः , पत्युः । य इति किम् ? अतिसखेः , अधिपतेः ॥३६॥

## ऋतो डुर् ।१।४।३७॥

ऋतः परयोः ङसि-ङसोर्डुर् स्यात् । पितुः , पितुः ॥३७॥

## तृ-स्वसृ-नप्तृ-नेष्टृ-त्वष्टृ-क्षत्तृ-होतृ-पोतृ-प्रशास्त्रो घुट्यार् ।१।४।३८॥

तृच्-तृन्नन्तस्य स्वस्रादीनां च ऋतो घुटि परे आर् स्यात् । [5]कर्त्तारम् , कर्त्तारौ , कर्त्तारः । स्वसारम् , नप्तारम् , नेष्टारम् , त्वष्टारम् , क्षत्तारम् , होतारम् , पोतारम् , प्रशास्तारम् । घुटीति किम् ? कर्तृ कुलं पश्य ॥३८॥

---

१. इयुवृस्थानिभ्यां पा२ ॥ २. पञ्चानां सप्तानाम् अष्टानाम् खं३ ॥ ३. परमत्रयाणाम् खं१,३ पा१,३ मध्ये नास्ति ॥ ४. °तीनां सम्ब° खं१ ॥ ५. कर्त्तारः कर्त्तारौ कर्त्तारम् पा१ ॥

**अर्डौ च ।१।४।३९।।**

ऋतो ङौ घुटि च परे अर् स्यात् । नरि , नरम् ।।३९।।

**मातुर्मातः पुत्रेऽर्हे सिनाऽऽमन्त्ये ।१।४।४०।।**

मातुरामन्त्ये पुत्रे वर्त्तमानस्य सिना सह मातः स्यात् , **अर्हे** प्रशंसायाम् । हे गार्गीमात ! । पुत्र इति किम् ? हे मातः ! , हे गार्गीमातृके वत्से ! । अर्ह इति किम् ? अरे गार्गीमातृक ! ।।४०।।

**ह्रस्वस्य गुणः ।१।४।४१।।**

आमन्त्र्यार्थवृत्तेर्ह्रस्वान्तस्य सिना सह गुणः स्यात् । हे पितः ! , हे मुने ! ।।४१।।

**एदापः ।१।४।४२।।**

आमन्त्र्यार्थवृत्तेराबन्तस्य सिना सह एत् स्यात् । हे माले ! , हे बहुराजे ! ।।४२।।

**नित्यदिद्-द्विस्वराऽम्बार्थस्य ह्रस्वः ।१।४।४३।।**

नित्यं दिद् दै-दास्-दास्-दामादेशो येभ्यस्तेषां द्विस्वराम्बार्थानां चाऽऽबन्तानामामन्त्र्यवृत्तीनां सिना सह ह्रस्वः स्यात् । हे स्त्रि ! हे लक्ष्मि ! हे श्वश्रु ! हे वधु ! हे अम्ब ! हे अक्क ! । नित्यदिदिति किम् ? हे हूहूः ! । द्विस्वरेति किम् ? हे अम्बाडे ! । आप इत्येव-हे मातः ! ।।४३।।

**अदेतः स्यमोर्लुक् ।१।४।४४।।**

अदन्ताद् एदन्ताच्च आमन्त्र्यवृत्तेः[१] परस्य सेरमश्च लुक् स्यात् । हे देव ! , हे उपकुम्भ ! , हे अतिहे ! ।।४४।।

**दीर्घङ्याब्-व्यञ्जनात् सेः ।१।४।४५।।**

दीर्घङ्याबन्ताभ्यां व्यञ्जनाच्च परस्य सेर्लुक् स्यात् । नदी । माला । राजा । दीर्घेति किम् ? निष्कौशाम्बिः , अतिखट्वः ।।४५।।

**समानादमोऽतः ।१।४।४६।।**

समानात् परस्याऽमोऽस्य लुक् स्यात् । देवम् , मालाम् , मुनिम् , नदीम् , साधुम् , वधूम् ।।४६।।

१. वृत्तेः विहितस्य सेरमश्च खं१,३, पा२ ।।

## दीर्घो नाम्यतिसृ-चतसृ-ष्रः ।१।४।४७।।

तिसृ-चतसृ-ष-रान्तवर्जस्य समानस्य नामि परे दीर्घः स्यात् । वनानाम् , मुनीनाम् , साधूनाम् , पितॄणाम् । अतिसृ-चतसृ-ष्र इति किम् ? तिसृणाम् , चतसृणाम् , षण्णाम् , चतुर्णाम् ।।४७।।

## नुर्वा ।१।४।४८।।

नुः समानस्य नामि परे दीर्घो वा स्यात् । नृणाम् , नॄणाम् ।।४८।।

## शसोऽता सश्च नः पुंसि ।१।४।४९।।

शसोऽता सह पूर्वसमानस्य दीर्घः स्यात् , तत्सन्नियोगे च पुंसि शसः सो नः । देवान् , मुनीन् , वातप्रमीन् , साधून् , हूहून् , पितॄन् । पुंसीति किम् ? शालाः ।।४९।।

## संख्या-साय-वेरह्नस्याऽहन् ङौ वा ।१।४।५०।।

संख्यावाचिभ्यः साय-विभ्यां च परस्याऽह्नस्य ङौ परेऽहन् वा स्यात् । द्व्यह्नि , द्व्यहनि , द्व्यह्ने । सायाह्नि , सायाहनि , सायाह्ने । व्यह्नि , व्यहनि , व्यह्ने ।।५०।।

## निय आम् ।१।४।५१।।

नियः परस्य ङेराम् स्यात् । नियाम् । ग्रामण्याम् ।।५१।।

## वाष्टन आः स्यादौ ।१।४।५२।।

अष्टनः स्यादौ परे आ वा स्यात् । अष्टाभिः , अष्टभिः । प्रियाष्टाः , प्रियाष्टा ।। ।।५२।।

## अष्ट औ जस्-शसोः ।१।४।५३।।

अष्टनः कृताऽऽत्वस्य जस्-शसोरौ[1] स्यात् । अष्टौ , अष्टौ ।।५३।।

## डति-ष्णः संख्याया लुप् ।१।४।५४।।

डति-ष-नान्तानां सं[2]ख्यानां जस्-शसोर्लुप् स्यात् । कति , कति । षट् , षट् । पञ्च , पञ्च ।।५४।।

## नपुंसकस्य शिः ।१।४।५५।।

१. रौः खं१ पा२ J3 ।। २. संख्यावाचिनां पा१ J3 ।।

नपुंसकस्य जस्-शसोः शिः स्यात् । कुण्डानि , पयांसि ॥५५॥

**औरी ।१।४।५६॥**

नपुंसकस्य औरीः स्यात् । कुण्डे । पयसी ॥५६॥

**अतः स्यमोऽम् ।१।४।५७॥**

अदन्तस्य नपुंसकस्य स्यमोरम् स्यात् । कुण्डम् , हे कुण्ड ! ॥५७॥

**पञ्चतोऽन्यादेरनेकतरस्य दः ।१।४।५८॥**

पञ्चपरिमाणस्य नपुंसकस्याऽन्यादेः स्यमोर्दः स्यात् , एकतरवर्जम् । अन्यत् , अन्यतरत् , इतरत् , कतरत् , कतमत् । अनेकतरस्येति किम् ? एकतरम् ॥५८॥

**अनतो लुप् ।१।४।५९॥**

अनकारान्तस्य नपुंसकस्य स्यमोर्लुप् स्यात् । कर्तृ , पयः ॥५९॥

**जरसो वा ।१।४।६०॥**

जरसन्तस्य नपुंसकस्य स्यमोर्लुब् वा स्यात् । अतिजरः , अतिजरसम् ॥६०॥

**नामिनो लुग् वा ।१।४।६१॥**

नाम्यन्तस्य नपुंसकस्य स्यमोर्लुग् वा स्यात् । हे वारे ! , हे वारि ! । प्रियतिसृ , प्रियत्रि कुलम् ॥६१॥

**वाऽन्यतः पुमांष्टादौ स्वरे ।१।४।६२।**

**अन्यतो** विशेष्यवशान्नपुंसको नाम्यन्तष्टादौ स्वरे परे पुंवद् वा स्यात् । ग्रामण्या ग्रामणिना कुलेन ; कर्त्रोः कर्तृणोः कुलयोः । अन्यत इति किम् ? पीलुने फलाय । टादाविति किम् ? शुचिनी कुले । नपुंसकस्येत्येव[2]-कल्याण्यै स्त्रियै ॥६२॥

**दध्यस्थिसक्थ्यक्ष्णोऽन्तस्याऽन् ।१।४।६३॥**

एषां नपुंसकानां नाम्यन्तानामन्तस्य टादौ स्वरे परे अन् स्यात् । दध्ना , अतिदध्ना । अस्थ्ना , अत्यस्थ्ना । सक्थ्ना , अतिसक्थ्ना । अक्ष्णा , अत्यक्ष्णा ॥६३॥

---

१. **औरीः** केषुचिल्लघुवृत्त्यादर्शेषु ॥ २. **नपुंसक इत्येव** J3 बृहद्वृत्तौ च । "**वान्यत** इत्यादि । **नामिन** इति वर्तते , तद् यथा **नपुंसकस्य** विशेषणं तथाऽ**न्यत** इत्यपि, तच्च षष्ठ्यन्तमपि अर्थवशात् प्रथमान्ततया विपरिणम्यत इत्याह **यो नाम्यन्त** इत्यादि" इति शब्दमहार्णवन्यासे ॥

## अनाम्स्वरे नोऽन्तः ।१।४।६४॥

नाम्यन्तस्य नपुंसकस्याऽऽम्वर्जे स्यादौ स्वरे परे नोऽन्तः स्यात् । वारिणी , वारिणः । कर्तृणी[1] , प्रियतिसृणः । अनामिति किम् ? वारीणाम् । स्वर इति किम् ? हे वारे ! । स्यादावित्येव-तौम्बुरवं चूर्णम् ।।६४।।

## स्वराच्छौ ।१।४।६५॥

शौ परे स्वरान्तान्नपुंसकात् परो नोऽन्तः स्यात् । कुण्डानि । स्वरादिति किम् ? चत्वारि ।।६५।।

## धुटां प्राक् ।१।४।६६॥

स्वरात् परा या धुड्जातिस्तदन्तस्य नपुंसकस्य शौ परे धुड्भ्य एव प्राग् नोऽन्तः स्यात् । पयांसि , अतिजरांसि , का[2]ष्ठत्वङ्क्षि । स्वरादित्येव-गोमन्ति ।।६६।।

## र्लो वा ।१।४।६७॥

र-लाभ्यां परा या धुड्जातिस्तदन्तस्य नपुंसकस्य शौ परे धुटः प्राक् नोऽन्तो वा स्यात् । बहूर्न्जि , बहूर्जि । सुवल्ङ्गि , सुवल्गि । र्ल इति किम् ? का[3]ष्ठत्वङ्क्षि । धुटामित्येव-सुफुल्लि ।।६७।।

## घुटि ।१।४।६८॥

निमित्तविशेषोपादानं विना आ पादपरिसमाप्तेर्यत् कार्यं वक्ष्यते तद् घुटि वेदितव्यम् ।।६८।।

## अचः ।१।४।६९॥

अञ्चतेर्धातोर्धुडन्तस्य धुटः प्राक् नोऽन्तो घुटि स्यात् । प्राङ् , अतिप्राङ् , प्राञ्चौ । प्राञ्चि कुलानि ।।६९।।

## ऋदुदितः ।१।४।७०॥

ऋदुदितो धुडन्तस्य घुटि परे धुटः प्राक् स्वरात् परो नोऽन्तः स्यात् । कुर्वन् , विद्वान् , गो[4]मान् । घुटीत्येव-गोमता ।।७०।।

## युज्रोऽसमासे ।१।४।७१॥

१. कर्तृणी कर्त्तृणः प्रिय॰ खं१ ॥ २. काष्ठतङ्क्षि J3 बृहद्वृत्तौ च । "तक्षौ त्वक्षौ तनूकरणे" हैमधा० ५७१-५७२ ॥ ३. काष्ठतङ्क्षि खं१,२ पा२,३ J3 ॥ ४. गोमान् खं३ पा१,३ मध्ये नास्ति ॥

*युजूंपी योगे* [*हैमधा० १४७६*] इत्यस्याऽसमासे धुडन्तस्य धुटः प्राक् घुटि नोऽन्तः स्यात् । युङ् , युञ्जौ । युञ्जि कुलानि । बहुयुङ् । असमास इति किम् ? अश्वयुक् । युज्र इति किम् ? *युजिंच् समाधौ [हैमधा० १२५४]* युजमापन्ना:[१] ॥७१॥

**अनडुहः सौ ।१।४।७२॥**

अनडुहो धुडन्तस्य धुटः प्राक् सौ परे नोऽन्तः स्यात् । अनड्वान् , प्रियानड्वान् ॥७२॥

**पुंसोः पुमन्स् ।१।४।७३॥**

पुंसोः पुमन्स् घुटि स्यात् । पुमान् । प्रियपुमान् , प्रियपुमांसि ॥७३॥

**ओत औः ।१।४।७४॥**

ओतो घुटि परे औः स्यात् । गौः , गावौ । द्यौः , द्यावौ । प्रियद्यावौ । ओत इति किम् ? चित्रगू ॥७४॥

**आ अम्-शसोऽता ।१।४।७५॥**

अतोऽम्-शसोरता सह आः स्यात् । गाम् । सुगाम् । गाः । सुगाः[२] । द्याम् । अतिद्याम् । द्याः । सुद्याः ॥७५॥

**पथिन्-मथिनृभुक्षः सौ ।१।४।७६॥**

एषां नान्तानाम[३]न्तस्य सौ परे आः स्यात् । पन्थाः , हे पन्थाः ! । मन्थाः[४] । ऋभुक्षाः । नान्तनिर्देशादिह न स्यात्-पन्थानमिच्छन्[५] पथीः ॥७६॥

**एः ।१।४।७७॥**

पथ्यादीनां नान्तानामितो घुटि परे आः स्यात् । पन्थाः , पन्थानौ , पन्थानः , पन्थानम् , सुपन्थानि कुलानि । मन्थाः । ऋभुक्षाः । नान्तनिर्देशाद् एरभावाच्चेह न स्यात्-पथ्यौ , पथ्यः ॥७७॥

**थो न्थ् ।१।४।७८॥**

पथिन्-मथिनोर्नान्तयोस्थस्य घुटि परे न्थ् स्यात् । तथैवोदाहृतम् ॥७८॥

१. पन्ना मुनयः पा२ खसं२ बृहद्वृत्तौ च ॥ २. सुगाः खं१ पासं१ J3 विना नास्ति ॥ ३. नन्ताना खं१ ॥ ४. मन्थाः हे मन्थाः ऋभुक्षाः हे ऋभुक्षाः पा१ J3 ॥ ५. मिच्छति खं१,३ । मिच्छतीति J3 ॥

## इन् ङीस्वरे लुक् ।१।४।७९।।

पथ्यादीनां नान्तानां ङ्यामघुट्स्वरादौ च स्यादौ परे इन् लुक् स्यात् । सुपथी स्त्री कुले वा । पथः । सुमथी स्त्री कुले वा । मथः । अनृभुक्षी सेना कुले वा । ऋभुक्षः ।।७९।।

## वोशनसो नश्चामन्त्र्ये सौ ।१।४।८०।।

आमन्त्र्यवृत्तेरुशनसो न-लुकौ सौ परे वा स्याताम् । हे उशनन् ! , हे उशन ! , हे उशनः ! । आमन्त्र्य इति किम् ? उशना ।।८०।।

## उतोऽनडुच्चतुरो वः ।१।४।८१।।

आमन्त्र्यवृत्त्योरनडुच्चतुरोरुतः सौ परे वः स्यात् । हे अनड्वन् ! । हे अतिचत्वः ! ।।८१।।

## वाः शेषे ।१।४।८२।।

आमन्त्र्यविहितात् सेरन्यो घुट् शेषस्तस्मिन्परे अनडुच्चतुरोरुतो वाः स्यात् । अनड्वान् , अनड्वाहौ । प्रियचत्वाः , प्रियचत्वारौ । शेष इति किम् ? हे अनड्वन् ! । हे प्रियचत्वः ! ।। ८२।।

## सख्युरितोऽशावैत् ।१।४।८३।।

सख्युरिदन्तस्य शिवर्जे शेषे घुटि परे ऐत् स्यात् । सखायौ , सखायः , सखायम्[१] । इत इति किम् ? सख्यौ स्त्रियौ । अशाविति किम् ? अतिसखीनि । शेष इत्येव-हे सखे ! ।।८३।।

## ऋदुशनस्-पुरुदंशोऽनेहसश्च सेर्डाः ।१।४।८४।।

ऋदन्तादुशनसादेः सख्युरितश्च परस्य शेषस्य सेर्डाः स्यात् । पिता , अतिपिता , कर्त्ता , उशना , पुरुदंशा , अनेहा , सखा ।।८४।।

## नि दीर्घः ।१।४।८५।।

शेषे घुटि परे यो नस्तस्मिन् परे स्वरस्य दीर्घः स्यात् । राजा , राजानौ । वनानि । कर्तॄणि । शेष इत्येव-हे राजन् ! ।।८५।।

## न्स्महतोः १।४।८६।।

१. सखायम् खं२ विना नास्ति ।।

न्सन्त॰॰य महतश्च स्वरस्य शेषे घुटि परे दीर्घः स्यात् । श्रेयान् , श्रेयांसौ । महान् , महान्तौ ॥८६॥

**इन्-हन्-पूषाऽर्यम्णः शिस्योः ।१।४।८७॥**

इन्नन्तस्य हनादेश्च स्वरस्य शिस्योरेव परयोर्दीर्घः स्यात् । दण्डीनि , स्रग्वीणि , दण्डी , स्रग्वी । भ्रूणहानि , भ्रूणहा । बहुपूषाणि , पूषा । स्वर्यमाणि , अर्यमा । शिस्योरेवेति किम् ? दण्डिनौ , वृत्रहणौ ,पूषणौ , अर्यमणौ ॥८७॥

**अपः ।१।४।८८॥**

अपः स्वरस्य शेषे घुटि परे दीर्घः स्यात् । आपः , स्वापौ ॥८८॥

**नि वा ।१।४।८९॥**

अपः स्वरस्य नागमे सति घुटि परे दीर्घो वा स्यात् । स्वाम्पि , स्वम्पि । बह्वाम्पि , बह्वम्पि ॥८९॥

**अभ्वादेरत्वसः सौ ।१।४।९०॥**

अत्वन्तस्याऽसन्तस्य च भ्वादिवर्जस्य शेषे[1] सौ परे दीर्घः स्यात् । भवान् , यवमान् । गोमन्तं स्थूलशिरसं वेच्छन् गोमान् , स्थूलशिराः । अभ्वादेरिति किम् ? पिण्डग्रः ॥९०॥

**क्रुशस्तुनस्तृच् पुंसि ।१।४।९१॥**

क्रुशो यस्तुन् तस्य शेषे घुटि परे तृच् स्यात् पुंसि । क्रोष्टा , क्रोष्टारौ । पुंसीति किम् ? कृशक्रोष्टूनि वनानि ॥९१॥

**टादौ स्वरे वा ।१।४।९२॥**

टादौ स्वरादौ परे क्रुशस्तुनस्तृज् वा स्यात् पुंसि । क्रोष्ट्रा , क्रोष्टुना ; क्रोष्ट्रोः , क्रोष्ट्वोः ॥९२॥

**स्त्रियाम् ।१।४।९३॥**

क्रुशः परस्य तुनः स्त्रीवृत्तेस्तृच् स्यात् निर्निमित्त एव । क्रोष्ट्री , क्रोष्ट्र्यौ , क्रोष्ट्रीभ्याम् । पञ्चक्रोष्टृभी रथैः ॥९३॥

१. शेषे पा२,३, खंमू३, पामू१ मध्ये नास्ति ॥

इत्याचार्यश्री**हेमचन्द्र**विरचितायां
**सिद्धहेमचन्द्रा**भिधानस्वोपज्ञशब्दानुशासनलघुवृत्तौ
प्रथमस्याध्यायस्य चतुर्थः पादः समाप्तः ॥१।४॥
प्रथमोऽध्यायः समाप्तः ।

सोत्कण्ठमङ्गलगनैः कचकर्षणैश्च , वक्त्राब्जचुम्बन-नखक्षतकर्मभिश्च ।
श्री**मूलराज**हतभूपतिभिर्विलेसुः , संख्ये[1] च खेऽपि च शिवाश्च सुरस्त्रियश्च ॥४॥

१. **संख्येपि खेपि** पा१ ॥

## अथ द्वितीयोऽध्यायः

### [प्रथमः पादः]

### त्रि-चतुरस्तिसृ-चतसृ स्यादौ ।२।१।१।।

स्त्रियामिति वर्त्तते । स्यादौ परे स्त्रीवृत्त्योस्त्रि-चतुरोर्यथासङ्ख्यं 'तिसृ चतसृ' इत्येतौ स्याताम् । तिस्रः , चतस्रः , तिसृषु , चतसृषु । प्रियतिसा प्रियचतसा ना । प्रियतिसृ कुलम्[1] । स्यादाविति किम् ? प्रियत्रिकः , प्रियचतुष्कः ।।१।।

### ऋतो रः स्वरेऽनि ।२।१।२।।

तिसृ-चतसृस्थस्य ऋतः स्वरादौ स्यादौ परे रः स्यात् , **अनि** नविषयादन्यत्र । तिस्रः , चतस्रः , प्रियतिस्रौ , प्रियचतस्रौ । स्वर इति किम् ? तिसृभिः , चतसृभिः । अनीति किम् ? तिसृणाम् , चतसृणाम् ।।२।।

### जराया जरस् वा ।२।१।३।।

स्वरादौ स्यादौ परे जराया जरस् वा स्यात् । जरसौ , जरसः । जरे , जराः । अतिजरसौ , अतिजरौ । अतिजरसम् , अतिजरम् कुलम् ।।३।।

### अपोऽद् भे ।२।१।४।।

भादौ स्यादौ परे अपोऽद् स्यात् । अद्भिः , स्वद्भ्याम् । भ इति किम् ? अप्सु ।।४।।

### आ रायो व्यञ्जने ।२।१।५।।

व्यञ्जनादौ स्यादौ परे रैशब्दस्य आः स्यात् । राः , रासु , अतिराभ्याम् कुलाभ्याम् । व्यञ्जन इति किम् ? रायः ।।५।।

### युष्मदस्मदोः ।२।१।६।।

व्यञ्जनादौ स्यादौ परे युष्मदस्मदोराः स्यात् । त्वाम् , माम् , अतित्वाम् , अतिमाम् , युष्मासु , अस्मासु ।।६।।

### टाङ्योसि यः ।२।१।७।।

टाङ्योस्सु परेषु युष्मदस्मदोर्यः स्यात् । त्वया , मया ; अतियुवया , अत्यावया ; त्वयि , मयि ; युवयोः , आवयोः । टाङ्योसीति किम् ? त्वत् , मत्

१. इतः परं **'प्रियत्रि कुलम् प्रियचतसृ कुलम्'** इत्यधिकम् J3 ।।

॥७॥

## शेषे लुक् ।२।१।८॥

यस्मिन्नायौ कृतौ ततोऽन्यः शेषः , तस्मिन् स्यादौ परे युष्मदस्मदोर्लुक् स्यात् । युष्मभ्यम् , अस्मभ्यम् , अतित्वत् , अतिमत् । शेष इति किम् ? त्वयि , मयि ॥८॥

## मोर्वा ।२।१।९॥

शेषे स्यादौ परे मान्तयोः[1] युष्मदस्मदोर्मो[2] लुग् वा स्यात् । युवाम् युष्मान् वा आवाम् अस्मान् वाऽऽचक्षाणेभ्यो युष्मभ्यम् , युषभ्यम् ; अस्मभ्यम् , असभ्यम् ॥९॥

## मन्तस्य युवाऽऽवौ द्वयोः ।२।१।१०॥

द्व्यर्थवृत्त्योर्युष्मदस्मदोर्मान्तावयवस्य स्यादौ परे यथासंख्यम् युव-आव इत्येतौ स्याताम् । युवाम् , आवाम् ; अतियुवाम् , अत्यावाम् ; अतियुवासु , अत्यावासु । मन्तस्येति किम् ? युवयोः आवयोरित्यत्र दस्य यत्वं यथा स्यात् । स्यादावित्येव-युवयोः पुत्रो युष्मत्पुत्रः ॥१०॥

## त्व-मौ प्रत्ययोत्तरपदे चैकस्मिन् ।२।१।११॥

स्यादौ प्रत्ययोत्तरपदयोश्च परयोरेकार्थवृत्त्योर्युष्मदस्मदो[3]र्मान्तावयवस्य यथा-संख्यं त्व[4]-म इत्येतौ स्याताम् । त्वाम् , माम् ; अतित्वाम् , अतिमाम् ; अतित्वासु , अतिमासु ; त्वदीयः , मदीयः , त्वत्पुत्रः , मत्पुत्रः । प्रत्ययोत्तरपदे चेति किम् ? अधियुष्मद् , अध्यस्मद् । एकस्मिन्निति किम् ? युष्माकम् , अस्माकम् ॥११॥

## त्वमहं सिना प्राक् चाऽकः ।२।१।१२॥

सिना सह युष्मदस्मदोर्यथासंख्यं त्वम्-अहमौ स्याताम् , तौ चाऽक्प्रसङ्गेऽकः प्रागेव । त्वम् , अहम् ; अतित्वम् , अत्यहम् । प्राक् चाक इति किम् ? त्वकम् , अहकम् ॥१२॥

## यूयं वयं जसा ।२।१।१३॥

१. मन्तयोः पा२ ॥ २. °दोर्लुग् खं१,३ पा१,२,३ ॥ ३. °दोर्मन्ता° पा२ ॥ ४. त्वमावित्येतौ खं१ ॥

जसा सह युष्मदस्मदोर्यथासंख्यं यूयम्-वयमौ स्याताम् । यूयम् , वयम् ; प्रिययूयम् , प्रियवयम् । प्राक् चाक इत्येव-यूयकम् , वयकम् ॥१३॥

**तुभ्यं मह्यं ङ्या ।२।१।१४॥**

ङ्या सह युष्मदस्मदोर्यथासंख्यं तुभ्यम्-मह्यमौ स्याताम् । तुभ्यम् , मह्यम् ; प्रियतुभ्यम् , प्रियमह्यम् । प्राक् चाक इत्येव-तुभ्यकम् , मह्यकम् ॥१४॥

**तव मम ङसा ।२।१।१५॥**

ङसा सह युष्मदस्मदोर्यथासंख्यं तव-ममौ स्याताम् । तव , मम ; अतितव , अतिमम । प्राक् चाक इत्येव-तवक , ममक ॥१५॥

**अमौ मः ।२।१।१६॥**

युष्मदस्मद्भ्यां परयोः 'अम् औ' इत्येतयोर्म इति स्यात् । त्वाम् , माम् ; अतित्वाम् , अतिमाम् ; युवाम् , आवाम् ; अतियुवाम् , अत्यावाम् ॥१६॥

**शसो नः ।२।१।१७॥**

युष्मदस्मद्भ्यां परस्य शसो न इति स्यात् । युष्मान् , अस्मान् ; प्रियत्वान् , प्रियमान् ॥१७॥

**अभ्यम् भ्यसः ।२।१।१८॥**

युष्मदस्मद्भ्यां परस्य चतुर्थीभ्यसोऽभ्यम् स्यात् । युष्मभ्यम् , अस्मभ्यम् ; अतियुवभ्यम् , अत्यावभ्यम् ॥१८॥

**ङसेश्चाऽद् ।२।१।१९॥**

युष्मदस्मद्भ्यां परस्य ङसेः पञ्चमीभ्यसश्च अद् इति स्यात् । त्वद् , मद् ; अतियुवद् , अत्यावद् ; युष्मद् , अस्मद् ; अतित्वद् , अतिमद् ॥१९॥

**आम आकम् ।२।१।२०॥**

युष्मदस्मद्भ्यां परस्य आम आकम् स्यात् । युष्माकम् , अस्माकम् , अतियुवाकम् , अत्यावाकम् ; युष्मानस्मान् वाऽऽचक्षाणानाम्– युष्माकम् , अस्माकम् ॥२०॥

**पदाद् युग्विभक्त्यैकवाक्ये वस्-नसौ बहुत्वे ।२।१।२१॥**

बहुत्वविषयया समविभक्त्या सह पदात् परयोर्युष्मदस्मदोर्यथासंख्यं वस्-नसौ वा स्याताम् , तच्चेत् पदं युष्मदस्मदी चैकस्मिन् वाक्ये स्तः । अन्वादेशे नित्यं

विधानादिह विकल्पः[१] । धर्मो वो रक्षतु , धर्मो नो रक्षतु , धर्मो युष्मान् रक्षतु , धर्मोऽस्मान् रक्षतु । एवं चतुर्थी-षष्ठीभ्यामपि । पदादिति किम् ? युष्मान् पातु । युग्विभक्त्येति किम् ? तीर्थे यूयं यात । एकवाक्य इति किम् ? अतियुष्मान् पश्य । ओदनं पचत , युष्माकं भविष्यति ॥२१॥

## द्वित्वे वाम्-नौ ।२।१।२२॥

पदात् परयोर्युष्मदस्मदोर्द्वित्वविषयया युग्विभक्त्या सह यथासंख्यं वाम्-नौ इत्येतौ वा स्याताम् , एकवाक्ये । धर्म्मो वां पातु , धर्मो युवां पातु ; धर्म्मो नौ पातु , धर्म्म आवां पातु । एवं चतुर्थी-षष्ठीभ्यामपि ॥२२॥

## ङे-ङसा ते मे ।२।१।२३॥

ङे-ङस्भ्यां सह पदात् परयोर्युष्मदस्मदोर्यथासंख्यं ते मे इत्येतौ वा स्याताम् , एकवाक्ये । धर्मस्ते दीयते , धर्मस्तुभ्यं दीयते ; धर्म्मो मे दीयते , धर्मो मह्यं दीयते ; धर्मस्ते स्वम् , धर्मस्तव स्वम् ; धर्मो मे स्वम् , धर्मो मम स्वम् ॥२३॥

## अमा त्वा मा ।२।१।२४॥

अमा सह पदात् परयोर्युष्मदस्मदोर्यथासंख्यं त्वा-मा इत्येतौ वा स्याताम् , एकवाक्ये । धर्मस्त्वा पातु , धर्मस्त्वां पातु ; धर्म्मो मा पातु , धर्मो मां पातु ॥२४॥

## असदिवाऽऽमन्त्र्यं पूर्वम् ।२।१।२५॥

आमन्त्र्यार्थं पदं युष्मदस्मद्भ्यां पूर्वमसदिव स्यात् । जना ! युष्मान् पातु धर्मः । साधू ! युवां पातु धर्म्मः । साधो ! त्वां पातु तपः । पूर्वमिति किम् ? *मयैतत् सर्वमाख्यातं युष्माकं मुनिपुङ्गवाः* ॥२५॥

## जस्विशेष्यं वाऽऽमन्त्र्ये ।२।१।२६॥

युष्मदस्मद्भ्यां पूर्वं जसन्तमामन्त्र्यार्थं विशेष्यवाच्याऽऽमन्त्र्ये पदेऽर्थात् तद्विशेषणे परेऽसदिव वा स्यात् । जिनाः शरण्याः ! युष्मान् शरणं प्रपद्ये । जिनाः शरण्याः ! वः शरणं प्रपद्ये । जिनाः शरण्याः ! अस्मान् रक्षत । जिनाः

१. इतः परम् '**एवमुत्तरसूत्रत्रये**' इत्यधिकः J3 मध्ये पाठः । ''विकल्पो लभ्यते । एवमुत्तरसूत्रत्रयेऽपि'' इति बृहद्वृत्तौ ॥

शरण्याः ! नो रक्षत । जसिति किम् ? साधो ! सुविहित ! वोऽथो शरणं प्रपद्ये , साधो ! सुविहित ! नोऽथो रक्ष । विशेष्यमिति किम् ? शरण्याः साधवो ! युष्मान् शरणं प्रपद्ये । आमन्त्र्य इति किम् ? आचार्याः ! युष्मान् शरण्याः ! शरणं प्रपद्ये । अर्थात् तद्विशेषणभूत इति किम् ? आचार्याः ! उपाध्यायाः ! युष्मान् शरणं प्रपद्ये ।।२६।।

**नान्यत् ।२।१।२७।।**

युष्मदस्मद्भ्यां पूर्वं जसन्तादन्यदामन्त्र्यं विशेष्यमामन्त्र्ये तद्विशेषणे परेऽसदिव न स्यात् । साधो सुविहित ! त्वा शरणं प्रपद्ये । साधो सुविहित ! मा रक्ष ।।२७।।

**पादाद्योः ।२।१।२८।।**

नियतपरिमाणमात्राक्षरपिण्डः पादः । पदात् परयोः पादस्यादिस्थयोर्युष्मदस्मदोर्वस्-नसादिर्न स्यात् ।

*वीरो विश्वेश्वरो देवो युष्माकं कुलदेवता ।*
*स एव नाथो भगवानस्माकं पापनाशनः ।।१।।*

पादाद्योरिति किम् ?

*पान्तु वो देशनाकाले जैनेन्द्रा दशनांशवः ।*
*भवकूपपतज्जन्तुजातोद्धरणरज्जवः ।।२।।* ।।२८।।

**चा-ऽह-ह-वैवयोगे ।२।१।२९।।**

एभिर्योगे पदात् परयोर्युष्मदस्मदोर्वस्-नसादिर्न स्यात् । ज्ञानं युष्मांश्च रक्षतु , अस्मांश्च रक्षतु । एवं अह-ह-वा-एवैरप्युदाहार्यम् । योग इति किम् ? ज्ञानञ्च शीलञ्च ते स्वम् ।।२९।।

**दृश्यर्थैश्चिन्तायाम् ।२।१।३०।।**

दृशिना समानार्थैश्चिन्तार्थैर्धातुभिर्योगे [1] युष्मदस्मदोर्वस्-नसादिर्न स्यात् । जनो युष्मान् सन्दृश्यागतः , जनोऽस्मान् सन्दृश्यागतः । जनो युवां समीक्ष्यागतः , जन आवां समीक्ष्यागतः । जनस्त्वामपेक्षते , जनो मामपेक्षते । सर्वत्र मनसा चिन्तनं दृश्यर्थानामर्थः । दृश्यर्थैरिति किम् ? जनो वो मन्यते । चिन्तायामिति

१. पदात् परयोर्युष्म° खं१ खसं२ पासं१ ।।

किम् ? जनो वः पश्यति ॥३०॥

**नित्यमन्वादेशे ।२।१।३१॥**

किञ्चिद्विधातुं कथितस्य पुनरन्यद्विधातुं कथनमन्वादेशः , तस्मिन् विषये पदात् परयोर्युष्मदस्मदोर्वस्-नसादिर्नित्यं स्यात् । यूयं विनीतास्तद्वो गुरवो मानयन्ति , वयं विनीतास्तन्नो गुरवो मानयन्ति ; धनवांस्त्वमथो त्वा लोको मानयति , धनवानहमथो मा लोको मानयति ॥३१॥

**सपूर्वात् प्रथमान्ताद् वा ।२।१।३२॥**

विद्यमानपूर्वपदात् प्रथमान्तात् पदात् परयोर्युष्मदस्मदोरन्वादेशे वस्-नसादिर्वा स्यात् । यूयं विनीतास्तद् गुरवो वो मानयन्ति , तद् गुरवो युष्मान् मानयन्ति । वयं विनीतास्तद् गुरवो नो मानयन्ति , तद् गुरवोऽस्मान् मानयन्ति । युवां सुशीलौ तज्ज्ञानं वां दीयते , तज्ज्ञानं युवाभ्यां दीयते । आवां सुशीलौ तज्ज्ञानं नौ दीयते , तज्ज्ञानमावाभ्यां दीयते ॥३२॥

**त्यदामेनदेतदो द्वितीया-टौस्यवृत्त्यन्ते ।२।१।३३॥**

त्यदादीनामेतदो द्वितीयायां टायामोसि च परेऽन्वादेशे एनद् स्यात् , न तु वृत्त्यन्ते । उद्दिष्टमेतदध्ययनमथो एनदनुजानीत , एतकं साधुमावश्यकमध्यापय अथो एनमेव सूत्राणि । अत्र साकः । एतेन रात्रिरधीता अथो एनेनाहरप्यधीतम् । एतयोः शोभनं शीलमथो एनयोर्महती कीर्तिः । त्यदामिति किम् ? संज्ञायामेतदं संगृहाण अथो एतदमध्यापय । अवृत्त्यन्त इति किम् ? अथो परमैतं पश्य ॥३३॥

**इदमः ।२।१।३४॥**

त्यदादेरिदमो द्वितीया-टौसि परेऽन्वादेशे एनत् स्यात् , अवृत्त्यन्ते । उद्दिष्टमिदमध्ययनमथो एनदनुजानीत । अनेन रात्रिरधीता अथो एनेनाहरप्यधीतम् । अनयोः शोभनं शीलम् अथो एनयोर्महती कीर्तिः ॥३४॥

**अद् व्यञ्जने ।२।१।३५॥**

त्यदादेरिदमो व्यञ्जनादौ स्यादौ परेऽन्वादेशे अः स्यात् , अवृत्त्यन्ते । इमकाभ्यां शैक्षकाभ्यां रात्रिरधीता अथो आभ्यामहरप्यधीतम् । इमकेषु अथो एषु । *अनग् [२।१।३६]* इति वक्ष्यमाणादिह साको विधिः ॥३५॥

**अनक् ।२।१।३६॥**

त्यदादेर्व्यञ्जनादौ स्यादौ परेऽग्वर्ज इदम् अः स्यात् । आभ्याम् , आभिः[1] , एषु , आसु । अनगिति किम् ? इमकाभ्याम् । त्यदामित्येव-अतीदम्भ्याम् ॥३६॥

## टौस्यनः ।२।१।३७॥

त्यदां टायामोसि च परेऽनक इदमोऽनः स्यात् । अनेन , अनया , अनयोः । त्यदामित्येव-प्रियेदमा । अनक इत्येव-इमकेन ॥३७॥

## अयमियं पुंस्त्रियोः सौ ।२।१।३८॥

त्यदां सौ परे इदमः पुंस्त्रियोर्यथासंख्यम् अयमियमौ स्याताम् । अयं ना । इयं स्त्री । त्यदामित्येव-अतीदं ना स्त्री वा ॥३८॥

## दो मः स्यादौ ।२।१।३९॥

त्यदां स्यादौ परे इदमो दो मः स्यात् । इमौ , परमेमौ , इमकाभ्याम् । त्यदामित्येव-प्रियेदमौ ॥३९॥

## किमः कस्तसादौ च ।२।१।४०॥

त्यदां स्यादौ तसादौ च प्रत्यये परे किमः कः स्यात् । कः , साकोऽपि कः । कदा , कर्हि । तसादौ चेति किम् ? किं पश्य , किन्तराम् । त्यदामित्येव-प्रियकिमौ ॥४०॥

## आद्वेरः ।२।१।४१॥

द्विशब्दमभिव्याप्य त्यदां स्यादौ तसादौ च परे अः स्यात् । स्यः , त्यौ , द्वौ , ततः , तदा । त्यदामित्येव-अतितदौ ॥४१॥

## तः सौ सः ।२।१।४२॥

आद्वेस्त्यदां सौ परे तः स्[2] स्यात् । स्यः , स्या , सः , सा , एषा । त्यदामित्येव-प्रियत्यत् ॥४२॥

## अदसो दः सेस्तु डौ ।२।१।४३॥

त्यदां सौ परे अदसो दः स्[3] स्यात् , सेस्तु डौ । असौ , असकौ , हे असौ ! , हे असकौ ! । त्यदामित्येव-अत्यदाः ॥४३॥

## असुको वाऽकि ।२।१।४४॥

१. एभिः पासं२ J3 ॥ २. स स्यात् पा१ खं२ । सः स्यात् खं१,३ J3 ॥ ३. स स्यात् पा१ खं२ । सः स्यात् खं१ J3 ॥

त्यदां सौ परे अदसोऽकि सत्यसुको वा स्यात् । असुकः , असकौ ; हे असुक ! हे असकौ ! ॥४४॥

**मोऽवर्णस्य ।२।१।४५॥**

अवर्णान्तस्य त्यदामदसो दो म् स्यात् । अमू नरौ स्त्रियौ कुले वा । अमी , अमूदृशः । अवर्णस्येति किम् ? अदः कुलम् ॥४५॥

**वाऽद्रौ ।२।१।४६॥**

अदसोऽद्रावन्ते सति दो म् वा स्यात् । अदमुयङ् , अमुद्र्यङ् , अमुमुयङ् , अदद्र्यङ् ॥४६॥

**मादुवर्णोऽनु ।२।१।४७॥**

अदसो मः परस्य वर्णस्य उवर्णः स्यात् , **अनु** पश्चात् कार्यान्तरेभ्यः । अमुम् , अमू , अमुमुयङ् । अन्विति किम् ? अमुष्मै , अमुष्मिन् ॥४७॥

**प्रागिनात् ।२।१।४८॥**

अदसो मः परस्य वर्णस्येनादेशात् प्राक् उवर्णः स्यात् । अमुना । इनादिति किम् ? अमुया ॥४८॥

**बहुष्वेरी[1] ।२।१।४९॥**

बह्वर्थवृत्तेरदसो मः परस्य एत ई[2] स्यात् । अमी , अमीषु । एरिति किम् ? अमूः स्त्रियः । मादित्येव-अमुके ॥४९॥

**धातोरिवर्णोवर्णस्येयुव् स्वरे प्रत्यये ।२।१।५०॥**

धातोरिवर्णोवर्णयोः स्वरादौ प्रत्यये परे यथासंख्यम् इयुवौ स्यातम् । नियौ , लुवौ , अधीयते , लुलुवुः । प्रत्यये इति किम् ? न्यर्थः , ल्वर्थः । नयनम् , नायक इत्यादौ तु परत्वाद् गुण-वृद्धी ॥५०॥

**इणः ।२।१।५१॥**

इणो धातोः स्वरादौ प्रत्यये परे इय् स्यात् । यापवादः । ईयतुः , ईयुः ॥५१॥

**संयोगात् ।२।१।५२॥**

धातोरिवर्णोवर्णयोः संयोगात् परयोः स्वरादौ प्रत्यये परे इयुवौ स्याताम् ।

---

१. बहुष्वेरीः खं१,३ , खंमू२ ॥ २. ईः पा२ J3 ॥

यवक्रियौ , कटप्रुवौ , शिश्रियुः ॥५२॥

**भ्रू-श्नोः ।२।१।५३॥**

भ्रू-श्नोरुवर्णस्य संयोगात् परस्य स्वरादौ प्रत्यये परे उव् स्यात् । भ्रुवौ , आप्नुवन्ति । संयोगादित्येव-चिन्वन्ति ॥५३॥

**स्त्रियाः ।२।१।५४॥**

स्त्रिया इवर्णस्य स्वरादौ प्रत्यये परे इय् स्यात् । स्त्रियौ । अतिस्त्रियौ ॥५४॥

**वाऽम्-शसि ।२।१।५५॥**

स्त्रिया इवर्णस्याऽम्-शसोः परयोरिय् वा स्यात् । स्त्रियम् , स्त्रीम् , स्त्रियः , स्त्रीः ॥५५॥

**योऽनेकस्वरस्य ।२।१।५६॥**

अनेकस्वरस्य धातोरिवर्णस्य स्वरादौ प्रत्यये परे य्[१] स्यात् । चिच्युः , निन्युः , पतिमिच्छति पत्यि ॥५६॥

**स्यादौ वः ।२।१।५७॥**

अनेकस्वरस्य धातोरुवर्णस्य स्वरादौ [२]स्यादौ परे वः स्यात् । वसुमिच्छन्तौ वस्वौ । स्यादाविति किम् ? लुलुवुः ॥५७॥

**क्विब्वृत्तेरसुधियस्तौ ।२।१।५८॥**

क्विबन्तेनैव या **वृत्तिः** समासस्तस्याः सुधीशब्दादन्यस्याः सम्बन्धिनो धातोरिवर्णोवर्णस्य स्वरादौ स्यादौ परे **तौ** य् व् इत्येतौ स्याताम् । उन्न्यौ , ग्रामण्यौ , सुल्वः , खलप्वः । क्विबिति किम् ? परमौ नियौ परमनियौ । वृत्तेरिति किम् ? नियौ कुलस्य । असुधिय इति किम् ? सुधियः ॥५८॥

**दृन्-पुन-र्वर्षा-कारैर्भुवः ।२।१।५९॥**

दृनादिभिः सह या क्विब्वृत्तिस्तत्सम्बन्धिन एव भुवो धातोरुवर्णस्य स्वरादौ स्यादौ परे [३]वः स्यात् । दृन्भ्वौ , पुनर्भ्वौ , वर्षाभ्वः , कारभ्वः । दृनादिभिरिति किम् ? [४]प्रतिभुवौ ॥५९॥

**ण-षमसत् परे स्यादिविधौ च ।२।१।६०॥**

१. यः खं२ पा१ ॥ २. स्यादौ प्रत्यये परे पा१,३ ॥ ३. व् खं२ J3 । ४. प्रतिभुवे पा१,२,३, खं२ ॥

इतः सूत्रादारभ्य यत् परं कार्यं विधास्यते तस्मिन् स्याद्यधिकारविहिते च पूर्वस्मिन्नपि कर्त्तव्ये णत्वं षत्वं चाऽसद् असिद्धं स्यात् , एतत्सूत्रनिर्दिष्टयोश्च ण-षयोः परे षे णोऽसन् । पूष्णः , तक्ष्णः , पिपठीः , अर्वाणौ । असत्पर इत्यधिकारो *रात्सः [२।१।९०]* इति यावत् । स्यादिविधौ चेति तु *नोर्म्यादिभ्यः [२।१।९९]* इति ॥६०॥

**क्तादेशोऽषि ।२।१।६१॥**

केनोपलक्षितस्य तस्यादेशः षादन्यस्मिन् परे पूर्वस्मिंश्च स्यादिविधावसन् स्यात् । क्षामिमान् , लून्युः । अषीति किम् ? वृक्णः ॥६१॥

**ष-ढोः कस्सि ।२।१।६२॥**

सि परे ष-ढोः कः स्यात् । पेक्ष्यति , लेक्ष्यति ॥६२॥

**भ्वादेर्नामिनो दीर्घो वोर्व्यञ्जने ।२।१।६३॥**

भ्वादेर्धातोर्यौ र-वौ तयोः परयोस्तस्यैव नामिनो दीर्घः स्याद् व्यञ्जने । हूर्च्छा , आस्तीर्णम् , दीव्यति । भ्वादेरिति किम् ? कुर्कुरीयति , दिव्यति ॥६३॥

**पदान्ते ।२।१।६४॥**

पदान्तस्थयोर्भ्वादिर्वोः परयोर्भ्वादिर्नामिनो दीर्घः स्यात् । गीः , गीरर्थः । पदान्त इति किम् ? गिरः , लुवः ॥६४॥

**न यि तद्धिते ।२।१।६५॥**

यादौ तद्धिते परे यौ र्वौ तयोः परयोर्नामिनो दीर्घो न स्यात् । धुर्यः । यीति किम् ? गीर्वत् । तद्धित इति किम् ? गीर्यति , गीर्यते ॥६५॥

**कुरुच्छुरः ।२।१।६६॥**

कुरुच्छुरोर्नामिनो रे परे दीर्घो न स्यात् । कुर्यात् , छुर्यात् । कुर्वित्युकारः किम् ? *कुरत् शब्दे* [हैमधा० १३९१] कुर्यात् ॥६६॥

**मो नो म्वोश्च ।२।१।६७॥**

[१]मन्तस्य भ्वादेरन्तस्य पदान्तस्थस्य म्वोश्च परयोर्नः स्यात् । प्रशान् , प्रशान्भ्याम् , जङ्गन्मि , जङ्गन्वः ॥६७॥

**स्रंस-ध्वंस्-क्वस्सनडुहो दः ।२।१।६८॥**

१. मन्तस्य भ्वादेर्धातोरन्तस्य पासं२ । मन्तस्य धातोरन्तस्य खं१,२ पा१ पामू२ J3 ॥

स्रंसु-ध्वंसोः क्वस्प्रत्ययान्तस्य च सन्तस्य अनडुहश्च पदान्तस्थस्य दः स्यात्। उखास्रद्, पर्णध्वद्, विद्वत् कुलम्। स्वनडुद्। क्वस्सिति द्विसकारपाठादिह मा भूत्-विद्वान् ॥६८॥

**ऋत्विज्-दिश्-दृश्-स्पृश्-स्रज्-दधृषुष्णिहो गः ।२।१।६९॥**

एषां पदान्तस्थानां ग्[2] स्यात्। ऋत्विग्, दिग्, दृग्, अन्यादृग्, धृतस्पृग्, स्रग्, दधृग्, उष्णिग् ॥६९॥

**नशो वा ।२।१।७०॥**

नशः पदान्ते ग् वा स्यात्। जीवनग्, जीवनड् ॥७०॥

**युजञ्च-क्रुञ्चो नो ङः ।२।१।७१॥**

एषां नस्य पदान्ते ङ् स्यात्। युङ्, प्राङ्, क्रुङ् ॥७१॥

**सो रुः ।२।१।७२॥**

पदान्ते सो रुः स्यात्। आशीः, वायुः ॥७२॥

**सजुषः ।२।१।७३॥**

पदान्ते सजुषो रुः स्यात्। सजूः, सजूर्वत् ॥७३॥

**अह्नः ।२।१।७४॥**

अह्नः पदान्ते रुः स्यात्। हे दीर्घाहो निदाघ ! दीर्घाहा निदाघः ॥७४॥

**रो लुप्यरि ।२।१।७५॥**

अरेफे परे पदान्ते अह्नो लुपि सत्याम् रः[3] स्यात्। अहरधीते, अहर्दत्ते। लुपीति किम्? हे दीर्घाहोऽत्र। अरीति किम्? अहोरूपम् ॥७५॥

**धुटस्तृतीयः ।२।१।७६॥**

पदान्ते धुटां तृतीयः स्यात्। वाग्, अज्भिः ॥७६॥

**ग-ड-द-बादेश्चतुर्थान्तस्यैकस्वरस्याऽऽदेश्चतुर्थः स्ध्वोश्च प्रत्यये ।२।१।७७॥**

ग-ड-द-बादेश्चतुर्थान्तस्यैकस्वरस्य[4] धातुरूपावयवस्यादेश्चतुर्थः स्यात्, पदान्ते

१. क्वस्सप्रत्य° पा२। क्वसुप्रत्य° खं३॥ २. गः J3॥ ३. र् पा२। र पा१॥ ४. °स्य धात्ववयवस्या° खं२,३। °स्य शब्दावयवस्या° पा१ J3॥

सादौ ध्वादौ च प्रत्यये । पर्णघुट् , तुण्डिभमाचक्षाणः तुण्ढिप् । एवं गर्द्धप् , धर्मभुत् , निघोक्ष्यते , न्यघूढ्वम् , धोक्ष्यते , अधुग्ध्वम् , भोत्स्यते , अभुद्ध्वम् । गडदबादेरिति किम् ? अजञप् । एकस्वरस्येति किम् ? दामलिट् ॥७७॥

**धागस्त-थोश्च ।२।१।७८॥**

धागश्चतुर्थान्तस्य दादेरादेर्दस्य तथोः स्ध्वोश्च प्रत्यययोः परयोश्चतुर्थः स्यात् । धत्तः , धत्थः , धत्से , धद्ध्वे । तथोश्चेति किम् ? दध्वः । चतुर्थान्तस्येत्येव-दधाति ॥७८॥

**अधश्चतुर्थात् तथोर्धः ।२।१।७९॥**

चतुर्थात् परयोर्धारूपवर्जाद्धातोर्विहितयोस्तथोर्धः स्यात् । अदुग्ध , अदुग्धाः । अलब्ध , अलब्धाः । अध इति किम् ? धत्तः , धत्थः । विहितविशेषणं किम् ? ज्ञानभुत्त्वम् ॥७९॥

**नाम्यन्तात् परोक्षाद्यतन्याशिषो धो ढः ।२।१।८०॥**

रान्तान्नाम्यन्ताच्च धातोः परासां परोक्षाद्यतन्याशिषां धो ढः स्यात् । अतीर्ढ्वम् , तीर्षीढ्वम् ; तुष्टुढ्वे , अदिढ्वम् , चेषीढ्वम् । नाम्यन्तादिति किम् ? अपग्ध्वम् , आसिध्वम् ॥८०॥

**हान्तस्थाञ्जीड्भ्यां वा ।२।१।८१॥**

हादन्तस्थायाश्च पराञ्जेरिटश्च परासां परोक्षाद्यतन्याशिषां धो ढ् वा स्यात् । अग्राहिढ्वम् , अग्राहिध्वम् ; ग्राहिषीढ्वम् , ग्राहिषीध्वम् । अनायिढ्वम् , अनायिध्वम् । नायिषीढ्वम् , नायिषीध्वम् । अकारिढ्वम् , अकारिध्वम् । अलाविढ्वम् , अलाविध्वम् । जगृहिढ्वे , जगृहिध्वे । आयिढ्वम् , आयिध्वम् । हान्तस्थादिति किम् ? घानिषीध्वम् , आसिषीध्वम् ॥८१॥

**हो धुट्-पदान्ते ।२।१।८२॥**

धुटि प्रत्यये पदान्ते च हो ढ्[१] स्यात् । लेढा , मधुलिट् , गुडलिण्मान् । धुट्-पदान्त इति किम् ? मधुलिहौ ॥८२॥

**भ्वादेर्दादेर्घः ।२।१।८३॥**

भ्वादेर्धातोर्यो दादिरवयवस्तस्य हो धुटि प्रत्यये[२] पदान्ते च घ्[३] स्यात् ।

१. ढः J3 ॥ २. **प्रत्यये परे पदान्ते** J3 ॥ ३. घः खं१,३ ॥

दोग्धा , धोक्ष्यति , अधोक् , गोधुक् । भ्वादेरिति किम् ? दामलिहमिच्छति दामलिट् ॥८३॥

**मुह-द्रुह-ष्णुह-ष्णिहो वा ।२।१।८४॥**

एषां हो धुटि प्रत्यये पदान्ते च[1] घ् वा स्यात् । मोग्धा , मोढा ; उन्मुक् , उन्मुट् । द्रोग्धा , द्रोढा ; मित्रध्रुक् , मित्रध्रुट् । स्नोग्धा , स्नोढा ; उत्स्नुक् , उत्स्नुट् । स्नेग्धा , स्नेढा ; चेलस्निक् , चेलस्निट् ॥८४॥

**नहाहोर्ध-तौ ।२।१।८५॥**

नहेर्ब्रूस्थानाऽऽहश्च धातोर्हो धुटि प्रत्यये पदान्ते च यथासंख्यं ध-तौ स्याताम् । नद्धा , उपानद्भ्याम् , आत्थ ॥८५॥

**च-जः क-गम् ।२।१।८६॥**

धुटि प्रत्यये पदान्ते च च[2]-जोः क[3]-गौ स्याताम् । वक्ता , वाक् , त्यक्ता , अर्द्धभाक् ॥ ८६॥

**यज-सृज-मृज-राज-भ्राज-भ्रस्ज-व्रश्च-परिव्राजः शः षः ।२।१।८७॥**

यजादीनां धातूनां च-जोः शस्य च धुटि प्रत्यये पदान्ते च ष्[4] स्यात् । यष्टा , देवेट् ; स्रष्टा , तीर्थसृट् ; मार्ष्टा , कंसपरिमृट् ; राष्टिः , सम्राट् ; भ्राष्टिः , विभ्राट् ; भ्रष्टा , धानाभृट् ; व्रष्टा , मूलवृट् ; परिव्राट् ; लेष्टा , प्रष्टा , शब्दप्राट् । यजादिसाहचर्याच्छोऽपि धातोरेव स्यात् , इह मा भूत्-निज्भ्याम् । चज इत्येव-वृक्षवृश्चमाचष्टे वृक्षव् ॥८७॥

**संयोगस्यादौ स्कोर्लुक् ।२।१।८८॥**

धुट्-पदान्ते संयोगादिस्थयोः स्कोर्लुक् स्यात् । लग्नः , साधुलक् , वृक्णः , मूलवृट् , तष्टः , काष्ठतट् ॥८८॥

**पदस्य ।२।१।८९॥**

पदस्य संयोगान्तस्य लुक् स्यात् । पुमान् , पुंभिः , महान् । पदस्येति किम् ? स्कन्त्वा ॥८९॥

**रात् सः ।२।१।९०॥**

१. च वा घः J3 ॥ २. चजोः यथासंख्यम् खं१ खंमू२ ॥ ३. क्-गौ खं१ पा१ J3 विना ॥ ४. षः J3 ॥

पदस्य संयोगान्तस्य यो रस्ततः परस्य सस्यैव लुक् स्यात् । चिकीः , कटचिकीः । स एवेति किम् ? ऊर्क् , न्यमार्ट् ॥९०॥

**नाम्नो नोऽनह्नः ।२।१।९१॥**

पदान्ते नाम्नो नस्य लुक् स्यात् , स चेदह्नो न स्यात् । राजा , राजपुरुषः । अनह्न इति किम् ? अहरेति ॥९१॥

**नाऽऽमन्त्र्ये ।२।१।९२॥**

आमन्त्र्यार्थस्य नाम्नो नस्य लुक् न स्यात् । हे राजन् ! ॥९२॥

**क्लीबे वा ।२।१।९३॥**

आमन्त्र्यार्थस्य नाम्नः क्लीबे नस्य लुग् वा स्यात् । हे दाम ! , हे दामन् ! ॥९३॥

**मावर्णान्तोपान्तापञ्चमवर्गान् मतोर्मो वः ।२।१।९४॥**

मावर्णौ प्रत्येकमन्तोपान्तौ यस्य तस्मात् पञ्चमवर्जवर्गान्ताच्च नाम्नः परस्य मतोर्मो व्[1] स्यात् । किंवान् , शमीवान् , वृक्षवान् , मालावान् , अहर्वान् , भास्वान् , मरुत्वान् ॥९४॥

**नाम्नि ।२।१।९५॥**

संज्ञायां मतोर्मो व्[2] स्यात् । अहीवती मुनीवती नद्यौ ॥९५॥

**चर्मण्वत्यष्ठीवच्चक्रीवत्-कक्षीवद्-रुमण्वत् ।२।१।९६॥**

एते मत्वन्ताः संज्ञायां निपात्यन्ते । चर्मण्वती नाम नदी , अष्ठीवान् जानुः , चक्रीवान् खरः , कक्षीवान् ऋषिः , रुमण्वान् गिरिः ॥९६॥

**उदन्वानब्धौ च ।२।१।९७॥**

**अब्धौ** जलाधारे नाम्नि च मतौ उदन्वान् निपात्यते । उदन्वान् घटः , उदन्वान् समुद्रः ऋषिः आश्रमश्च ॥९७॥

**राजन्वान् सुराज्ञि ।२।१।९८॥**

सुराजकेऽर्थे राजन्वान् मतौ निपात्यते । राजन्वान् देशः , राजन्वत्यः प्रजाः ॥९८॥

---

१. व पा१,३ । वः खं१,३ J3 ॥ २. वः खं२ विना । व पा१,३ ॥

**नोर्म्यादिभ्यः ।२।१।९९।।**

ऊर्म्यादिभ्यो मतोर्मो व्[1] न स्यात् । ऊर्मिमान् , दल्मिमान् इत्यादि ।।९९।।

**मास-निशा-ऽऽसनस्य शसादौ लुग्वा ।२।१।१००।।**

शसादौ स्यादावेषां लुग्वा स्यात् । मासः , मासान् । निशः , निशाः । आसनि , आसने ।।१००।।

**दन्त-पाद-नासिका-हृदया-ऽसृग्-यूषोदक-दोर्यकृच्छकृतो दत्-पन्नस्-हृदसन्-यूषन्नुदन्-दोषन्-यकन्-शकन् वा ।२।१।१०१।।**

शसादौ स्यादौ दन्तादीनां यथासंख्यं 'दत्' इत्यादयो वा स्युः । दतः , दन्तान् । पदः , पादान् । नसा , नासिकया । हृदि , हृदये । अस्ना , असृजा । यूष्णा , यूषेण । उद्ना , उदकेन । दोष्णा , दोषा । यक्ना , यकृता । शक्ना , शकृता ।।१०१।।

**य-स्वरे पादः पदणि-क्य-घुटि ।२।१।१०२।।**

णि-क्य-घुट्वर्जे यादौ स्वरादौ च प्रत्यये पादन्तस्य पद् स्यात् । वैयाघ्रपद्यः , द्विपदः पश्य । पादयतेः क्विपि पाद् , पदी कुले । य-स्वर इति किम् ? द्विपाद्भ्याम् । अणिक्यघुटीति किम् ? पादयति । व्याघ्रपाद्यति , द्विपादौ ।।१०२।।

**उदच उदीच् ।२।१।१०३।।**

अणिक्यघुटि यस्वरे उदच उदीच् स्यात् । उदीच्यः , उदीची । अणिक्यघुटीत्येव-उदयति , उदच्यति , उदञ्चः । उदच इति किम् ? नि मा भूत् , उदञ्चा , उदञ्चे ।।१०३।।

**अच्च्[1] प्राग् दीर्घश्च ।२।१।१०४।।**

अणिक्यघुटि यस्वरादौ प्रत्ययेऽच् च् स्यात् , प्राक् स्वरश्च दीर्घः । प्राच्यः , दधीचा । अणिक्यघुटीत्येव-दध्ययति , दध्यच्यति , दध्यञ्चः । अचिति किम् ? नि मा भूत्-साध्वञ्चा ।।१०४।।

**क्वसुष् मतौ च ।२।१।१०५।।**

अणिक्यघुटि य-स्वरे मतौ च प्रत्यये क्वस् उष् स्यात् । विदुष्यः , विदुषा , विदुष्मान् । अणिक्यघुटीत्येव-विद्वयति , विद्वस्यति , विद्वांसः ।।१०५।।

१. वो J3 ।। २. अच्च खं२ बृहद्वृत्तौ च ।।

## श्वन्-युवन्-मघोनो ङी-स्याद्यघुट्स्वरे व उः ।२।१।१०६।।

ङ्यां स्याद्यघुट्स्वरे च श्वनादीनां[1] व उः स्यात् । शुनी , शुनः । अतियूनी , यूनः । मघोनी , मघोनः । ङीस्याद्यघुट्स्वर इति किम् ? शौवनम् , यौवनम् , माघवनम् ।।१०६।।

## लुगाऽऽतोऽनापः ।२।१।१०७।।

आप्वर्जस्याऽऽतो ङीस्याद्यघुट्स्वरे लुक् स्यात् । कीलालपः । हाहे देहि । अनाप इति किम् ? शालाः ।।१०७।।

## अनोऽस्य ।२।१।१०८।।

ङीस्याद्यघुट्स्वरेऽनोऽस्य लुक् स्यात् । राज्ञी , राज्ञः ।।१०८।।

## ई-ङौ वा ।२।१।१०९।।

ईकारे ङौ च परेऽनोऽस्य लुग् वा स्यात् । साम्नी , सामनी । राज्ञि , राजनि ।।१०९।।

## षादि-हन्-धृतराज्ञोऽणि ।२।१।११०।।

षादेरनो हनो धृतराज्ञश्चातोऽणि प्रत्यये लुक् स्यात् । औक्ष्णः , ताक्ष्णः , भ्रौणघ्नः , धार्त्तराज्ञः ।।११०।।

## न व-मन्तसंयोगात् ।२।१।१११।।

वान्तान्मान्ताच्च संयोगात्परस्याऽनोऽस्य लुग् न स्यात् । पर्वणा , कर्मणी ।।१११।।

## हनो ह्नो घ्न्[2] ।२।१।११२।।

हन्तेर्ह्नो घ्न् स्यात् । भ्रूणघ्नी , घ्नन्ति । ह्न इति किम् ? वृत्रहणौ ।।११२।।

## लुगस्यादेत्यपदे ।२।१।११३।।

अपदादावकारे एकारे च परेऽस्य लुक् स्यात् । सः , पचन्ति , पचे । अपद इति किम् ? दण्डाग्रम् ।।१३३।।

## डित्यन्त्यस्वरादेः ।२।१।११४।।

स्वराणां योऽन्त्यस्वरस्तदादेः शब्दस्य डिति परे लुक् स्यात् । मुनौ , साधौ

---

१. श्वादीनां खं३ ।। २. घ्नः खं२,३, बृहद्वृत्तौ च । घ्न J3 ।।

, पितुः ॥११४॥

**अवर्णादश्नोऽन्तो वाऽतुरीङ्योः ।२।१।११५॥**

श्नावर्जादवर्णात् परस्याऽतुः स्थानेऽन्तो वा स्यात् , ई-ङ्योः । तुदन्ती , तुदती कुले स्त्री वा । एवम्-भान्ती , भाती । अवर्णादिति किम् ? अदती । अश्न इति किम् ? लुनती ॥११५॥

**श्य-शवः ।२।१।११६॥**

श्याच्छवश्च परस्याऽतुरीङ्योः परयोरन्त इत्यादेशः स्यात् । दीव्यन्ती , पचन्ती ॥६॥

**दिव औः सौ ।२।१।११७॥**

दिवः सौ परे औः स्यात् । द्यौः ॥११७॥

**उः पदान्तेऽनूत् ।२।१।११८॥**

पदान्तस्य दिव उः स्यात् , **अनूत्** स तु दीर्घो न स्यात् । द्युभ्याम् , सुद्यु । पदान्त इति किम् ? दिवि । अनूदिति किम् ? द्युभवति ॥११८॥

[इत्याचार्यश्री **हेमचन्द्र**विरचितायां
**सिद्धहेमचन्द्रा**भिधानस्वोपज्ञशब्दानुशासनलघुवृत्तौ]
द्वितीयस्याध्यायस्य प्रथमः पादः समाप्तः ॥२।१॥

प्रा[१]वृड् जातेति हे भूपा ! मा स्म त्यजत काननम् ।
हरिः शेतेऽत्र न त्वेषो **मूलराज**महीपतिः ॥५॥

१. श्लोकोऽयं केवलं पा२ प्रा० बृहद्वृत्तौ च वर्तते ॥

## [ द्वितीयः पादः ]

### क्रियाहेतुः कारकम् ।२।२।१॥

क्रियाया निमित्तं कर्त्रादि कारकं स्यात् । अन्वर्थाश्रयणाच्च निमित्तत्वमात्रेण हेत्वादेः का[1]रकसंज्ञा न स्यात् ॥१॥

### स्वतन्त्रः कर्त्ता ।२।२।२॥

क्रियाहेतुः क्रियासिद्धौ स्वप्रधानो यः स कर्त्ता स्यात् । मैत्रेण कृतः ॥२॥

### कर्तुर्व्याप्यं कर्म ।२।२।३॥

कर्त्रा क्रियया यद्विशेषेणाप्तुमिष्यते तत् कारकं व्याप्यं कर्म च स्यात् । तत् त्रेधा-निर्वर्त्यं विकार्यं प्राप्यञ्च । कटं करोति , काष्ठं दहति , ग्रामं याति ॥३॥

### वाऽकर्मणामणिक्कर्त्ता णौ ।२।२।४॥

अविवक्षितकर्मणां धातूनां णिगः प्राग् यः कर्त्ता स णिगि सति कर्म वा स्यात् । पचति चैत्रः , पाचयति चैत्रं चैत्रेण वा ॥४॥

### गति-बोधा-ऽऽहारार्थ-शब्दकर्म-नित्याकर्मणामनीखाद्यदि-ह्वा-शब्दाय-क्रन्दाम् ।२।२।५॥

**गति**र्देशान्तरप्राप्तिः , शब्दः **कर्म** क्रिया व्याप्यञ्च येषां ते शब्दकर्माणः , गत्यर्थबोधार्थाहारार्थानां शब्दकर्मणां नित्याकर्मणाञ्च नीखाद्यदिह्वाशब्दायक्रन्दि-वर्जानां धातूनामणिक्कर्त्ता स णौ सति कर्म स्यात् । गमयति मैत्रं ग्रामम् , बोधयति शिष्यं धर्मम् , भोजयति बटुमोदनम् , जल्पयति मैत्रं द्रव्यम् , अध्यापयति बटुं वेदम् , शाययति मैत्रं चैत्रः । गत्यर्थादीनामिति किम् ? पाचयत्योदनं चैत्रेण मैत्रः । न्यादिवर्जनं किम् ? नाययति भारं चैत्रेण , खादयत्यपूपं मैत्रेण , आदयत्योदनं सुतेन , ह्वाययति चैत्रं मैत्रेण , शब्दाययति बटुं मैत्रेण , क्रन्दयति मैत्रं चैत्रेण ॥५॥

### भक्षेर्हिंसायाम् ।२।२।६॥

भक्षेर्हिंसार्थस्यैवाणिक्कर्त्ता णौ कर्म स्यात् । भक्षयति सस्यं बलीवर्दान् मैत्रः । हिंसायामिति किम् ? भक्षयति पिण्डीं शिशुना ॥६॥

---

१. कारकसंज्ञा खं१ खंमू२ J3 विना नास्ति ॥

**वहेः प्रवेयः ।२।२।७।।**

वहेरणिक्कर्त्ता प्रवेयो णौ कर्म स्यात् । वाहयति भारं बलीवर्दान्[१] । प्रवेय इति किम् ? वाहयति भारं मैत्रेण ।।७।।

**हृ-क्रोर्नवा ।२।२।८।।**

हृ-क्रोरणिक्कर्त्ता णौ कर्म वा स्यात् । विहारयति देशं गुरुं गुरुणा वा , आहारयत्योदनं बालं बालेन वा , कारयति कटं चैत्रं चैत्रेण वा ।।८।।

**दृश्यभिवदोरात्मने ।२।२।९।।**

दृश्यभिवदोरात्मनेपदविषयेऽणिक्कर्त्ता णौ कर्म वा स्यात् । दर्शयते राजा भृत्यान् भृत्यैर्वा , अभिवादयते गुरुः शिष्यं शिष्येण वा । आत्मन इति किम् ? दर्शयति रूपतर्कं रूपम् ।।९।।

**नाथः ।२।२।१०।।**

आत्मनेपदविषयस्य नाथो व्याप्यं कर्म वा स्यात् । सर्पिषो नाथते , सर्पिर्नाथते । आत्मन इत्येव-पुत्रमुपनाथति पाठाय ।।१०।।

**स्मृत्यर्थ-दयेशः ।२।२।११।।**

स्मृत्यर्थानां दयेशोश्च व्याप्यं कर्म वा स्यात् । मातुः स्मरति , मातरं स्मरति ; मातुः स्मर्यते , माता स्मर्यते ; सर्पिषो दयते , सर्पिर्दयते ; लोकानामीष्टे , लोकानीष्टे ।।११।।

**कृगः प्रतियत्ने ।२।२।१२।।**

पुनर्यत्नः प्रतियत्नस्तद्वृत्तेः कृगो व्याप्यं कर्म वा स्यात् । एधोदकस्यैधोदकं वोपस्कुरुते ।।१२।।

**रुजार्थस्याऽज्वरि-सन्तापेर्भावे कर्त्तरि ।२।२।१३।।**

रुजा पीडा , तदर्थस्य ज्वरि-सन्तापिवर्जस्य धातोर्व्याप्यं कर्म वा स्यात् , भावश्चेद्रुजायाः कर्त्ता । चौरस्य चौरं वा रुजति रोगः । अज्वरिसन्तापेरिति किम् ? आद्यूनं ज्वरयति सन्तापयति वा । भाव इति किम् ? मैत्रं रुजति श्लेष्मा ।।१३।।

**जास-नाट-क्राथ-पिषो हिंसायाम् ।२।२।१४।।**

१. बलीवर्दान् मैत्रः खं१ ।।

हिंसार्थानामेषां व्याप्यं कर्म वा स्यात् । चौरस्य चौरं वोज्जासयति , चौरस्य चौरं वोन्नाटयति , चौरस्योत्क्राथयति , चौरमुत्क्रथयति , चौरस्य चौरं वा पिनष्टि । हिंसायामिति किम् ? चौरं बन्धनाज्जासयति ॥१४॥

**नि-प्रेभ्यो घ्नः ।२।२।१५॥**

समस्त-व्यस्त-विपर्यस्ताभ्यां नि-प्राभ्यां परस्य हिंसार्थस्य हन्तेर्व्याप्यम् कर्म वा स्यात् । चौरस्य चौरं वा निप्रहन्ति । हिंसायामित्येव-रागादीन्निहन्ति ॥ १५॥

**विनिमेय-द्यूतपणं पणि-व्यवह्वोः ।२।२।१६॥**

विनिमेयः क्रेय-विक्रेयोऽर्थः , द्यूतपणो द्यूतजेयम् , तौ पणव्यवह्वोर्व्याप्यौ वा कर्म स्याताम् । शतस्य शतं वा पणायति , दशानां दश वा व्यवहरति । विनिमेय-द्यूतपणमिति किम् ? साधून् पणायति ॥१६॥

**उपसर्गाद् दिवः ।२।२।१७॥**

उपसर्गात् परस्य दिवो व्याप्यौ विनिमेय-द्यूतपणौ वा कर्म स्याताम् । शतस्य शतं वा प्रदीव्यति । उपसर्गादिति किम् ? शतस्य दीव्यति ॥१७॥

**न ।२।२।१८॥**

अनुपसर्गस्य दिवो व्याप्यौ विनमेय-द्यूतपणौ कर्म न स्याताम् । शतस्य दीव्यति ॥१८॥

**करणं च ।२।२।१९॥**

दिवः करणं 'कर्म करणं च' युगपत् स्यात् । अक्षान् दीव्यति , अक्षैर्दीव्यति , अक्षैर्देवयते मैत्रश्चैत्रेण ॥१९॥

**अधेः शीङ्-स्था-ऽऽस आधारः ।२।२।२०॥**

अधेः संबद्धानां शीङ्-स्था-ऽऽसामाधारः कर्म स्यात् । ग्राममधिशेते , अधितिष्ठति , अध्यास्ते वा ॥२०॥

**उपान्वध्याङ्वसः ।२।२।२१॥**

उपादिविशिष्टस्य वसतेराधारः कर्म स्यात् । ग्राममुपवसति , अनुवसति , अधिवसति , आवसति वा ॥२१॥

**वाऽभिनिविशः ।२।२।२२॥**

अभि-निभ्यामुपसृष्टस्य विशेराधारः कर्म वा स्यात् । ग्राममभिनिविशते ,

कल्याणे अभिनिविशते ॥२२॥

**कालाध्व-भाव-देशं वाऽकर्म चाऽकर्मणाम् ।२।२।२३॥**

कालादिराधारोऽकर्मणां धातूनां योगे कर्माऽकर्म च युगपद् वा स्यात् । मासमास्ते , क्रोशं शेते , गोदोहमास्ते , कुरूनास्ते । पक्षे-मासे आस्ते इत्यादि । अकर्म चेति किम् ? मासमास्यते । अकर्मणामिति किम् ? रात्रावुद्देशोऽधीतः ॥२३॥

**साधकतमं करणम् ।२।२।२४॥**

क्रियायां प्रकृष्टोपकारकं करणं स्यात् । दानेन भोगानाप्रोति ॥२४॥

**कर्माभिप्रेयः संप्रदानम् ।२।२।२५॥**

**कर्मणा** व्याप्येन क्रियया वा यमभिप्रेयते स सम्प्रदानं स्यात् । देवाय बलिं दत्ते , राज्ञे कार्यमाचष्टे , पत्ये शेते ॥२५॥

**स्पृहेर्व्याप्यं वा ।२।२।२६॥**

स्पृहेर्व्याप्यं वा संप्रदानं स्यात् । पुष्पेभ्यः पुष्पाणि वा स्पृहयति ॥२६॥

**क्रुध्-द्रुहेर्ष्या-ऽसूयार्थैर्यं प्रति कोपः ।२।२।२७॥**

क्रुधाद्यर्थैर्धातुभिर्योगे यं प्रति कोपस्तत् सम्प्रदानं स्यात् । मैत्राय क्रुध्यति द्रुह्यति ईर्ष्यति असूयति वा । यं प्रतीति किम् ? मनसा क्रुध्यति । कोप इति किम् ? शिष्यस्य कुप्यति विनयार्थम् ॥२७॥

**नोपसर्गात् क्रुद्-द्रुहा ।२।२।२८॥**

सोपसर्गाभ्यां क्रुद्-द्रुहिभ्यां योगे यं प्रति कोपस्तत् संप्रदानं न स्यात् । मैत्रमभिक्रुध्यति अभिद्रुह्यति वा । उपसर्गादिति किम् ? मैत्राय क्रुध्यति द्रुह्यति वा ॥२८॥

**अपायेऽवधिरपादानम् ।२।२।२९॥**

अपाये-विश्लेषे योऽवधिस्तद् अपादानं स्यात् । वृक्षात् पर्णं पतति , व्याघ्राद् बिभेति , अधर्माज्जुगुप्सते विरमति वा , धर्मात् प्रमाद्यति , चौरेभ्यस्त्रायते , अध्ययनात् पराजयते , यवेभ्यो गां रक्षति , उपाध्यायादन्तर्धत्ते , शृङ्गाच्छरो जायते , हिमवतो गङ्गा प्रभवति , **वलभ्याः शत्रुञ्जयः** षड् योजनानि , कार्त्तिक्या आग्रहायणी मासे , चैत्रान्मैत्रः पटुः , माथुराः पाटलिपुत्रकेभ्य आढ्यतराः ॥२९॥

**क्रियाश्रयस्याऽऽधारोऽधिकरणम् ।२।२।३०॥**

क्रियाश्रयस्य कर्तुः कर्मणो वाऽऽधारोऽधिकरणम् स्यात् । कटे आस्ते , स्थाल्यां तण्डुलान् पचति ।।३०।।

**नाम्नः प्रथमैक-द्वि-बहौ ।२।२।३१।।**

एक-द्वि-बहावर्थमात्रे वर्त्तमानान्नाम्नः परा यथासंख्यं सि-औ-जस्लक्षणा प्रथमा स्यात् । डित्थः , गौः , शुक्लः , कारकः , दण्डी ।।३१।।

**आमन्त्र्ये ।२।२।३२।।**

आमन्त्र्यार्थवृत्तेर्नाम्नः प्रथमा स्यात् । हे देव ! । आमन्त्र्य इति किम् ? राजा भव ।।३२।।

**गौणात् समया-निकषा-हा-धिगन्तरा-ऽन्तरेणा-ऽति-येन-तेनैर्द्वितीया ।२।२।३३।।**

समयादिभिर्युक्ताद् गौणान्नाम्न एक-द्वि-बहौ यथासंख्यममौ-शसिति द्वितीया स्यात् । समया ग्रामम् । निकषा गिरिं नदी । हा ! मैत्रं व्याधिः । धिग् जाल्मम् । अन्तराऽन्तरेण वा निषधं नीलं च विदेहाः । अन्तरेण धर्मं सुखं न स्यात् । अतिवृद्धं कुरून् महद् बलम् । येन पश्चिमां गतः । तेन पश्चिमां नीतः ।।३३।।

**द्वित्वेऽधोऽध्युपरिभिः ।२।२।३४।।**

द्विरुक्तैरेभिर्युक्तान्नाम्नो द्वितीया स्यात् । अधोऽधो ग्रामम् , अध्यधि ग्रामम् , उपर्युपरि ग्रामं ग्रामाः । द्वित्व इति किम् ? अधो गृहस्य ।।३४।।

**सर्वोभया-ऽभि-परिणा तसा ।२।२।३५।।**

सर्वादिभिस्तसन्तैर्युक्ताद् द्वितीया स्यात् । सर्वतः , उभयतः , अभितः , परितो वा ग्रामं वनानि ।।३५।।

**लक्षण-वीप्स्येत्थम्भूतेष्वभिना ।२।२।३६।।**

लक्षणं चिह्नम् , वीप्साकर्म वीप्स्यम् , इत्थम्भूतः कश्चित् प्रकारमापन्नः , एषु वर्त्तमानादभिना युक्ताद् द्वितीया स्यात् । वृक्षमभि विद्युत् , वृक्षं वृक्षमभि सेकः , साधुर्मैत्रो मातरमभि । लक्षणादिष्विति किम् ? यदत्र ममाभि स्यात् तद् दीयताम् ।।३६।।

**भागिनि च प्रति-पर्यनुभिः ।२।२।३७।।**

स्वीकार्योऽशो भागस्तत्स्वामी भागी , तत्र लक्षणादिषु च वर्त्तमानात्

प्रत्यादिभिर्युक्ताद् द्वितीया स्यात् । यदत्र मां प्रति मां परि मामनु स्यात् तद् दीयताम् । वृक्षं प्रति परि अनु वा विद्युत् । वृक्षं वृक्षं प्रति परि अनु वा सेकः । साधुर्मैत्रो मित्रं प्रति परि अनु वा । एतेष्विति किम् ? अनु वनस्याऽशनिर्गता ॥३७॥

## हेतु-सहार्थेऽनुना ।२।२।३८॥

**हेतु**र्जनकः , **सहार्थ**स्तुल्ययोगो विद्यमानता च , तद्विषयोऽप्युपचारात् , तयोर्वर्तमानादनुना युक्ताद् द्वितीया स्यात् । जिनजन्मोत्सवमन्वागच्छन् सुराः , गिरिमन्ववसिता सेना ॥३८॥

## उत्कृष्टेऽनूपेन ।२।२।३९॥

उत्कृष्टार्थादनूपाभ्यां युक्ताद् द्वितीया स्यात् । अनु **सिद्धसेनं** कवयः । उपो**मास्वातिं** संग्रहीतारः ॥३९॥

## कर्मणि ।२।२।४०॥

नाम्नः कर्मणि द्वितीया स्यात् । कटं करोति , तण्डुलान् पचति , रविं पश्यति , अजां नयति ग्रामम् , गां दोग्धि पयः ॥४०॥

## क्रियाविशेषणात् ।२।२।४१॥

क्रियाया यद्विशेषणं तद्वाचिनो द्वितीया स्यात् । स्तोकं पचति । सुखं स्थाता ॥४१॥

## काला-ऽध्वनोर्व्याप्तौ ।२।२।४२॥

व्याप्तिरत्यन्तसंयोगः , व्याप्तौ द्योत्यायां कालाध्ववाचिभ्यां द्वितीया स्यात् । मासं गुडधानाः , कल्याणी , अधीते वा । क्रोशं गिरिः , कुटिला नदी , अधीते वा । व्याप्ताविति किम् ? मासस्य मासे वा द्व्यहं गुडधानाः । क्रोशस्य क्रोशे वा एकदेशे कुटिला नदी ॥४२॥

## सिद्धौ तृतीया ।२।२।४३॥

**सिद्धौ** फलनिष्पत्तौ द्योत्यायां कालाध्ववाचिभ्यां टा-भ्याम्-भिस्लक्षणा तृतीया यथासंख्यमेक-द्वि-बहौ स्यात् । मासेन मासाभ्यां मासैर्वाऽऽवश्यकमधीतम् । [1]*क्रोशेन क्रोशाभ्यां क्रोशैर्वा प्राभृतमधीतम्* । सिद्धाविति किम् ? मासमधीत

१. * * J3 विना नास्ति ॥

आचारो न तु गृहीतः ॥४३॥

**हेतु-कर्तृ-करणेत्थम्भूतलक्षणे ।२।२।४४॥**

फलसाधनयोग्यो हेतुः , कंञ्चित्[1] प्रकारमापन्नस्य चिह्नमित्थम्भूतलक्षणम् । हेत्वादिवृत्तेर्नाम्नस्तृतीया स्यात् । धनेन कुलम् , चैत्रेण कृतम् , दात्रेण लुनाति , अपि त्वं कमण्डलुना छात्रमद्राक्षीः ? ॥४४॥

**सहार्थे ।२।२।४५॥**

**सहार्थे** तुल्ययोगे विद्यमानतायां च गम्यमाने नाम्नस्तृतीया स्यात् । पुत्रेण सहाऽऽगतः स्थूलो गोमान् ब्राह्मणो वा ।

**एकेनापि सुपुत्रेण , सिंही स्वपिति निर्भरम् ।**
*सहैव दशभिः पुत्रैर्भारं वहति गर्दभी ॥१॥ ॥४५॥*

**यद्भेदैस्तद्वदाख्या ।२।२।४६॥**

यस्य भेदिनो **भेदैः** प्रकारैस्तद्वतोऽर्थस्याऽऽख्या निर्देशः स्यात् तद्वाचिनस्तृतीया स्यात् । अक्ष्णा काणः , पादेन खञ्जः , प्रकृत्या दर्शनीयः । तद्वद्ग्रहणं किम् ? अक्षि काणं पश्य । आख्येति प्रसिद्धिपरिग्रहार्थम् , तेनाऽक्ष्णा दीर्घ इति न स्यात् ॥४६॥

**कृताद्यैः ।२।२।४७॥**

कृताद्यैर्निषेधार्थैर्युक्तात् तृतीया स्यात् । कृतं तेन , किं गतेन ॥४७॥

**काले भान्नवाऽऽधारे ।२।२।४८॥**

कालवृत्तेर्नक्षत्रार्थादाधारे तृतीया वा स्यात् । पुष्येण पुष्ये वा पायसमश्नीयात् । काल इति किम् ? पुष्येऽर्कः । भादिति किम् ? तिलपुष्पेषु यत् क्षीरम् । आधार इति किम् ? अद्य पुष्यं विद्धि ॥४८॥

**प्रसितोत्सुका-ऽवबद्धैः ।२।२।४९॥**

एतैर्युक्तादाधारवृत्तेस्तृतीया वा स्यात् । केशैः केशेषु वा प्रसितः , गृहेण गृहे वा उत्सुकः , केशैः केशेषु वाऽवबद्धः ॥४९॥

**व्याप्ये द्विद्रोणादिभ्यो वीप्सायाम् ।२।२।५०॥**

व्याप्यवृत्तिभ्यो द्विद्रोणादिभ्यो वीप्सायां तृतीया वा स्यात् । द्विद्रोणेन , द्विद्रोणं

१.किंचि° खं१,२ J3 ।एवं २।२।३६वृत्तावपि प्रत्यन्तरेषु ॥२.* * पा१ J3 विना नास्ति ॥

द्विद्रोणं वा धान्यं क्रीणाति । पञ्चकेन , पञ्चकं पञ्चकं वा पशून् क्रीणाति ॥५०॥

**समो ज्ञोऽस्मृतौ वा ।२।२।५१॥**

अस्मृत्यर्थस्य संजानातेर्यद् व्याप्यं तद्वृत्तेस्तृतीया वा स्यात् । मात्रा मातरं वा संजानीते । अस्मृताविति किम् ? मातरं संजानाति ॥५१॥

**दामः संप्रदानेऽधर्म्ये आत्मने च ।२।२।५२॥**

सं[1]पूर्वस्य दामः संप्रदानेऽधर्म्ये वर्त्तमानात् तृतीया स्यात् , तत्सन्नियोगे च दाम आत्मनेपदम् । दास्या संप्रयच्छते कामुकः । अधर्म्य इति किम् ? पत्न्यै संप्रयच्छति ॥५२॥

**चतुर्थी ।२।२।५३॥**

संप्रदाने वर्त्तमानादेक-द्वि-बहौ यथासंख्यं ङे-भ्याम्-भ्यस्लक्षणा चतुर्थी स्यात् । द्विजाय गां दत्ते , पत्ये शेते ॥५३॥

**तादर्थ्ये ।२।२।५४॥**

तस्मा इदं तदर्थम् , तद्भावे सम्बन्धविशेषे द्योत्ये चतुर्थी स्यात् । यूपाय दारु रन्धनाय स्थाली ॥५४॥

**रुचि-कृप्यर्थ-धारिभिः प्रेय-विकारोत्तमर्णेषु ।२।२।५५॥**

रुच्यर्थैः कृप्यर्थैर्धारिणा च योगे यथासंख्यं प्रेय-विकारोत्तमर्णवृत्तेश्चतुर्थी स्यात् । मैत्राय रोचते धर्मः , मूत्राय कल्पते यवागूः , चैत्राय शतं धारयति ॥५५॥

**प्रत्याङः श्रुवार्थिनि ।२।२।५६॥**

प्रत्याङ्भ्यां परेण श्रुवा युक्तादर्थिन्यभिलाषुके वर्त्तमानाच्चतुर्थी स्यात् । द्विजाय गां प्रतिशृणोति आशृणोति वा ॥५६॥

**प्रत्यनोर्गृणाऽऽख्यातरि ।२।२।५७॥**

प्रत्यनुभ्यां परेण गृणा योगे आख्यातृवृत्तेश्चतुर्थी स्यात् । गुरवे प्रतिगृणाति अनुगृणाति वा ॥५७॥

**यद्वीक्ष्ये राधीक्षी ।२।२।५८॥**

**वीक्ष्यं** विमतिपूर्वकं निरूप्यम् , तद्विषया क्रियापि । यस्य वीक्ष्ये राधीक्षी वर्त्तेते तद्वृत्तेश्चतुर्थी स्यात् । मैत्राय राध्यति ईक्षते वा , ईक्षितव्यं परस्त्रीभ्यः ।

१. **संपूर्वस्य** J3 विना नास्ति । **संदामः** खं२ ॥

वीक्ष्य इति किम् ? मैत्रमीक्षते ॥५८॥

**उत्पातेन ज्ञाप्ये ।२।२।५९॥**

उत्पात आकस्मिकं निमित्तम् , तेन ज्ञाप्ये वर्तमानाच्चतुर्थी स्यात् ।

*वाताय[1] कपिला विद्युदातपायातिलोहिनी ।*

*पीता वर्षाय विज्ञेया , दुर्भिक्षाय सिता भवेत् ॥१॥*

उत्पातेनेति किम् ? राज्ञ इदं छत्रमायान्तं विद्धि राजानम् ॥५९॥

**श्लाघ-ह्नु-स्था-शपा प्रयोज्ये ।२।२।६०॥**

श्लाघादिभिर्धातुभिर्युक्ताद् ज्ञाप्ये प्रयोज्ये वर्तमानाच्चतुर्थी स्यात् । मैत्राय श्लाघते , ह्नुते , तिष्ठते , शपते वा । प्रयोज्य इति किम् ? मैत्रायाऽऽत्मानं श्लाघते , आत्मनो मा भूत् ॥६०॥

**तुमोऽर्थे भाववचनात् ।२।२।६१॥**

क्रियायां क्रियार्थायामुपपदे तुम् वक्ष्यते , तस्यार्थे ये भाववाचिनो घञादयस्तदन्तात् स्वार्थे चतुर्थी स्यात् । पाकाय इज्यायै वा व्रजति । तुमोऽर्थ इति किम् ? पाकस्य । भाववचनादिति किम् ? पक्ष्यतीति पाचकस्य व्रज्या ॥६१॥

**गम्यस्याऽऽप्ये ।२।२।६२॥**

यस्यार्थो गम्यते न चासौ प्रयुज्यते स गम्यः , गम्यस्य तुमो व्याप्ये वर्त्तमानाच्चतुर्थी स्यात् । एधेभ्यः फलेभ्यो वा व्रजति । गम्यस्येति किम् ? एधानाहर्तुं याति ॥६२॥

**गतेर्नवाऽनाप्ते ।२।२।६३॥**

**गतिः** पादविहरणम् , तस्या आप्येऽनाप्ते वर्तमानाच्चतुर्थी वा स्यात् । ग्रामं ग्रामाय वा याति , विप्रनष्टः पन्थानं पथे वा याति । गतेरिति किम् ? स्त्रियं गच्छति , मनसा मेरुं गच्छति । अनाप्त इति किम् ? संप्राप्ते मा भूत्- पन्थानं याति ॥६३॥

**मन्यस्याऽनावादिभ्योऽतिकुत्सने ।२।२।६४॥**

अतीव कुत्स्यते येन तदतिकुत्सनम् , तस्मिन् मन्यतेर्व्याप्ये वर्तमानान्नावादिवर्जाच्चतुर्थी वा स्यात् । न त्वा तृणाय तृणं वा मन्ये । मन्यस्येति किम् ? न त्वा

१. पा१ J3 विना **'वाताय कपिला विद्युत्'** एतावानेव पाठः , न संपूर्णः श्लोकः ॥

तृणं मन्वे । अनावादिभ्य इति किम् ? न त्वा नावम् अन्नं शुकं शृगालं काकं वा मन्ये । कुत्सन इति किम् ? न त्वा तृणाय मन्ये , युष्मदो मा भूत् । अतीति किम् ? त्वां तृणं मन्ये ॥६४॥

**हित-सुखाभ्याम् ।२।२।६५॥**

आभ्यां युक्ताच्चतुर्थी वा स्यात् । आमयाविने आमयाविनो वा हितम् । चैत्राय चैत्रस्य वा सुखम् ॥६५॥

**तद् भद्रा-ऽऽयुष्य-क्षेमा-ऽर्थार्थेनाऽऽशिषि ।२।२।६६॥**

**तदिति** हित-सुखयोः परामर्शः , हिताद्यर्थैर्युक्तादाऽऽशिषि गम्यायां चतुर्थी वा स्यात् । हितं पथ्यं वा जीवेभ्यो जीवानां वा भूयात् । सुखं शं वा प्रजाभ्यः प्रजानां वा भूयात् । भद्रमस्तु जिनशासनाय जिनशासनस्य वा । आयुष्यमस्तु चैत्राय चैत्रस्य वा । क्षेमं भूयात् सङ्घाय सङ्घस्य वा । अर्थः कार्यं वा भूयान्मैत्राय मैत्रस्य वा ॥६६॥

**परिक्रयणे ।२।२।६७॥**

परिक्रीयते नियतकालं स्वीक्रियते येन तस्मिन् वर्त्तमानाच्चतुर्थी वा स्यात् । शताय शतेन वा परिक्रीतः ॥६७॥

**शक्तार्थ-वषड्-नमः-स्वस्ति-स्वाहा-स्वधाभिः ।२।२।६८॥**

शक्तार्थैर्वषडादिभिश्च युक्ताच्चतुर्थी नित्यं स्यात् । शक्तः प्रभुर्वा मल्लो मल्लाय । वषडग्नये । नमोऽर्हद्भ्यः । स्वस्ति प्रजाभ्यः । स्वाहेन्द्राय । स्वधा पितृभ्यः ॥६८॥

**पञ्चम्यपादाने ।२।२।६९॥**

अपादाने एक-द्वि-बहौ यथासंख्यं ङसि-भ्याम्-भ्यस्लक्षणा पञ्चमी स्यात् । ग्रामाद् गोदाभ्यां वनेभ्यो वा आगच्छति ॥६९॥

**आङाऽवधौ ।२।२।७०॥**

अवधिर्मर्यादाऽभिविधिश्च , तद्वृत्तेराङा युक्तात् पञ्चमी स्यात् । आ पाटलिपुत्राद् वृष्टो मेघः ॥७०॥

**पर्यपाभ्यां वर्ज्ये ।२।२।७१॥**

**वर्ज्ये** वर्जनीये वर्त्तमानात् पर्यपाभ्यां युक्तात् पञ्चमी स्यात् । परि अप वा

पाटलिपुत्राद् वृष्टो मेघः । वर्ज्य इति किम् ? अपशब्दो मैत्रस्य ॥७१॥

**यतः प्रतिनिधि-प्रतिदाने प्रतिना ।२।२।७२॥**

**प्रतिनिधिर्**मुख्यसदृशोऽर्थः , **प्रतिदानं** गृहीतस्य विशोधनम् , ते यतः स्यातां तद्वाचिनः प्रतिना योगे पञ्चमी स्यात् । प्रद्युम्नो वासुदेवात् प्रति । तिलेभ्यः प्रति माषानस्मै प्रयच्छति ॥७२॥

**आख्यातर्युपयोगे ।२।२।७३॥**

**आख्याता** प्रतिपादयिता , तद्वाचिनः पञ्चमी स्यात् , **उपयोगे** नियमपूर्वक-विद्याग्रहणविषये । उपाध्यायादधीते आगमयति वा । उपयोग इति किम् ? नटस्य शृणोति ॥७३॥

**गम्ययपः कर्मा-ऽऽधारे ।२।२।७४॥**

**गम्यस्या**ऽप्रयुज्यमानस्य यबन्तस्य कर्मा-ऽऽधारवाचिभ्यां पञ्चमी स्यात् । प्रासादादासनाद्वा प्रेक्षते । गम्यग्रहणं किम् ? प्रासादमारुह्य शेते , आसने उपविश्य भुङ्क्ते ॥७४॥

**प्रभृत्यन्यार्थ-दिक्शब्द-बहिरारादितरैः ।२।२।७५॥**

प्रभृत्यर्थैरन्यार्थैर्दिक्शब्दैर्बहिरादिभिश्च युक्तात् पञ्चमी स्यात् । ततः प्रभृति , ग्रीष्मादारभ्य , अन्यो भिन्नो वा मैत्रात् ; ग्रामात् पूर्वस्यां दिशि वसति , उत्तरो विन्ध्यात् पारियात्रः , पश्चिमो रामाद् युधिष्ठिरः , बहिर् आरात् इतरो वा ग्रामात् ॥७५॥

**ऋणाद्धेतोः ।२।२।७६॥**

हेतुभूतऋणवाचिनः पञ्चमी स्यात् । शताद् बद्धः । हेतोरिति[1] किम् ? शतेन बद्धः ॥७६॥

**गुणादस्त्रियां नवा ।२।२।७७॥**

अस्त्रीवृत्तेर्हेतुभूतगुणवाचिनः पञ्चमी वा स्यात् । जाड्यात् जाड्येन वा बद्धः , ज्ञानात् ज्ञानेन वा मुक्तः । अस्त्रियामिति किम् ? बुद्ध्या मुक्तः ॥७७॥

**आरादर्थैः ।२।२।७८॥**

**आराद्** दूरमन्तिकं च , तदर्थैर्युक्तात् पञ्चमी वा स्यात् । दूरं विप्रकृष्टं वा

१. हेताविति खं१ विना ॥

ग्रामाद् ग्रामस्य वा । अन्तिकमभ्यासं वा ग्रामाद् ग्रामस्य वा ॥७८॥

**स्तोका-ऽल्प-कृच्छ्र-कतिपयादसत्त्वे करणे ।२।२।७९॥**

यतो द्रव्ये शब्दप्रवृत्तिः स गुणो**ऽसत्त्वं** तेनैव वा रूपेणाऽभिधीयमानं द्रव्यादि , तस्मिन् करणे वर्त्तमानेभ्यः स्तोकादिभ्यः पञ्चमी वा स्यात् । स्तोकात् स्तोकेन वा , अल्पादल्पेन वा , कृच्छ्रात् कृच्छ्रेण वा , कतिपयात् कतिपयेन वा मुक्तः । असत्त्व इति किम् ? स्तोकेन विषेण हतः ॥७९॥

**अज्ञाने ज्ञः षष्ठी ।२।२।८०॥**

अज्ञानार्थस्य ज्ञो यत् करणं तद्वाचिन एक-द्वि-बहौ यथासंख्यं ङसोसाम्लक्षणा षष्ठी नित्यं स्यात् । सर्पिषः सर्पिषोः सर्पिषां वा जानीते । अज्ञान इति किम् ? स्वरेण पुत्रं जानाति । करण इत्येव-तैलं सर्पिषो जानाति ॥८०॥

**शेषे ।२।२।८१॥**

कर्मादिभ्योऽन्यस्तदविवक्षारूपः स्व-स्वामिभावादिसम्बन्ध[१]ः **शेषः** , तत्र षष्ठी स्यात् । राज्ञः पुरुषः , उपगोरपत्यम् , माषाणामश्नीयात् ॥८१॥

**रि-रिष्टात्-स्तादस्तादसतसाता ।२।२।८२॥**

एतत्प्रत्ययान्तैर्युक्तात् षष्ठी स्यात् । उपरि उपरिष्टात् परस्तात् पुरस्तात् अधस्तात् पुरः दक्षिणतः उत्तराद् वा ग्रामस्य ॥८२॥

**कर्मणि कृतः ।२।२।८३॥**

कृदन्तस्य कर्मणि षष्ठी स्यात् । अपां स्रष्टा , गवां दोह[२]ः । कर्मणीति किम् ? शस्त्रेण भेत्ता , स्तोकं पक्ता । कृत इति किम् ? भुक्तपूर्वी ओदनम् ॥८३॥

**द्विषो वाऽतृशः ।२।२।८४॥**

अतृशन्तस्य द्विषः कर्मणि षष्ठी वा स्यात् । चौरस्य चौरं वा द्विषन् ॥८४॥

**वैकत्र द्वयोः ।२।२।८५॥**

द्विकर्मकेषु धातुषु द्वयोः कर्मणोरेकतरस्मिन् षष्ठी वा स्याद् । अन्यत्र पूर्वेण नित्यमेव । अजाया नेता स्रुघ्नं स्रुघ्नस्य वा । अथवा अजामजाया वा नेता स्रुघ्नस्य ॥८५॥

**कर्तरि ।२।२।८६॥**

१. °न्धविशेषः शेषः पा१ ॥ २. दोहकः खं१,२ ॥

कृदन्तस्य कर्त्तरि षष्ठी स्यात् । भवत आसिका । कर्त्तरीति किम् ? गृहे शायिका ॥८६॥

## द्विहेतोरस्त्र्यणकस्य वा ।२।२।८७॥

स्त्र्यधिकारविहिताभ्यामणकाभ्यामन्यस्य **द्वयोः** कर्तृकर्मषष्ठ्योर्**हेतोः** कृतः कर्त्तरि षष्ठी वा स्यात् । विचित्रा सूत्राणां कृतिराचार्यस्याऽऽचार्येण वा । द्विहेतोरित्येकवचनं किम् ? आश्चर्यमोदनस्य पाकोऽतिथीनां च प्रादुर्भावः । अस्त्र्यणकस्येति किम् ? चिकीर्षा मैत्रस्य काव्यानाम् , भेदिका चैत्रस्य काष्ठानाम् ॥८७॥

## कृत्यस्य वा ।२।२।८८॥

कृत्यस्य कर्त्तरि षष्ठी वा स्यात् । त्वया तव वा कृत्यः कटः ॥८८॥

## नोभयोर्हेतोः ।२।२।८९॥

**उभयोः** कर्तृ-कर्मणोः षष्ठीहेतोः कृत्यस्योभयोरेव षष्ठी न स्यात् । नेतव्या ग्राममजा मैत्रेण ॥८९॥

## तृन्नुदन्ता-ऽव्यय-क्वस्वाना-ऽतृश्-शतृ-ङि-णकच्-खलर्थस्य ।२।२।९०॥

तृन्नादीनां कृतां कर्मकर्त्रोः षष्ठी न स्यात् । तृन्-वदिता जनापवादान् । उदन्त-कन्यामलङ्करिष्णुः , श्रद्धालुस्तत्त्वम् । अव्यय-कटं कृत्वा , ओदनं भोक्तुं व्रजति । क्वसु-ओदनं पेचिवान् । आन-कटं चक्राणः , मलयं पवमानः , ओदनं पचमानः , चैत्रेण पच्यमानः । अतृश्-अधीयंस्तत्त्वार्थम् । शतृ-कटं कुर्वन् । ङि-परीषहान् सासहिः । णकच्-कटं कारको व्रजति । खलर्थ-ईषत्करः कटो भवता , सुज्ञानं तत्त्वं त्वया ॥९०॥

## क्तयोरसदाधारे ।२।२।९१॥

**सतो** वर्त्तमानादाधाराच्चान्यत्रार्थे यौ क्त-क्तवतू तयोः कर्म-कर्त्रोः षष्ठी न स्यात् । कटः कृतो मैत्रेण , ग्रामं गतवान् । असदाधार इति किम् ? राज्ञां पूजितः , इदं सक्तूनां पीतम् ॥९१॥

## वा क्लीबे ।२।२।९२॥

क्लीबे विहितस्य क्तस्य कर्त्तरि षष्ठी वा न स्यात् । मयूरस्य मयूरेण वा नृत्तम्

॥९२॥

**अकमेरुकस्य ।२।२।९३॥**

कमेरन्यस्योकप्रत्ययान्तस्य कर्मणि षष्ठी न स्यात् । भोगानभिलाषुकः । अकमेरिति किम् ? दास्याः कामुकः ॥९३॥

**एष्यदृणेनः ।२।२।९४॥**

एष्यत्यर्थे ऋणे च विहितस्येनः कर्मणि षष्ठी न स्यात् । ग्रामं गमी आगामी वा , शतं दायी । एष्यदृणेति किम् ? साधु दायी वित्तस्य ॥९४॥

**सप्तम्यधिकरणे ।२।२।९५॥**

अधिकरणे एक-द्वि-बहौ यथासंख्यं ङ्योस्-सुब्रूपा सप्तमी स्यात्[१] । दिवि देवाः , तिलेषु तैलम् ॥९५॥

**नवा सुजर्थैः काले ।२।२।९६॥**

सुचोऽर्थो वारो येषां तत्प्रत्ययान्तैर्युक्तात् कालेऽधिकरणे वर्त्तमानात् सप्तमी वा स्यात् । द्विरह्नि अह्नो वा भुङ्क्ते, पञ्चकृत्वो मासे मासस्य वा भुङ्क्ते । काल इति किम् ? द्विः कांस्यपात्र्यां भुङ्क्ते ॥९६॥

**कुशला-ऽऽयुक्तेनाऽऽसेवायाम् ।२।२।९७॥**

आभ्यां युक्तादाधारवाचिनः सप्तमी वा स्यात् आसेवायां तात्पर्ये । कुशलो विद्यायां विद्याया वा , आयुक्तस्तपसि तपसो वा । आसेवायामिति किम् ? कुशलश्चित्रे , न तु करोति ; आयुक्तो गौः शकटे , आकृष्य युक्त इत्यर्थः ॥९७॥

**स्वामीश्वराधिपति-दायाद-साक्षि-प्रतिभू-प्रसूतैः ।२।२।९८॥**

एभिर्युक्तात् सप्तमी वा स्यात् । गोषु गवां वा स्वामी , ईश्वरः , अधिपतिः , दायादः , साक्षी , प्रतिभूः , प्रसूतो वा ॥९८॥

**व्याप्ये क्तेनः ।२।२।९९॥**

क्ताद् य इन् तदन्तस्य व्याप्ये सप्तमी नित्यं स्यात् । अधीतमनेन अधीती व्याकरणे , इष्टी यज्ञे । क्तेति किम् ? कृतपूर्वी कटम् ॥९९॥

**तद्युक्ते हेतौ ।२।२।१००॥**

१. स्यात् कटे आस्ते दिवि J3 ॥

**तेन** व्याप्येन युक्ते हेतौ वर्त्तमानात् सप्तमी स्यात् ।

*चर्मणि[1] द्वीपिनं हन्ति , दन्तयोर्हन्ति कुञ्जरम् ॥*

*केशेषु चमरीं हन्ति , सीम्नि पुष्कलको हतः ॥१॥*

तद्युक्त इति किम् ? वेतनेन धान्यं लुनाति ॥१००॥

**अप्रत्यादावसाधुना ।२।२।१०१॥**

प्रत्यादेरप्रयोगे , असाधुशब्देन युक्तात् सप्तमी स्यात् । असाधुर्मैत्रो मातरि । अप्रत्यादाविति किम् ? असाधुर्मैत्रो मातरं प्रति परि अनु अभि वा ॥१०१॥

**साधुना ।२।२।१०२॥**

अप्रत्यादौ साधुशब्देन युक्तात् सप्तमी स्यात् , सा[2]धुर्मातरि । अप्रत्यादावित्येव-साधुर्मातरं प्रति ॥१०२॥

**निपुणेन चाऽर्चायाम् ।२।२।१०३॥**

निपुण-साधुशब्दाभ्यां युक्तादप्रत्यादौ सप्तमी स्यात् , अर्चायाम् । मातरि निपुणः साधुर्वा । अचार्यामिति किम् ? निपुणो मैत्रो मातुः , मातैवैनं निपुणं मन्यत इत्यर्थः । अप्रत्यादावित्येव-निपुणो मैत्रो मा[3]तरं प्रति ॥१०३॥

**स्वेशेऽधिना ।२।२।१०४॥**

**स्वे** ईशितव्ये **ईशे** च वर्त्तमानादधिना युक्तात् सप्तमी स्यात् । अधि मगधेषु श्रेणिकः , अधि श्रेणिके मगधाः ॥१०४॥

**उपेनाऽधिकिनि ।२।२।१०५॥**

उपेन युक्तादधिकिवाचिनः सप्तमी स्यात् । उपखार्यां द्रोणः ॥१०५॥

**यद्भावो भावलक्षणम् ।२।२।१०६॥**

**भावः** क्रिया , यस्य भावेनाऽन्यो भावो लक्ष्यते तद्वाचिनः सप्तमी स्यात् । गोषु दुह्यमानासु गतः ॥१०६॥

**गते गम्येऽध्वनोऽन्तेनैकार्थ्यं वा ।२।२।१०७॥**

कुतश्चिदवधेर्विवक्षिताध्वनोऽवसानमन्तः , यद्भावो भावलक्षणं तस्या**ध्वनो-ऽ**ध्ववाचिनोऽध्वन एवा**ऽन्तेन** अन्तवाचिना **सहैकार्थ्यं** सामानाधिकरण्यं वा स्यात्

१. **'चर्मणि द्विपिनं हन्ति'** एतावानेवांशः पा१ J3 विना । न सम्पूर्णः श्लोकः ॥ २. **मातरि साधुर्मैत्रः** J3 ॥ ३. **मातरं परि** J3 विना ॥

, तद्विभक्तिस्तस्मात् स्यादित्यर्थः , **गते गम्ये**ऽप्रयुज्यमाने । गवीधुमतः सांकाश्यं चत्वारि योजनानि चतुर्षु वा योजनेषु । गत इति किम् ? दग्धेषु लुप्तेष्विति वा गतौ मा भूत् । गम्य इति किम् ? गतप्रयोगे मा भूत् । अध्वन इति किम् ? कार्तिक्या आग्रहायणी मासे । अन्तेनेति किम् ? अद्य नश्चतुर्षु गव्यूतेषु भोजनम् ॥१०७॥

**षष्ठी वाऽनादरे ।२।२।१०८॥**

यद्भावो भावलक्षणं तद्वृत्तेरनादरे षष्ठी वा स्यात् । रुदतो लोकस्य रुदति वा लोके प्राव्राजीत् ॥१०८॥

**सप्तमी चाऽविभागे निर्धारणे ।२।२।१०९॥**

जाति-गुण-क्रियादिभिः समुदायादेकदेशस्य बुद्ध्या पृथक्करणं निर्द्धारणम् , तस्मिन् गम्ये षष्ठी-सप्तम्यौ स्याताम् , **अविभागे** निर्द्धार्यमाणैकदेशस्य समुदायेन सह कथञ्चिदैक्ये शब्दाद् गम्यमाने । क्षत्रियो नृणां नृषु वा शूरः , कृष्णा गवां गोषु वा बहुक्षीरा , धावन्तो यातां यात्सु वा शीघ्रतमाः , युधिष्ठिरः श्रेष्ठतमः कुरूणां कुरुषु वा । अविभागे इति किम् ? मैत्रश्चैत्रात् पटुः ॥१०९॥

**क्रियामध्येऽध्व-काले पञ्चमी च ।२।२।११०॥**

क्रिययोर्मध्ये यावध्व-कालौ तद्वाचिभ्यां पञ्चमी-सप्तम्यौ स्याताम् । इहस्थोऽयमिष्वासः क्रोशात् क्रोशे वा लक्ष्यं विध्यति , अद्य भुक्त्वा मुनिर्द्व्यहात् द्व्यहे वा भोक्ता ॥११०॥

**अधिकेन भूयसस्ते ।२।२।१११॥**

अधिकेनाऽल्पीयोवाचिना योगे भूयोवाचिन**स्ते** सप्तमी-पञ्चम्यौ स्याताम् । अधिको द्रोणः खार्यां खार्या वा ॥१११॥

**तृतीयाऽल्पीयसः ।२।२।११२॥**

अधिकेन भूयोवाचिना योगेऽल्पीयोवाचिनस्तृतीया स्यात् । अधिका खारी द्रोणेन ॥११२॥

**पृथग्-नाना पञ्चमी च ।२।२।११३॥**

आभ्यां युक्तात् पञ्चमी तृतीया च स्यात् । पृथग् मैत्रात् मैत्रेण वा । नाना चैत्राच्चैत्रेण वा ॥११३॥

## ऋते द्वितीया च ।२।२।११४।।

ऋतेशब्देन युक्ताद् द्वितीया पञ्चमी च स्यात् । ऋते धर्मं धर्माद् वा कुतः सुखम् ? ।।११४।।

## विना ते तृतीया च ।२।२।११५।।

विनाशब्देन युक्तात् ते द्वितीया पञ्चम्यौ तृतीया च स्यात् । विना वातं वाताद् वातेन वा ।।११५।।

## तुल्यार्थैस्तृतीया-षष्ठ्यौ ।२।२।११६।।

तुल्यार्थैर्युक्तात् तृतीया-षष्ठ्यौ स्याताम् । मात्रा मातुर्वा तुल्यः समो वा ।।११६।।

## द्वितीया-षष्ठ्यावेनेनाऽनञ्चेः ।२।२।११७।।

एनप्रत्ययान्तेन युक्ताद् द्वितीया-षष्ठ्यौ स्याताम् , न चेत् सोऽञ्चेः परः स्यात् । पूर्वेण ग्रामं ग्रामस्य वा । अनञ्चेरिति किम् ? प्राग् ग्रामात् ।११७।।

## हेत्वर्थैस्तृतीयाद्याः ।२।२।११८।।

हेतुर्निमित्तम् , तद्वाचिभिर्युक्तात् तृतीयाऽऽद्याः स्युः । धनेन हेतुना , धनाय हेतवे , धनाद्धेतोः , धनस्य हेतोः , धने हेतौ वा वसति । एवं निमित्तादिभिरपि ।।११८।।

## सर्वादेः सर्वाः ।२।२।११९।।

हेत्वर्थैर्युक्तात् सर्वादेः सर्वा विभक्तयः स्युः । को हेतुः , कं हेतुम् , केन हेतुना , कस्मै हेतवे , कस्माद्धेतोः , कस्य हेतोः , कस्मिन् हेतौ वा याति ।।११९।।

## असत्त्वारादर्थात् टा-ङसि-ङ्यम् ।२।२।१२०।।

असत्त्ववाचिनो दूरार्थादन्तिकार्थाच्च टा-ङसि-ङ्यमः स्युः । गौणादिति निवृत्तम् । दूरेण दूरात् दूरे दूरं वा ग्रामस्य ग्रामाद् वा वसति । एवं विप्रकृष्टेनेत्यादि । अन्तिकेन अन्तिकात् अन्तिके अन्तिकं वा ग्रामस्य ग्रामाद् वा वसति , एवमभ्याशेनेत्यादि । असत्त्व इति किम् ? दूरोऽन्तिको वा पन्थाः ।।१२०।।

## जात्याख्यायां नवैकोऽसंख्यो बहुवत् ।२।२।१२१।।

जातेराख्या अभिधा , तस्यामेकोऽर्थोऽसंख्यः संख्याविशेषणरहितो बहुवद् वा स्यात् । संपन्ना यवाः , संपन्नो यवः । जातीति किम् ? चैत्रः । आख्यायामिति

किम् ? काश्यपप्रतिकृतिः काश्यपः । असंख्य इति किम् ? एको व्रीहिः संपन्नः सुभिक्षं करोति ॥१२१॥

**अविशेषणे द्वौ चाऽस्मदः ।२।२।१२२॥**

अस्मदो द्वावेकश्चार्थो बहुवद् वा स्यात् । **अविशेषणे** न चेत् तस्य विशेषणं स्यात् । आवां ब्रूवः , वयं ब्रूमः । अहं ब्रवीमि , वयं ब्रूमः । अविशेषण इति किम् ? आवां गार्ग्यौ ब्रूवः । अहं चैत्रो ब्रवीमि ॥१२२॥

**फल्गुनी-प्रोष्ठपदस्य भे ।२।२।१२३॥**

फल्गुनी-प्रोष्ठपदयो**र्भे** नक्षत्रे वर्त्तमानयोर्द्वावर्थौ बहुवद् वा स्याताम् । कदा पूर्वे फल्गुन्यौ , कदा पूर्वाः फल्गुन्यः । कदा पूर्वे प्रोष्ठपदे , कदा पूर्वाः प्रोष्ठपदाः । भ इति किम् ? फल्गुनीषु जाते फल्गुन्यौ कन्ये ॥१२३॥

**गुरावेकश्च ।२।२।१२४॥**

**गुरौ** गौरवार्हे वर्त्तमानस्य द्वावेकश्चार्थो बहुवद् वा स्यात् । युवां गुरू , यूयं गुरवः । एष मे पिता , एते मे पितरः ॥१२४॥

[इत्याचार्यश्री**हेमचन्द्र**विरचितायां

**सिद्धहेमचन्द्रा**भिधानस्वोपज्ञशब्दानुशासनलघुवृत्तौ]

द्वितीयस्याध्यायस्य द्वितीयः पादः समाप्तः ॥२।२॥

मूलार्कः श्रूयते शास्त्रे सर्वकल्याणकारणम् ।
अधुना **मूलराज**स्तु चित्रं लोकेषु गीयते ॥३॥

## [तृतीयः पादः ]

### नमस्-पुरसो गतेः क-ख-प-फि रः सः ।२।३।१॥

गतिसंज्ञनमस्-पुरसोः क-ख-प-फि रस्य स्[1] स्यात् । नमस्कृत्य , पुरस्कृत्य । गतेरिति किम् ? नमः कृत्वा , तिस्रः पुरः करोति ॥१॥

### तिरसो वा ।२।३।२॥

गतेस्तिरसो रस्य कखपफि स् वा स्यात् । तिरस्कृत्य , तिरःकृत्य । गतेरित्येव-तिरः कृत्वा काष्ठं गतः ॥२॥

### पुंसः[2] ।२।३।३॥

पुंसः[3] सम्बन्धिनो रस्य कखपफि स्[4] स्यात् । पुंस्कोकिलः , पुंस्खातः , पुंस्पाकः , पुंस्फलम् ॥३॥

### शिरो-ऽधसः पदे समासैक्ये ।२।३।४॥

अनयो रेफस्य पदशब्दे परे स् स्यात् समासैक्ये । शिरस्पदम् , अधस्पदम् । समासेति किम् ? शिरः पदम् । ऐक्य इति किम् ? परमशिरःपदम् ॥४॥

### अतः कृ-कमि-कंस-कुम्भ-कुशा-कर्णी-पात्रेऽनव्ययस्य ।२।३।५॥

आत् परस्याऽनव्ययस्थस्य रस्य क्रादिस्थे कखपफि परे स् स्यात् समासैक्ये । अयस्कृत् , यशस्कामः , पयस्कंसः , अयस्कुम्भः , अयस्कुशा , अयस्कर्णी[5] , अयस्पात्रम् । अत इति किम् ? वाःपात्रम् । अनव्ययस्येति किम् ? स्वःकारः । समासैक्य इत्येव-उपपयःकारः ॥५॥

### प्रत्यये ।२।३।६॥

अनव्ययस्य रस्य प्रत्ययविषये कखपफि स् स्यात् । पयस्पाशम् , पयस्कल्पम् , पयस्कम् । अनव्ययस्येत्येव-स्वःपाशम् ॥६।

### रोः काम्ये ।२।३।७॥

अनव्ययस्य रस्य रोरेव काम्ये प्रत्यये स् स्यात् । पयस्काम्यति । रोरिति किम् ? अहः काम्यति ॥७॥

---

१. सः पा१,२ खं१,२ ॥ २. पुम्सः पा२ ॥ ३. पुम्सः खं२ पा१,२ ॥ ४. सः खं२ ॥ ५. पयस्कर्णी पा२ विना ॥

## नामिनस्तयोः षः ।२।३।८।।

**तयोः** प्रत्ययस्थे कखपफि रोरेव च काम्ये , नामिनः परस्य रस्य ष् स्यात् । सर्पिष्[1]पाशम् , धनुष्कल्पम् , धानुष्कः , सर्पिष्काम्यति । नामिन इति किम् ? अयस्कल्पम् । रोः काम्य इत्येव-गीᳲकाम्यति ।।८।।

## निर्दुर्बहिराविष्प्रादुश्चतुराम् ।२।३।९।।

निरादीनां रस्य कखपफि ष् स्यात् । निष्कृतम् , दुष्कृतम् , बहिष्पीतम् आविष्कृतम् , प्रादुष्कृतम् , चतुष्पात्रम् ।।९।।

## सुचो वा ।२।३।१०।।

सुजन्तस्थस्य रस्य कखपफि ष् वा स्यात् । द्विष्करोति , द्विᳲकरोति । चतुष्फलति , चतुᳲफलति ।।१०।।

## वेसुसोऽपेक्षायाम् ।२।३।११।।

इसुसुप्रत्ययान्तस्य रस्य कखपफि ष् वा स्यात् , स्थानि-निमित्तयोरपेक्षा चेत् । सर्पिष्करोति , सर्पिᳲकरोति । धनुष्खादति , धनुᳲखादति । अपेक्षायामिति किम् ? परमसर्पिᳲकुण्डम् ।।११।।

## नैकार्थेऽक्रिये ।२।३।१२।।

न[2] विद्यते **क्रिया** प्रवृत्तिनिमित्तं यस्य तस्मि**न्नेकार्थे** तुल्याधिकरणे पदे यत् कखपफं तस्मिन् परे इसुसुप्रत्ययान्तस्य रस्य ष् न स्यात् । सर्पिᳲकालकम् । यजुᳲपीतकम् । एकार्थ इति किम् ? सर्पिष्कुम्भे , सर्पिᳲकुम्भे । अक्रिय इति किम् ? सर्पिष्क्रियते , सर्पिᳲक्रियते ।।१२।।

## समासेऽसमस्तस्य ।२।३।१३।।

पूर्वेणाऽसमस्तस्य इसुसुप्रत्ययान्तस्य रस्य कखपफि ष् स्यात् , निमित्त-निमित्तिनौ चेदेकत्र समासे स्तः । सर्पिष्कुम्भः , धनुष्फलम् । समास इति किम् ? तिष्ठतु सर्पिः , पिब त्वमुदकम् । असमस्तस्येति किम् ? परमसर्पिःकुण्डम् ।।१३।।

## भ्रातुष्पुत्र-कस्कादयः ।२।३।१४।।

भ्रातुष्पुत्रादयः कस्कादयश्च कखपफि रस्य यथासंख्यं कृतषत्वसत्वाः साधवः

१. °ष्पाशम् , धनुष्पाशम् खं३ ।। २. न क्रिया प्रवृत्ति° खं१ J3 विना ।।

स्युः । भ्रातुष्पुत्रः , परमयजुष्पात्रम् ; कस्कः , कौतस्कुतः ॥१४॥

**नाम्यन्तस्था-कवर्गात् पदान्तः कृतस्य सः शिड्-नान्तरेऽपि ।२।३।१५॥**

एभ्यः परस्य पदस्यान्तर्मध्ये कृतस्य कृतस्थस्य वा सस्य ष् स्यात् , शिटा नकारेण चाऽन्तरेऽपि । आशिषा , नदीषु , वायुषु , वधूषु , पितृषु , एषा , गोषु , नौषु , सिषेवे ; गीर्षु , हल्षु ; शक्ष्यति , क्रुङ्षु । शिड्नान्तरेऽपि-सर्पिष्षु , यजूंषि । पदान्तरिति किम् ? दधिसेक् । कृतस्येति किम् ? बिसम् ॥१५॥

**समासेऽग्नेः स्तुतः ।२।३।१६॥**

अग्नेः परस्य स्तुतः सस्य समासे ष् स्यात् । अग्निष्टुत् ॥१६॥

**ज्योतिरायुर्भ्यां च स्तोमस्य ।२।३।१७॥**

आभ्यामग्नेश्च परस्य स्तोमस्य सस्य समासे ष् स्यात् । ज्योतिःष्टोमः , आयुःष्टोमः , अग्निष्टोमः । समास इत्येव-ज्योतिः स्तोमं याति ॥१७॥

**मातृ-पितुः स्वसुः ।२।३।१८॥**

आभ्यां परस्य स्वसुः सस्य समासे ष् स्यात् । मातृष्वसा , पितृष्वसा ॥१८॥

**अलुपि वा ।२।३।१९॥**

मातृपितुः परस्य स्वसुः सस्याऽलुपि समासे वा ष् स्यात् । मातुःष्वसा , मातुःस्वसा ; पितुःष्वसा पितुःस्वसा ॥१९॥

**नि-नद्याः स्नातेः कौशले ।२।३।२०॥**

आभ्यां परस्य स्नातेः सस्य समासे ष् स्यात् , कौशले गम्यमाने । निष्णो निष्णातो वा पाके , नदीष्णो नदीष्णातो वा प्रतरणे । कौशल इति किम् ? निस्नातः , नदीस्नः यः स्रोतसा ह्रियते ॥२०॥

**प्रतेः स्नातस्य सूत्रे ।२।३।२१॥**

प्रतेः परस्य स्नातस्थस्य सस्य समासे ष् स्यात् , सूत्रे वाच्ये । प्रतिष्णातं सूत्रम् । प्रत्ययान्तोपादानं किम् ? प्रतिस्नातृ सूत्रम् ॥२१॥

**स्नानस्य नाम्नि ।२।३।२२॥**

प्रतेः परस्य स्नानस्य सः समासे ष् स्यात् , सूत्रविषये नाम्नि । प्रतिष्णानम् , सूत्रमित्यर्थः ॥२२॥

**वेः स्त्रः ।२।३।२३॥**

वेः परस्य स्तृसस्य समासे ष् स्यात् , नाम्नि । विष्टरो वृक्षः , विष्टरं पीठम् ॥२३॥

**अभिनिष्टानः ।२।३।२४॥**

अभि-निभ्यां स्तानः समासे कृतषत्वो निपात्यते नाम्नि । अभिनिष्टानो वर्णः ॥२४॥

**गवि-युधेः स्थिरस्य ।२।३।२५॥**

आभ्यां परस्य स्थिरस्य सः समासे ष् स्यात् , नाम्नि । गविष्ठिरः , युधिष्ठिरः ॥२५॥

**एत्यकः ।२।३।२६॥**

कवर्जान्नाम्यादेः परस्य स एति परे समासे ष् स्यात् , नाम्नि । हरिषेणः , श्रीषेणः । अक इति किम् ? विष्वक्सेनः ॥२६॥

**भादितो वा ।२।३।२७॥**

नक्षत्रवाचिन इदन्तात् परस्य स एति परे समासे ष् वा स्यात् , नाम्नि । रोहिणिषेणः , रोहिणिसेनः । इत इति किम् ? पुनर्वसुषेणः ॥२७॥

**वि-कु-शमि-परेः स्थलस्य ।२।३।२८॥**

एभ्यः परस्य स्थलस्य सः समासे ष् स्यात् । विष्ठलम् , कुष्ठलम् , शमिष्ठलम् , परिष्ठलम् ॥२८॥

**कपेर्गोत्रे ।२।३।२९॥**

कपेः परस्य स्थलस्य सः समासे ष् स्यात् , गोत्रे वाच्ये । कपिष्ठल ऋषिः ॥२९॥

**गो-ऽम्बा-ऽऽम्ब-सव्या-ऽप-द्वि-त्रि-भूम्यग्नि-शेकु-शङ्कु-क्वङ्गु-मञ्जि-पुञ्जि-बर्हिः-परमे-दिवेः स्थस्य ।२।३।३०॥**

एभ्यः परस्य स्थस्य सः समासे ष् स्यात् । गोष्ठम् , अम्बष्ठः , आम्बष्ठः , सव्यष्ठः , अपष्ठः , द्विष्ठः , त्रिष्ठः , भूमिष्ठः , अग्निष्ठः , शेकुष्ठः , शङ्कुष्ठः , कुष्ठः , अङ्गुष्ठः , मञ्जिष्ठः , पुञ्जिष्ठः , बर्हिष्ठः , परमेष्ठः , दिविष्ठः ॥३०॥

**निर्दुस्सोः सेध-सन्धि-साम्नाम् ।२।३।३१॥**

एभ्यः परेषां सेधादीनां सः समासे ष् स्यात् । निःषेधः , दुःषेधः , सुषेधः , निःषन्धिः , दुःषन्धिः , सुषन्धिः , निःषाम , दुःषाम , सुषाम ॥३१॥

**प्रष्ठोऽग्रगे ।२।३।३२॥**

प्रात् स्थस्य सः ष् स्यात् , अग्रगामिन्यर्थे । प्रष्ठोऽग्रगः ॥३२॥

**भीरुष्ठानादयः ।२।३।३३॥**

एते समासे कृतषत्वाः साधवः स्युः । भीरुष्ठानम् , अङ्गुलिषङ्गः ॥३३॥

**ह्रस्वान्नाम्नस्ति ।२।३।३४॥**

नाम्नो विहिते तादौ प्रत्यये ह्रस्वान्नामिनः परस्य सः ष् स्यात् । सर्पिष्टा , वपुष्टमम् । नामिन इत्येव-तेजस्ता ॥३४॥

**निसस्तपेऽनासेवायाम् ।२।३।३५॥**

निसः सस्तादौ तपतौ परे ष् स्यात् , पुनः पुनः करणाऽभावे । निष्टपति स्वर्णम् , सकृदग्निं स्पर्शयतीत्यर्थः । तीत्येव-निरतपत् ॥३५॥

**घस्-वसः ।२।३।३६॥**

नाम्यादेः परस्य घस्-वसोः सः ष् स्यात् । जक्षुः , उषितः ॥३६॥

**णिस्तोरेवाऽस्वद-स्विद-सहः षणि ।२।३।३७॥**

स्वदादिवर्जानां ण्यन्तानां स्तोरेव च सो नाम्यादेः परस्य षत्वभूते सनि ष् स्यात् । सिषेवयिषति , तुष्टूषति । स्वदादिवर्जनं किम् ? सिस्वादयिषति , सिस्वेदयिषति , सिसाहयिषति । एवेति किम् ? सुसूषति । षणीति किम् ? सिषेव , सुषुप्सति ॥३७॥

**सञ्जेर्वा ।२।३।३८॥**

ण्यन्तस्य सञ्जेर्नाम्यादेः परस्य सः षणि ष् वा स्यात् । सिषञ्जयिषति , सिसञ्जयिषति ॥३८॥

**उपसर्गात् सुग्-सुव-सो-स्तु-स्तुभोऽटयप्यद्वित्वे ।२।३।३९॥**

द्व्युक्ताभावे सुनोत्यादेः स उपसर्गस्थान्नाम्यादेः परस्य ष् स्यात् , अड्व्यवधानेऽपि । सुग्-अभिषुणोति , निःषुणोति , पर्यषुणोत् । सुव-अभिषुवति , पर्यषुवत् । सो-अभिष्यति , पर्यष्यत् । स्तु-अभिष्टौति , दुःष्टवम् , पर्यष्टौत् । स्तुभ्-अभिष्टोभते , पर्यष्टोभत । अद्वित्व इति किम् ? अभिसुसूषति ॥३९॥

**स्था-सेनि-सेध-सिच-सञ्जां द्वित्वेऽपि ।२।३।४०॥**

उपसर्गस्थान्नाम्यादेः परेषां स्थादीनां सः ष् स्यात् , द्वित्वेऽप्यटचपि । अधिष्ठास्यति , अधितष्ठौ , प्रत्यष्ठात्[1] । अभिषेणयति ,अभिषिषेणयिषति , अभ्यषेणयत् । प्रतिषेधति , प्रतिषिषेधिषति , प्रत्यषेधत् । अभिषिञ्चति , अभिषिषिक्षति , अभ्यषिञ्चत् । अभिषजति , अभिषषञ्ज , अभ्यषजत् ॥४०॥

**अङप्रतिस्तब्ध-निस्तब्धे स्तम्भः ।२।३।४१॥**

उपसर्गस्थान्नाम्यादेः परस्य स्तम्भस्सो द्वित्वेऽप्यटचपि ष् स्यात् , न चेत् स्तम्भिर्ङे प्रतिस्तब्ध-निस्तब्धयोश्च स्यात् । विष्टभ्नाति , वितष्टम्भ , प्रत्यष्टभ्नात् । ङादिवर्जनं किम् ? व्यतस्तम्भत् , प्रतिस्तब्धः , निस्तब्धः ॥४१॥

**अवाच्चाऽऽश्रयोर्जा-ऽविदूरे ।२।३।४२॥**

अवादुपसर्गात् परस्य स्तम्भः स आश्रयादिषु गम्यमानेषु द्वित्वेऽप्यटचपि ष् स्यात् , ङविषयश्चेत् स्तम्भिर्न स्यात् । **आश्रय** आलम्बनम् । दुर्गमवष्टभ्नाति , अवतष्टम्भ , अवाष्टभ्नाद् वा । **ऊर्जा** और्ज्जित्यम् । अहो ! वृषलस्यावष्टम्भः । **अविदूरम्** आसन्नम्, अदूरासन्नं च । अवष्टब्धा शरत् , अवष्टब्धे सेने । चोऽनुक्तसमुच्चये , तेन उपष्टम्भः । अङ इत्येव-अवातस्तम्भत् ॥४२॥

**व्यवात् स्वनोऽशने ।२।३।४३॥**

वेरवाच्चोपसर्गात् परस्य स्वनः सो**ऽशने** भोजने द्वित्वेऽप्यट्यपि ष् स्यात् । विष्वणति , अवष्वणति , विषष्वाण , अवषष्वाण , व्यष्वणत् , अवाष्वणत् , व्यषिष्वणत् , अवाषिष्वणत् । अशन इति किम् ? विस्वनति मृदङ्गः ॥४३॥

**सदोऽप्रतेः परोक्षायां त्वादेः ।२।३।४४॥**

प्रतिवर्जोपसर्गस्थान्नाम्यादेः परस्यः सदः सो द्वित्वेऽप्यट्यपि ष् स्यात् , परोक्षायां तु द्व्युक्तौ सत्याम् **आदेः** पूर्वस्यैव । निषीदति , निषाषद्यते[2] , न्यषीषदत्[3] , निषसाद । अप्रतेरिति किम् ? प्रतिसीदति ॥४४॥

**स्वञ्जश्च ।२।३।४५॥**

उपसर्गस्थान्नाम्यादेः परस्य स्वञ्जः सो द्वित्वेऽप्यट्यपि ष् स्यात् , परोक्षायां त्वादेरेव । अभिष्वजते , अभिषिष्वङ्क्षते , प्रत्यष्वजत , परिषस्वजे ॥४५॥

१. अत्यष्ठात् खं२ ॥ २. विषा° खं३ विना ॥ ३. व्यषी° खं२,३ विना ॥

## परि-नि-वेः सेवः ।२।३।४६॥

पर्याद्युपसर्गस्थान्नाम्यादेः परस्य सेवतेः सो द्वित्वेऽप्यट्यपि ष् स्यात् । परिषेवते , परिषिषेविषते , पर्यषेवत , निषेवते , विषिषेवे ॥४६॥

## सय-सितस्य ।२।३।४७॥

परि-नि-वेः परस्य सय-सितयोः सः ष् स्यात् । परिषयः , निषयः , विषयः , परिषितः , निषितः , विषितः ॥४७॥

## असोङ-सिवू-सह-स्सटाम् ।२।३।४८॥

परि-नि-विभ्यः परस्य सिवू-सहोः स्सटश्च सः ष् स्यात् , न चेत् सिवू-सहौ सो-ङविषयौ स्याताम् । परिषीव्यति , निषीव्यति , विषीव्यति । परिषहते , निषहते , विषहते । परिष्करोति , विष्किरः । असोङेति किम् ? परिसोढः , मा परिसीषिवत् , मा परिसीषहत् ॥४८॥

## स्तु-स्वञ्जश्चाऽटि नवा ।२।३।४९॥

परि-नि-वेः परस्य स्तु-स्वञ्जोरसोङ-सिवू-सह-स्सटां च सोऽटि सति ष् वा स्यात् । पर्यष्टौत् , पर्यस्तौत् ; न्यष्टौत् ,. न्यस्तौत् ; व्यष्टौत् , व्यस्तौत् । पर्यष्वजत , पर्यस्वजत ; न्यष्वजत , न्यस्वजत ;व्यष्वजत , व्यस्वजत । पर्यषीव्यत् , पर्यसीव्यत् ; न्यषीव्यत् , न्यसीव्यत् ; व्यषीव्यत् , व्यसीव्यत् । पर्यषहत , पर्यसहत ; न्यषहत , न्यसहत ; व्यषहत , व्यसहत । पर्यष्करोत् , पर्यस्करोत् । असोङसिवूसहेत्येव-पर्यसोढयत् , पर्यसीषिवत् , पर्यसीषहत् ॥४९॥

## निरभ्यनोश्च स्यन्दस्याऽप्राणिनि ।२।३।५०॥

एभ्यः परि-नि-वेश्च परस्याऽप्राणिकर्तृकार्थवृत्तेः स्यन्दः सः ष् वा स्यात् । निःष्यन्दते , निःस्यन्दते ; अभिष्यन्दते , अभिस्यन्दते ; अनुष्यन्दते , अनुस्यन्दते ; परिष्यन्दते , परिस्यन्दते ; निष्यन्दते , निस्यन्दते ; विष्यन्दते , विस्यन्दते तैलम् । अप्राणिनीति किम् ? परिस्यन्दते मत्स्यः ॥५०॥

## वेः स्कन्दोऽक्तयोः ।२।३।५१॥

विपूर्वस्य स्कन्दः सः ष् वा स्यात् , न चेत् क्त-क्तवतू स्याताम् । विष्कन्ता , विस्कन्ता । अक्तयोरिति किम् ? विस्कन्नः , विस्कन्नवान् ॥५१॥

## परेः ।२।३।५२॥

परेः स्कन्दः सः ष् वा स्यात् । परिष्कन्ता , परिस्कन्ता ; परिष्कण्णः , परिस्कन्नः ॥५२॥

**निर्नेः स्फुर-स्फुलोः ।२।३।५३॥**

आभ्यां परयोः स्फुर-स्फुलोः सः ष् वा स्यात् । निःष्फुरति , निःस्फुरतिः ; निष्फुरति , निस्फुरति ; निःष्फुलति , निःस्फुलति ; निष्फुलति , निस्फुलति ॥५३॥

**वेः ।२।३।५४॥**

वेः परयोः स्फुर-स्फुलोः सः ष् वा स्यात् । विष्फुरति , विस्फुरति ; विष्फुलति , विस्फुलति ॥५४॥

**स्कभ्नः ।२।३।५५॥**

वेः स्कभ्नः सः ष् नित्यं स्यात् । विष्कभ्नाति ॥५५॥

**निर्-दुः-सु-वेः सम-सूतेः ।२।३।५६॥**

एभ्यः परस्य सम-सूत्योः सः ष् स्यात् । निःषमः , दुःषमः , सुषमः , विषमः , निःषूतिः , दुःषूतिः , सुषूतिः , विषूतिः ॥५६॥

**अवः स्वपः ।२।३।५७॥**

निर्-दुः-सु-विपूर्वस्य वहीनस्य स्वपेः सः ष् स्यात् । निःषुषुपतुः , दुःषुषुपतुः , सुषुषुपतुः , विषुषुपतुः । अव इति किम् ? दुःस्वप्नः ॥५७॥

**प्रादुरुपसर्गाद्यस्वरेऽस्तेः ।२।३।५८॥**

प्रादुरुपसर्गस्थाच्च नाम्यादेः परस्याऽस्तेः सो यादौ स्वरादौ च परे ष् स्यात् । प्रादुःष्यात् , विष्यात् , निष्यात् , प्रादुःषन्ति , विषन्ति , निषन्ति[1] । यस्वर इति किम् ? प्रादुःस्तः ॥५८॥

**न स्सः ।२।३।५९॥**

कृतद्वित्वस्य सस्य ष् न स्यात् । सुपिस्स्यते ॥५९॥

**सिचो यङि ।२।३।६०॥**

सिचः सो यङि ष् न स्यात् ॥ सेसिच्यते ॥६०॥

---

१. निःषन्ति पा२,३ ॥

## गतौ सेधः ।२।३।६१॥

गत्यर्थस्य सेधः सः ष् न स्यात् । अभिसेधति गाः । गताविति किम् ? निषेधति पापात् ॥६१॥

## सुगः स्य-सनि ।२।३।६२॥

सुनोतेः सः स्ये सनि च ष् न स्यात् । अभिसोष्यति , सुसूषतेः क्विप् सुसूः ॥६२॥

## र-षृवर्णान्नो ण एकपदेऽनन्त्यस्याऽल-च-ट-तवर्ग-श-सान्तरे ।२।३।६३॥

एभ्यः परस्यैभिः सहैकस्मिन्नेव पदे स्थितस्याऽनन्त्यस्य नो णः स्यात् , ल-च-ट-तवर्गान् श-सौ च मुक्त्वाऽन्यस्मिन्निमित्त-कार्यिणोरन्तरेऽपि । तीर्णम् , पुष्णाति , नृणाम् , नॄणाम् , करणम् , बृंहणम् , अर्केण । एकपद इति किम् ? अग्निर्नयति चर्मनासिकः । अनन्त्यस्येति किम् ? वृक्षान् । लादिवर्जनं किम् ? विरलेन , मूर्च्छनम् , दृढेन , तीर्थेन , रशना , रसना ॥६३॥

## पूर्वपदस्थान्नाम्न्यगः ।२।३।६४॥

गन्तवर्जपूर्वपदस्थाद् र-षृवर्णात् परस्योत्तरपदस्थस्य नो ण् स्यात् संज्ञायाम् । द्रुणसः , खरणाः , शूर्पणखा । नाम्नीति किम् ? मेषनासिकः । अग इति किम् ? ऋगयनम् ॥६४॥

## नसस्य ।२।३।६५॥

पूर्वपदस्थाद् र-षृवर्णात् परस्य नसस्य नो ण् स्यात् । प्रणसः ॥६५॥

## निष्प्रा-ऽग्रे-ऽन्तः-खदिर-कार्श्या-ऽऽम्र-शरेक्षु-प्लक्ष-पीयुक्षाभ्यो वनस्य ।२।३।६६॥

निरादिभ्यः परस्य वनस्य नो ण् स्यात् । निर्वणम् , प्रवणम् , अग्रेवणम् , अन्तर्वणम् , खदिरवणम् , कार्श्यवणम् , आम्रवणम् , शरवणम् , इक्षुवणम् , प्लक्षवणम् , पीयुक्षावणम् ॥६६॥

## द्वि-त्रिस्वरौषधि-वृक्षेभ्यो नवाऽनिरिकादिभ्यः ।२।३।६७॥

द्विस्वरेभ्यस्त्रिस्वरेभ्यश्चेरिकादिवर्जेभ्य ओषधि-वृक्षवाचिभ्यः परस्य वनस्य नो

ण् वा स्यात् । दुर्वावणम् , दुर्वावनम् ; माषवणम् , माषवनम् ; नीवारवणम् , नीवारवनम् । वृक्ष-शिग्रुवणम् , शिग्रुवनम् ; शिरीषवणम् , शिरीषवनम् । इरिकादिवर्जनं किम् ? इरिकावनम् ॥६७॥

**गिरिनद्यादीनाम् ।२।३।६८॥**

एषाम् नो ण् वा स्यात् । गिरिणदी , गिरिनदी ; तूर्यमाणः , तूर्यमानः ॥६८॥

**पानस्य भावकरणे ।२।३।६९॥**

पूर्वपदस्थाद् रादेः परस्य भावकरणार्थस्य पानस्य नो ण् वा स्यात् । क्षीरपाणं क्षीरपानं स्यात् । कषायपाणः कषायपानः कंसः ॥६९॥

**देशे ।२।३।७०॥**

पूर्वपदस्थाद् रादेः परस्य देशविषयस्य पानस्य नो ण् नित्यम् स्यात् । क्षीरपाणा उशीनराः । देश इति किम् ? क्षीरपाना गोदुहः ॥७०॥

**ग्रामा-ऽग्रान्नियः ।२।३।७१॥**

आभ्यां परस्य नियो नो ण् स्यात् । ग्रामणीः , अग्रणीः ॥७१॥

**वाह्याद् वाहनस्य ।२।३।७२॥**

वाह्यवाचिनो रादिमतः पूर्वपदात् परस्य वाहनस्य नो ण् स्यात् । इक्षुवाहणम् । वाह्यादिति किम् ? सुरवाहनम् ॥७२॥

**अतोऽह्नस्य ।२।३।७३॥**

रादिमतोऽदन्तात् पूर्वपदात् परस्याऽह्नस्य नो ण् स्यात् । पूर्वाह्णः । अत इति किम् ? दुरह्नः । अह्नस्येति किम् ? दीर्घाह्नी शरत् ॥७३॥

**चतुस्त्रेर्हायनस्य वयसि ।२।३।७४॥**

आभ्यां पूर्वपदाभ्यां परस्य हायनस्य नो ण् स्यात् , वयसि गम्ये । चतुर्हायणो वत्सः , त्रिहायणी वडवा । वयसीति किम् ? चतुर्हायना शाला ॥७४॥

**वोत्तरपदान्तन-स्यादेरयुव-पक्वा-ऽह्नः ।२।३।७५॥**

पूर्वपदस्थाद् रादेः परस्य उत्तरपदान्तभूतस्य नाऽऽगमस्य स्यादेश्च नो ण् वा स्यात् , चेद् युवन्-पक्वा-ऽह्नसम्बन्धी न स्यात् । व्रीहिवापिणौ , व्रीहिवापिनौ ; माषवापाणि , माषवापानि ; व्रीहिवापेण , व्रीहिवापेन । युवादिवर्जनं किम्

? आर्ययूना , प्रपक्वानि , प्रपक्वानाम् , दीर्घाह्नी शरत् ।।७५।।

**कवर्गैकस्वरवति ।२।३।७६।।**

पूर्वपदस्थाद् रादेः परस्य कवर्गवत्येकस्वरवति चोत्तरपदे सति , उत्तरपदान्तनस्यादेर्नो ण् स्यात् , न चेदसौ पक्वस्य । स्वर्गकामिणौ , वृषगामिणौ ; ब्रह्महणौ , यूषपाणि । अपक्वस्येत्येव-क्षीरपक्वेन ।।७६।।

**अदुरुपसर्गान्तरो ण-हिनु-मीनाऽऽनेः ।२।३।७७।।**

दुर्वर्जोपसर्गस्थादन्तःशब्दस्थाच्च रादेः परस्यैषां नो ण् स्यात् । णेति णोपदेशा धातवः-प्रणमति , परिणायकः , अन्तर्णयति । हिनु-प्रहिणुतः । मीना-प्रमीणीतः । आनि-प्रयाणि । अदुरिति किम् ? दुर्नयः ।।७७।।

**नशः शः ।२।३।७८।।**

अदुरुपसर्गान्तःस्थाद् रादेः परस्य नशः शान्तस्य नो ण् स्यात् । प्रणश्यति , अन्तर्णश्यति । श इति किम् ? प्रनङ्क्ष्यति ।।७८।।

**नेर्ङ्मा-दा-पत-पद-नद-गद-वपी-वही-शमू-चिग्-याति-वाति-द्राति-प्साति-स्यति-हन्ति-देग्धौ ।२।३।७९।।**

अदुरुपसर्गान्तःस्थाद् रादेः परस्योपसर्गनेर्नो माङादिषु परेषु ण् स्यात् । प्रणिमिमीते , परिणिमयते । प्रणिददाति , परिणिदयते , प्रणिदधाति । प्रणिपतति । परिणिपद्यते । प्रणिनदति । प्रणिगदति । प्रणिवपति । प्रणिवहति । प्रणिशाम्यति । प्रणिचिनोति । प्रणियाति । प्रणिवाति । प्रणिद्राति[१] । प्रणिप्साति । प्रणिष्यति । प्रणिहन्ति । प्रणिदेग्धि । अन्तर्णिमिमीते ।।७९।।

**अक-खाद्यषान्ते पाठे वा ।२।३।८०।।**

धातुपाठे क-खादिः षान्तश्च यो धातुस्ताभ्यामन्यस्मिन् धातौ परेऽदुरुपसर्गान्तःस्थाद् रादेः परस्य नेर्नो ण् वा स्यात् । प्रणिपचति , प्रनिपचति । अकखादीति किम् ? प्रनिकरोति , प्रनिखनति । अषान्त इति किम् ? प्रनिद्वेष्टि । पाठ इति किम् ? प्रनिचकार ।।८०।।

**द्वित्वेऽप्यन्तेऽप्यनितेः , परेस्तु वा ।२।३।८१।।**

अदुरुपसर्गान्तःस्थाद् रादेः परस्याऽनितेर्नो द्वित्वा-ऽद्वित्वयोरन्ता-ऽनन्तयोश्च

१. अत्र खं३ समाप्तः ।।

ण् स्यात् , परिपूर्वस्य तु वा स्यात् । प्राणिणिषति , पराणिति , हे प्राण् ! । पर्यणिणिषति , पर्यनिनिषति ; पर्यणिति , पर्यनिति ; हे पर्यण् ! , हे पर्यन् ! ॥८१॥

**हनः ।२।३।८२॥**

अदुरुपसर्गान्तःस्थाद् रादेः परस्य हन्तेर्नो ण् स्यात् । प्रहण्यते , अन्तर्हण्यते ॥८२॥

**व-मि वा ।२।३।८३॥**

अदुरुपसर्गान्तःस्थाद् रादेः परस्य हन्तेर्नो व्-मोः परयोर्ण् वा स्यात् । प्रहण्वः , प्रहन्वः ; प्रहण्मि , प्रहन्मि ; अन्तर्हण्वः , अन्तर्हन्वः ; अन्तर्हण्मः , अन्तर्हन्मः ॥८३॥

**निंस-निक्ष-निन्दः कृति वा ।२।३।८४॥**

अदुरुपसर्गान्तःस्थाद् रादेः परस्य निंसादिधातोर्नो ण् वा स्यात् , कृत्प्रत्यये । प्रणिंसनम् , प्रनिंसनम् ; प्रणिक्षणम् , प्रनिक्षणम् ; प्रणिन्दनम् , प्रनिन्दनम् । कृतीति किम् ? प्रणिंस्ते ॥८४॥

**स्वरात् ।२।३।८५॥**

अदुरुपसर्गान्तःस्थाद् रादेः परस्य स्वरादुत्तरस्य कृतो नो ण् स्यात् । प्रहाणः , प्रहीणः ॥८५॥

**नाम्यादेरेव ने ।२।३।८६॥**

अदुरुपसर्गान्तःस्थाद् रादेः परस्य नाऽऽगमे सति नाम्यादेरेव धातोः परस्य स्वरात् परस्य कृतस्य नो ण् स्यात् । प्रेङ्खणम् , प्रेङ्गणीयम् । नाम्यादेरिति किम् ? प्रमङ्गनम् ॥८६॥

**व्यञ्जनादेर्नाम्युपान्त्याद् वा ।२।३।८७॥**

अदुरुपसर्गान्तःस्थाद् रादेः परो यो व्यञ्जनादिर्नाम्युपान्त्यो धातुस्ततः परस्य कृतः स्वरात् परस्य नो ण् वा स्यात् । प्रमेहणम् , प्रमेहनम् । व्यञ्जनादेरिति किम् ? प्रोहणम् ॥८७॥

**णेर्वा ।२।३।८८॥**

अदुरुपसर्गान्तःस्थाद् रादेः परस्य ण्यन्तधातोर्विहितस्य स्वरात् परस्य कृतो

नो ण् वा स्यात् । प्रमङ्क्णा , प्रमङ्क्ना । विहितविशेषणं किम् ? प्रयाप्यमाणः प्रयाप्यमान इति क्यान्तरेऽपि स्यात् ॥८८॥

**निर्विण्णः ।२।३।८९॥**

निर्विदः सत्ता-लाभ-विचारार्थात् परस्य क्तस्य नो णत्वम् स्यात् । निर्विण्णः ॥८९॥

**न ख्या-पूग्-भू-भा-कम-गम-प्याय-वेपो णेश्च ।२।३।९०॥**

अदुरुपसर्गान्तःस्थाद् रादेः परेभ्यः ख्यादिभ्योऽण्यन्त-ण्यन्तेभ्यः परस्य कृतो नो ण् न स्यात् । प्रख्यानम् , प्रख्यापनम् । प्रपवनम् , प्रपावनम् । प्रभवनम् , प्रभावना । प्रभायमानम् , प्रभापना । प्रकामिनौ , प्रकामना । अप्रगमनिः , प्रगमना । प्रप्यानः , प्रप्यायना । प्रवेपनीयम् , प्रवेपना ॥९०॥

**देशेऽन्तरोऽयन-हनः ।२।३।९१॥**

अन्तःशब्दात्परस्याऽयनस्य हन्तेश्च नो देशेऽर्थे ण् न स्यात् । अन्तरयनोऽन्तर्हननो वा देशः । देश इति किम् ? अन्तरयणम् , अन्तर्हण्यते ॥९१॥

**षात् पदे ।२।३।९२॥**

पदे परतो यः षस्ततः परस्य नो ण् न स्यात् । सर्पिष्पानम् । पद इति किम् ? सर्पिष्केण ॥९२॥

**पदेऽन्तरेऽनाङ्यतद्धिते ।२।३।९३॥**

आङन्तं तद्धितान्तं च मुक्त्वाऽन्यस्मिन् पदे निमित्त-कार्यिणोरन्तरे नो ण् न स्यात् । प्रावनद्धम् , रोषभीममुखेन । अनाङीति किम् ? प्राणद्धम् । अतद्धित इति किम् ? आर्द्रगोमयेण ॥९३॥

**हनो घि ।२।३।९४॥**

हन्तेर्नो घि निमित्त-कार्यिणोरन्तरे सति ण् न स्यात् । शत्रुघ्नः ॥९४॥

**नृतेर्यङि ।२।३।९५॥**

नृतेर्नो यङ्विषये ण् न स्यात् । नरीनृत्यते ,नरिनर्त्ति । यङीति किम् ? हरिणर्त्ती नाम कश्चित् ॥९५॥

**क्षुभ्नादीनाम् ।२।३।९६॥**

एषां नो ण् न स्यात् । क्षुभ्नाति , आचार्यानी ॥९६॥

**पाठे धात्वादेर्णो नः ।२।३।९७।।**

पाठे धात्वादेर्णो न् स्यात् । नयति । पाठ इति किम् ? णकारीयति । आदेरिति किम् ? रंणति[1] ।।९७।।

**षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः ।२।३।९८।।**

पाठे धात्वादेः षः स्[2] स्यात् , न तु ष्ट्यै-ष्ठिव-ष्वष्काम् । सहते । आदेरित्येव-लषति । ष्ट्यादिवर्जनं किम् ? ष्ठीव्यति , ष्वष्कते ।।९८।।

**ऋ-र ऌ-लं कृपोऽकृपीटादिषु ।२।३।९९**

कृपेर्ऋतः[3] ऌत् , रस्य च ल् स्यात् , न तु कृपीटादिविषयस्य । क्लृप्तः , क्लृप्यते , कल्पते , कल्पयति । अकृपीटादिष्विति किम् ? कृपीटः[4] , कृपणः[5] ।।९९।।

**उपसर्गस्याऽयौ ।२।३।१००।।**

उपसर्गस्थस्य रोऽयौ धातौ परे ल् स्यात् । प्लायते , प्लत्ययते ।।१००।।

**ग्रो यङि ।२।३।१०१।।**

यङि परे गिरते रो ल् स्यात् । निजेगिल्यते ।।१०१।।

**नवा स्वरे ।२।३।१०२।।**

ग्रो रः स्वरादौ प्रत्यये विहितस्य ल् वा स्यात् । गिलति , गिरति ; निगाल्यते , निगार्यते । विहितविशेषणं किम् ? गिरः ।।१०२।।

**परेर्घा-ऽङ्क-योगे ।२।३।१०३।।**

परिस्थस्य रो घादौ परे ल् वा स्यात् । पलिघः , परिघः ; पल्यङ्कः , पर्यङ्कः ; पलियोगः , परियोगः ।।१०३।।

**ऋफिडादीनां डश्च लः ।२।३।१०४।।**

एषाम् ऋ-रो ऌ-लौ डस्य च ल् वा स्यात् । ऌफिडः[6] , ऋफिलः ; ऌतकः , ऋतकः ; कपलिका , कपरिका ।।१०४।।

**जपादीनां पो वः ।२।३।१०५।।**

१. भणति पा२ ।। २. स पा१ । सः पा२,३ ।। ३. कृपेर्ऋतः रस्य च यथासंख्यं ऌलौ स्याताम् खं१ खसं२ ।। ४. कृपीटं पासं२ ।। ५. कृपाणः पा२,३ J3 ।। ६. ऌफिलः । ऋफिडः खं१ ।।

एषां पो वृ[1] वा स्यात् । जवा , जपा ; पारावतः , पारापतः ॥१०५॥

[इत्याचार्यश्री[2] **हेमचन्द्रा**भिधानस्वोपज्ञशब्दानुशासनलघुवृत्तौ] द्वितीयस्याध्यायस्य तृतीयः पादः समाप्तः[3] ॥२।३॥

मूलराजासिधारायां[4] निमग्ना ये महीभुजः ।
उन्मज्जन्तो विलोक्यन्ते स्वर्गगङ्गाजलेषु ते ॥७॥

१. वः खं१ पा१ ॥ २. [ ] खं१ मध्ये एव ॥ ३. **समाप्तः** खं१ पा१ मध्ये एव ॥
४. प्रा० पा२ बृहद्वृत्तौ चैवायं श्लोकः ॥

## [ चतुर्थः पादः ]

### स्त्रियां नृतोऽस्वस्रादेर्डीः ।२।४।१।।

स्त्रीवृत्तेर्नान्ताद् ऋदन्ताच्च स्वस्रादिवर्जाद्[1] ङीः स्यात् । राज्ञी , अतिराज्ञी , कर्त्री । स्त्रियामिति किम् ? पञ्च नद्यः । अस्वस्रादेरिति किम् ? स्वसा , दुहिता ।।१।।

### अधातूदृदितः ।२।४।२।।

अधातुर्य उदिद् ऋदिच्च तदन्तात् स्त्रीवृत्तेर्डीः स्यात् । भवती , अतिमहती , पचन्ती । अधात्विति किम् ? सुकन् स्त्री ।।२।।

### अञ्चः ।२।४।३।।

अञ्चन्तात् स्त्रियां ङीः स्यात् । प्राची , उदीची ।।३।।

### ण-स्वरा-ऽघोषाद् वनो रश्च ।२।४।४।।

एतदन्ताद् विहितो यो वन् तदन्तात् स्त्रियां ङीः स्यात् , तद्योगे वनोऽन्तस्य रश्च । अवावरी , धीवरी , मेरुदृश्वरी । ण-स्वरा-ऽघोषादिति किम् ? सहयुध्वा स्त्री । विहितविशेषणं किम् ? शर्वरी ।।४।।

### वा बहुव्रीहेः ।२।४।५।।

ण-स्वरा-ऽघोषाद् विहितो यो वन् तदन्ताद् बहुव्रीहेः स्त्रियां ङीर्वा स्यात् , रश्चान्तस्य । प्रियावावरी , प्रियावावा । बहुधीवरी , बहुधीवा । बहुमेरुदृश्वरी , बहुमेरुदृश्वा ।।५।।

### वा पादः।२।४।६।।

बहुव्रीहेस्तद्धेतुकपाच्छब्दान्तात् स्त्रियां ङीर्वा स्यात् । द्विपदी ,द्विपात् । बहुव्रीहिनिमित्तो यः पाद् इति विशेषणादिह न स्यात्- पादमाचष्टे पाद् , त्रयः पादोऽस्याः त्रिपात् ।।६।।

### ऊध्नः ।२।४।७।।

ऊधन्नन्ताद् बहुव्रीहेः स्त्रियां ङीः स्यात् । कुण्डोध्नी ।।७।।

### अशिशोः ।२।४।८।।

---

१. वर्जान्नाम्नः ङीः पा१ ।।

अशिशु इति बहुव्रीहेः स्त्रियां ङीः स्यात् ।अशिश्वी ॥८॥

**संख्यादेर्हायनाद् वयसि ।२।४।९॥**

संख्यादेर्हायनान्ताद् बहुव्रीहेः स्त्रियां ङीः स्यात् , वयसि गम्ये । द्विहायनी गौः । वयसीति किम् ? द्विहायना शाला ॥९॥

**दाम्नः ।२।४।१०॥**

संख्यादेर्दामन्नन्ताद् बहुव्रीहेः स्त्रियां ङीः स्यात् । द्विदाम्नी । संख्यादेरित्येव-उद्दामानं पश्य ॥१०॥

**अनो वा ।२।४।११॥**

अन्नन्ताद् बहुव्रीहेः स्त्रियां ङीर्वा स्यात् । बहुराज्ञ्यौ , बहुराजे , बहुराजानौ ॥११॥

**नाम्नि ।२।४।१२॥**

अन्नन्ताद् बहुव्रीहेः स्त्रियां संज्ञायां नित्यं ङीः स्यात् । अधिराज्ञी , सुराज्ञी नाम ग्रामः ॥१२॥

**नोपान्त्यवतः ।२।४।१३॥**

यस्योपान्त्यलुग् नास्ति तस्मादन्नन्ताद् बहुव्रीहेः स्त्रियां ङीर्न स्यात् । सुपर्वा , सुशर्मा । उपान्त्यवत इति किम् ? बहुराज्ञी ॥१३॥

**मनः ।२।४।१४॥**

मन्नन्ताद् स्त्रियां ङीर्न स्यात् । सीमानौ ॥१४॥

**ताभ्यां वाऽऽप् डित् ।२।४।१५॥**

मन्नन्ताद् बहुव्रीहेश्चाऽन्नन्तात् स्त्रियाम् आप् वा स्यात् , स च डित् । सीमे , सुपर्वे । पक्षे-सीमानौ , सुपर्वाणौ ॥१५॥

**अजादेः ।२।४।१६॥**

अजादेस्तस्यैव स्त्रियाम् आप् स्यात् । अजा , बाला , ज्येष्ठा , क्रुञ्चा ॥१६॥

**ऋचि पादः पात्पदे ।२।४।१७॥**

कृतपाद्भावपादस्य ऋच्यर्थे पात् पदेति निपात्यते । त्रिपात् , त्रिपदा गायत्री । ऋचीति किम् ? द्विपात् , द्विपदी ॥१७॥

## आत् ।२।४।१८।।

अकारान्तात् स्त्रियाम् आप् स्यात् । खट्वा , या , सा ।।१८।।

## गौरादिभ्यो मुख्यान्ङी ।२।४।१९।।

गौरादिगणान्मुख्यात् स्त्रियां ङीः स्यात् । गौरी , शबली । मुख्यादिति किम् ? बहुनदा भूमिः ।।१९।।

## अणञेयेकण्-नञ्-स्नञ्-टिताम् ।२।४।२०।।

अणादीनां योऽत् तदन्तात्तेषामेव स्त्रियां ङीः स्यात् । औपगवी , बैदी , सौपर्णेयी , आक्षिकी , स्त्रैणी , पौंस्नी , जानुदघ्नी ।।२०।।

## वयस्यनन्त्ये ।२।४।२१।।

कालकृता शरीरावस्था वयस्तस्मिन्नचरमे वर्त्तमानदकारान्तात् स्त्रियां ङीः स्यात् । कुमारी , किशोरी , वधूटी । अनन्त्य इति किम् ? वृद्धा ।।२१।।

## द्विगोः समाहारात् ।२।४।२२।।

समाहारद्विगोरदन्तात् स्त्रियां ङीः स्यात् । पञ्चपूली , दशराजी ।।२२।।

## परिमाणात् तद्धितलुक्यबिस्ताऽऽचितकम्बल्यात् ।२।४।२३।।

परितः सर्वतो मानं **परिमाणं** रूढेः प्रस्थादि , बिस्तादिवर्जपरिमाणान्ताद् द्विगोरदन्तात् तद्धितलुकि स्त्रियां ङीः स्यात् । द्वाभ्यां कुडवाभ्यां क्रीता द्विकुडवी । परिमाणादिति किम् ? पञ्चभिरश्वैः क्रीता पञ्चाश्वा । तद्धितलुकीति किम् ? द्विपण्या । बिस्तादिवर्जनं किम् ? द्विबिस्ता , द्व्याचिता , द्विकम्बल्या ।।२३।।

## काण्डात् प्रमाणादक्षेत्रे ।२।२।२४।।

प्रमाणवाचिकाण्डान्तादक्षेत्रविषयाद् द्विगोस्तद्धितलुकि स्त्रियां ङीः स्यात् । आयामः प्रमाणम् , द्वे काण्डे प्रमाणमस्याः द्विकाण्डी रज्जुः । प्रमाणादिति किम् ? द्विकाण्डा शाटी । अक्षेत्र इति किम् ? त्रिकाण्डा क्षेत्रभक्तिः ।।२४।।

## पुरुषाद् वा ।२।४।२५।।

प्रमाणवाचिपुरुषान्ताद् द्विगोस्तद्धितलुकि स्त्रियां ङीर्वा स्यात् । द्विपुरुषी द्विपुरुषा परिखा । तद्धितलुकीत्येव-पञ्च पुरुषाः समाहृताः पञ्चपुरुषी ।।२५।।

## रेवत-रोहिणाद् भे ।२।४।२६॥

आभ्यां नक्षत्रवृत्तिभ्यां स्त्रियां ङीः स्यात् । रेवती , रोहिणी , रेवत्यां जाता रेवती । भ इति किम् ? रेवता ॥२६॥

## नीलात् प्राण्यौषध्योः ।२।४।२७॥

प्राणिन्यौषधौ च नीलात् स्त्रियां ङीः स्यात् । नीली गौः , नीली औषधिः , नीलाऽन्या ॥२७॥

## क्ताच्च नाम्नि वा ।२।४।२८॥

नीलात् क्तान्ताच्च स्त्रियां संज्ञायां ङीर्वा स्यात् । नीली , नीला ; प्रबद्धविलूनी , प्रबद्धविलूना ॥२८॥

## केवल-मामक-भागधेय-पापा-ऽपर-समाना-ऽऽर्यकृत-सुमङ्गल-भेषजात् ।२।४।२९॥

एभ्यो नाम्नि स्त्रियां ङीः स्यात् । केवली ज्योतिः , मामकी , भागधेयी , पापी , अपरी , समानी , आर्यकृती , सुमङ्गली , भेषजी । नाम्नीत्येव-केवला ॥२९॥

## भाज-गोण-नाग-स्थल-कुण्ड-काल-कुश-कामुक-कट-कबरात् पक्का-ऽऽवपन-स्थूला-ऽकृत्रिमा-ऽमत्र-कृष्णा-ऽऽयसी-रिरंसु-श्रोणि-केशपाशे ।२।४।३०॥

एभ्यो यथासंख्यं पक्कादिष्वर्थेसु स्त्रियां नाम्नि ङीः स्यात् । भाजी पक्का चेत् , भाजाऽन्या । गोणी आवपनम् , गोणाऽन्या । नागी स्थूला , नागाऽन्या । स्थली अकृत्रिमा , स्थलाऽन्या । कुण्डी अमत्रम् , कुण्डाऽन्या । काली कृष्णा , कालाऽन्या । कुशी आयसी , कुशाऽन्या । कामुकी रिरंसुः , कामुकाऽन्या । कटी श्रोणिः , कटाऽन्या । कबरी केशपाशः , कबराऽन्या ॥३०॥

## नवा शोणादेः ।२।४।३१॥

शोणादेः स्त्रियां ङीर्वा स्यात् । शोणी , शोणा ; चण्डी , चण्डा ॥३१॥

## इतोऽक्त्यर्थात् ।२।४।३२॥

क्त्यर्थप्रत्ययान्तवर्जाद् इदन्तात् स्त्रियां ङीर्वा स्यात् । भूमी , भूमिः ; धूली

, धूलिः । अक्त्यर्थादिति किम् ? कृतिः , अकरणिः , हानिः ॥३२॥

**पद्धतेः ।२।४।३३॥**

अस्मात् स्त्रियां ङीर्वा स्यात् । पद्धती , पद्धतिः ॥३३॥

**शक्तेः शस्त्रे ।२।४।३४॥**

अस्माच्छस्त्रे स्त्रियां ङीर्वा स्यात् । शक्ती , शक्तिः । शस्त्र इति किम् ? शक्तिः सामर्थ्यम् ॥३४॥

**स्वरादुतो गुणादखरोः ।२।४।३५॥**

स्वरात् परो य उत् तदन्ताद् गुणवचनात् खरुवर्जात् स्त्रियां ङीर्वा स्यात् । पट्वी , पटुः । विभ्वी , विभुः । स्वरादिति किम् ? पाण्डुर्भूमिः । गुणादिति किम् ? आखुः स्त्री । अखरोरिति किम् ? खरुरियम् ॥३५॥

**श्येतैत-हरित-भरत-रोहिताद् वर्णात् तो नश्च ।२।४।३६॥**

एभ्यो वर्णवाचिभ्यः स्त्रियां ङीर्वा स्यात् , तद्योगे तो न्[१] च । श्येनी , श्येता ; एनी , एता ; हरिणी , हरिता ; भरणी , भरता ; रोहिणी , रोहिता । वर्णादिति किम् ? श्येता , एता ॥३६॥

**क्नः पलिता-ऽसितात् ।२।४।३७॥**

त इति चेति चानुवर्त्तते , आभ्यां स्त्रियां ङीर्वा स्यात् , तद्योगे तः[२] क्न् च । पलिक्नी , पलिता ; असिक्नी , असिता ॥३७॥

**असह-नञ्-विद्यमानपूर्वपदात् स्वाङ्गादक्रोडादिभ्यः ।२।४।३८॥**

सहादिवर्जपूर्वपदं यत् स्वाङ्गं तदन्तात् क्रोडादिवर्जाद् अदन्तात् स्त्रियां ङीर्वा स्यात् । पीनस्तनी , पीनस्तना ; अतिकेशी , अतिकेशा माला । सहादिवर्जनं किम् ? सहकेशा , अकेशा , विद्यमानकेशा । क्रोडादिवर्जनं किम् ? कल्याणक्रोडा , पीनगुदा , दीर्घवाला । स्वाङ्गादिति किम् ? बहुशोफा , बहुज्ञाना , बहुयवा ॥३८॥

**नासिकोदरौष्ठ-जङ्घा-दन्त-कर्ण-शृङ्गा-ऽङ्ग-गात्र-कण्ठात् ।२।४।३९॥**

सहादिवर्जपूर्वपदेभ्य एभ्यः स्वाङ्गेभ्यः स्त्रियां ङीर्वा स्यात् । तुङ्गनासिकी , तुङ्गनासिका ; कृशोदरी , कृशोदरा ; बिम्बोष्ठी , बिम्बोष्ठा ; दीर्घजङ्घी ,

१. नश्च पा१ ॥ २. त क्नः खं१ पा१ । तः क्नः पा३ ॥

दीर्घजङ्घा ; समदन्ती , समदन्ता ; चारुकर्णी , चारुकर्णा ; तीक्ष्णशृङ्गी , तीक्ष्णशृङ्गा ; मृद्वङ्गी , मृद्वङ्गा ; सुगात्री , सुगात्रा ; सुकण्ठी , सुकण्ठा । पूर्वेण सिद्धे नियमार्थमिदम् , तेन बहुस्वर-संयोगोपान्त्येभ्योऽन्येभ्यो मा भूत् -सुललाटा , सुपार्श्वा ॥३९॥

## नख-मुखादनाम्नि ।२।४।४०॥

सहादिवर्जपूर्वपदाभ्यां स्वाङ्गाभ्यामाभ्याम् असंज्ञायामेव स्त्रियां ङीर्वा स्यात् । शूर्पनखी , शूर्पनखा ; चन्द्रमुखी , चन्द्रमुखा । अनाम्नीति किम् ? शूर्पणखा , कालमुखा ॥४०॥

## पुच्छात् ।२।४।४१॥

सहादिवर्जपूर्वपदात् स्वाङ्गात् पुच्छात् स्त्रियां ङीर्वा स्यात् । दीर्घपुच्छी , दीर्घपुच्छा ॥४१॥

## कबर-मणि-विष-शरादेः ।२।४।४२॥

एतत्पूर्वपदात् पुच्छात् स्त्रियां ङीर्नित्यं स्यात् । कबरपुच्छी , मणिपुच्छी , विषपुच्छी , शरपुच्छी ॥४२॥

## पक्षाच्चोपमादेः ।२।४।४३॥

उपमापूर्वात्[१] पक्षात् पुच्छाच्च स्त्रियां ङीः स्यात् । उलूकपक्षी शाला , उलूकपुच्छी सेना ॥४३॥

## क्रीतात् करणादेः ।२।४।४४॥

करणादेः क्रीतान्ताददन्तात् स्त्रियां ङीः स्यात् । अश्वक्रीती । आदेरिति किम् ? अश्वेन क्रीता ॥४४॥

## क्तादल्पे ।२।४।४५॥

क्तान्तात् करणादेरल्पेऽर्थे स्त्रियां ङीः स्यात् । अभ्रविलिप्ती द्यौः , अल्पाभ्रेत्यर्थः । अल्प इति किम् ? चन्दनानुलिप्ता स्त्री ॥४५॥

## स्वाङ्गादेरकृत-मित-जात-प्रतिपन्नाद् बहुव्रीहेः ।२।४।४६॥

स्वाङ्गादेः कृतादिवर्जात् क्तान्ताद् बहुव्रीहेः स्त्रियां ङीः स्यात् । शङ्खभिन्नी

१. उपमानपूर्वात् पा३ बृहद्वृत्तौ च । उपमानात् पूर्वात् खं१ । ''उपमीयतेऽनयेति बाहुलकात् 'उपसर्गादातः' [५।३।११०] इत्यङ्'' इति न्याससारसमुद्धारे ॥

, ऊरुभिन्नी । कृतादिवर्जनं किम् ? दन्तकृता , दन्तमिता , दन्तजाता , दन्तप्रतिपन्ना ॥४६॥

**अनाच्छादजात्यादेर्नवा ।२।४।४७॥**

आच्छादवर्जा या जातिस्तदवयवात् कृतादिवर्जात् क्तान्ताद् बहुव्रीहेः स्त्रियां ङीर्वा स्यात् । शाङ्गरजग्धी , शाङ्गरजग्धा । आच्छादवर्जनं किम् ? वस्त्रच्छन्ना । जात्यादेरिति किम् ? मासजाता[1] । अकृताद्यन्तादित्येव-कुण्डकृता ॥४७॥

**पत्युर्नः ।२।४।४८॥**

पत्यन्ताद् बहुव्रीहेः स्त्रियां ङीर्वा स्यात् , तद्योगेऽन्तस्य न् च । दृढपत्नी , दृढपतिः । मुख्यादित्येव-बहुस्थूलपतिः पुरी ॥४८॥

**सादेः ।२।४।४९॥**

सपूर्वपदात् पत्यन्तात् स्त्रियां ङीर्वा स्यात् , तद्योगेऽन्तस्य न् च । ग्रामस्य पतिः ग्रामपत्नी , ग्रामपतिः । सादेरिति किम् ? पतिरियम् , ग्रामस्य पतिरियम् ॥४९॥

**सपत्न्यादौ ।२।४।५०॥**

एषु पतिशब्दात् स्त्रियां ङीः स्याद् न् चान्तस्य[2] । सपत्नी , एकपत्नी ॥५०॥

**ऊढायाम् ।२।४।५१॥**

पत्युः परिणीतायां स्त्रियां ङीः स्यात् , न् चाऽन्तस्य । पत्नी , वृषलस्य पत्नी ॥५१॥

**पाणिगृहीतीति ।२।४।५२॥**

पाणिगृहीतीप्रकाराः शब्दा[3] ऊढायां स्त्रियां ङ्यन्ता निपात्यन्ते । पाणिगृहीती , करगृहीती । ऊढायामित्येव-पाणिगृहीताऽन्या ॥५२॥

**पतिवत्न्यन्तर्वत्न्यौ भार्या-गर्भिण्योः ।२।४।५३॥**

**भार्या** अविधवा स्त्री , तस्यां गर्भिण्यां च यथासंख्यम् एतौ निपात्येते ॥५३॥

**जातेरयान्त-नित्यस्त्री-शूद्रात् ।२।४।५४॥**

जातिवाचिनोऽदन्तात् स्त्रियां ङीः स्यात् , न तु यान्त-नित्यस्त्री-शूद्रात् ।

१. 'मासयाता' इति बृहद्वृत्तौ । दृश्यताम् ३।१।१५२॥ २. **चास्यान्तस्य** पा१,२ खं१ ॥ ३. **शब्दाः** खं२ विना नास्ति ॥

कुक्कुटी , वृषली , नाडायनी , कठी । जातेरिति किम् ? मुण्डा । यान्तादिवर्जनं किम् ? क्षत्रिया । खट्वा । शूद्रा । आदित्येव-आखुः ॥५४॥

**पाक-कर्ण-पर्ण-वालान्तात् ।२।४।५५॥**

पाकाद्यन्ताया जातेः स्त्रियां ङीः स्यात् । ओदनपाकी , आखुकर्णी , मुद्गपर्णी , गोवाली । जातेरित्येव-बहुपाका यवागूः ॥५५॥

**असत्-काण्ड-प्रान्त-शतैकाञ्चः पुष्पात् ।२।४।५६॥**

सदादिवर्जेभ्यः परो यः पुष्पशब्दस्तदन्ताज्जातेः स्त्रियां ङीः स्यात् । शङ्खपुष्पी । सदादिवर्जनं किम् ? सत्पुष्पा , काण्डपुष्पा , प्रान्तपुष्पा , शतपुष्पा , एकपुष्पा , प्राक्पुष्पा ॥५६॥

**असम्-भस्त्रा-ऽजिनैक-शण-पिण्डात् फलात् ।२।४।५७॥**

समादिवर्जेभ्यो यः फलशब्दस्तदन्ताज्जातेः स्त्रियां ङीः स्यात् । वासीफली[1] । समादिप्रतिषेधः किम् ? संफला , भस्त्राफला , अजिनफला , एकफला , शणफला , पिण्डफला ओषधिः ॥५७॥

**अनञो मूलात् ।२।४।५८॥**

नञ्वर्जात् परो यो मूलस्तदन्ताज्जातेः स्त्रियां ङीः स्यात् । दर्भमूली , शीर्षमूली । अनञ इति किम् ? अमूला ॥५८॥

**धवाद् योगादपालकान्तात् ।२।४।५९॥**

धवो भर्त्ता , तद्वाचिनः सम्बन्धात् स्त्रीवृत्तेः पालकान्तशब्दवर्जात् ङीः स्यात् । प्रष्ठी , गणकी । धवादिति किम् ? प्रसूता । योगादिति किम् ? देवदत्तो धवः , देवदत्ता स्त्री स्वतः । अपालकान्तादिति किम् ? गोपालकस्य स्त्री गोपालिका । आदित्येव-सहिष्णोः स्त्री सहिष्णुः ॥५९॥

**पूतक्रतु-वृषाकप्यग्नि-कुसित-कुसिदादै च ।२।४।६०॥**

एभ्यो धववाचिभ्यस्तद्योगात् स्त्रीवृत्तिभ्यो ङीः स्यात् , ङीयोगे चैषामैरन्तस्य । पूतक्रतायी , वृषाकपायी , अग्नायी , कुसितायी , कुसिदायी ॥६०॥

**मनोरौ च वा ।२।४।६१॥**

---

१. बृहद्वृत्तेर्लघुवृत्तेश्च हस्तलिखितादर्शेषु वासीफला इति पाठो दृश्यते, किन्तु अन्यत्र व्याकरणेषु दासीफला इति पाठोऽपि दृश्यते ॥

धववृत्तेर्मनोर्योगात् स्त्रीवृत्तेः ङीर्वा स्यात् , ङीयोगे चास्य औरैश्चान्तस्य । मनावी , मनायी , मनुः ॥६१॥

**वरुणेन्द्र-रुद्र-भव-शर्व-मृडादान् चान्तः ।२।४।६२॥**

एभ्यो धववाचिभ्यो योगात् स्त्रीवृत्तिभ्यो ङीः स्यात् , ङीयोगे आन् चान्तः । वरुणानी , इन्द्राणी , रुद्राणी , भवानी , शर्वाणी , मृडानी ॥६२॥

**मातुला-ऽऽचार्योपाध्यायाद् वा ।२।४।६३॥**

एभ्यो धववाचिभ्यो योगात् स्त्रीवृत्तिभ्यो ङीः स्यात् , ङीयोगे चाऽऽनन्तो वा । मातुलानी , मातुली ; आचार्यानी , आचार्यी ; उपाध्यायानी , उपाध्यायी ॥६३॥

**सूर्याद् देवतायां वा ।२।४।६४॥**

सूर्याद् धववाचिनो योगाद् देवतास्त्रीवृत्तेर्ङीर्वा स्यात् , ङीयोगे चाऽऽनन्तः । सूर्याणी , सूर्या । देवतायामिति किम् ? मानुषी सूरी ॥६४॥

**यव-यवना-ऽरण्य-हिमाद् दोष-लिप्युरु-महत्त्वे ।२।४।६५॥**

एभ्यो यथासंख्यं दोषादौ गम्ये स्त्रियां ङीः स्यात् , ङीयोगे चाऽऽनन्तः । यवानी , यवनानी लिपिः , अरण्यानी , हिमानी ॥६५॥

**आर्य-क्षत्रियाद् वा ।२।४।६६॥**

आभ्यां स्त्रियां ङीर्वा स्यात् , ङीयोगे चाऽऽनन्तः । आर्याणी , आर्या ; क्षत्रियाणी , क्षत्रिया ॥६६॥

**यञो डायन् च वा ।२।४।६७॥**

यञन्तात् स्त्रियां ङीः स्यात् , ङीयोगे[1] च डायनन्तो वा स्यात् । गार्गी , गार्ग्यायणी ॥६७॥

**लोहितादिशकलान्तात्[2] ।२।४।६८॥**

लोहितादेः शकलान्तात् यञन्तात् स्त्रियां ङीः स्यात् , तद्योगे च डायनन्तः । लौहित्यायनी , शा[3]कल्यायनी ॥६८॥

**षा-ऽवटाद् वा ।२।४।६९॥**

षान्ताद् अवटाच्च यञन्तात् स्त्रियां ङीर्वा स्यात् , ङीयोगे च डायनन्तः ।

१. तद्योगे पा१ ॥ २. सक° बृहद्वृत्तिं विना सर्वत्र ॥ ३. साक° बृहद्वृत्तिं विना सर्वत्र ॥

पौतिमाष्यायणी , पौतिमाष्या ; आवट्यायनी , आवट्या ॥६९॥

**कौरव्य-माण्डूका-ऽऽसुरेः ।२।४।७०॥**

एभ्यः स्त्रियां ङीः स्यात् , ङीयोगे च डायनन्तः । कौरव्यायणी , माण्डूकायनी , आसुरायणी ॥७०॥

**इञ इतः ।२।४।७१॥**

इञन्ताद् इदन्तात् स्त्रियां ङीः स्यात् । सौतङ्गमी । इत इति किम् ? कारीषगन्ध्या ॥७१॥

**नुर्जातेः ।२।४।७२॥**

मनुष्यजातिवाचिन इदन्तात् स्त्रियां ङीः स्यात् । कुन्ती , दाक्षी । इत इत्येव-दरत् । नुरिति किम् ? तित्तिरिः । जातेरिति किम् ? निष्कौशाम्बिः ॥७२॥

**उतोऽप्राणिनश्चाऽयु-रज्ज्वादिभ्य ऊङ् ।२।४।७३॥**

उदन्तान्नृजात्यप्राणिजातिवाचिनः स्त्रियाम् ऊङ् स्यात् , न तु य्वन्ताद् रज्ज्वादिभ्यश्च । कुरूः , ब्रह्मबन्धूः ; अलाबूः , कर्कन्धूः । उत इति किम् ? वधूः । अप्राणिनश्चेति किम् ? आखुः । जातेरित्येव-पटुः स्त्री । यु-रज्ज्वादिवर्जनं किम् ? अध्वर्युः स्त्री , रज्जुः ॥७३॥

**बाह्वन्त-कद्रु-कमण्डलोर्नाम्नि ।२।४।७४॥**

बाह्वन्तात् कद्रु-कमण्डलुभ्यां च संज्ञायां स्त्रियाम् ऊङ् स्यात् । मद्रबाहूः , कद्रूः , कमण्डलूः । नाम्नीति किम् ? वृत्तबाहुः ॥७४॥

**उपमान-सहित-संहित-सह-शफ-वाम-लक्ष्मणाद्यूरोः ।२।४।७५॥**

एतत्पूर्वपदादूरोः स्त्रियाम् ऊङ् स्यात् । करभोरूः , सहितोरूः , संहितोरूः , सहोरूः , शफोरूः , वामोरूः , लक्ष्मणोरूः । उपमानाद्यादेरिति किम् ? पीनोरुः ॥७५॥

**नारी-सखी-पङ्गू-श्वश्रू ।२।४।७६॥**

एते ङ्यन्ता ऊङन्ताश्च स्त्रियां निपात्यन्ते ॥७६॥

**यूनस्तिः ।२।४।७७॥**

यूनः स्त्रियां तिः स्यात् । युवतिः । मुख्यादित्येव-निर्यूनी ॥७७॥

**अनार्षे वृद्धेऽणिञो बहुस्वर-गुरूपान्त्यस्याऽन्तस्य ष्यः ।२।४।७८॥**

अनार्षे वृद्धे विहितौ यावणिञौ तदन्तस्य सतो बहुस्वरस्य गुरूपान्त्यस्य नाम्नोऽन्तस्य ष्यः स्यात् । कारीषगन्ध्या , बालाक्या । अनार्ष इति किम् ? वासिष्ठी । वृद्ध इति किम् ? आहिच्छत्री । अणिञ इति किम् ? आर्त्तभागी । बहुस्वरेति किम् ? दाक्षी । गुरूपान्त्यस्येति किम् ? औपगवी । अणिञन्तस्य सतो बहुस्वरादिविशेषणं किम् ? दौवार्या , औडुलोम्या ॥७८॥

## कुलाख्यानाम् ।२।४।७९॥

कुलमाख्यायते यकाभिस्तासामनार्षवृद्धाणिञन्तानामन्तस्य स्त्रियां ष्यः स्यात् । पौणिक्या , गौप्या । अनार्ष इत्येव-गौतमी ॥७९॥

## क्रौड्यादीनाम् ।२।४।८०॥

क्रौडि इत्यादीनामणिञन्तानामन्तस्य स्त्रियां ष्यः स्यात् । क्रौड्या , लाड्या ॥८०॥

## भोज-सूतयोः क्षत्रिया-युवत्योः ।२।४।८१॥

अनयोरन्तस्य यथासंख्यं क्षत्रिया-युवत्योः स्त्रियोः ष्यः स्यात् । भोज्या क्षत्रिया , सूत्या युवतिः । अन्या तु भोजा , सूता ॥८१॥

## दैवयज्ञि-शौचिवृक्षि-सात्यमुग्रि-काण्ठेविद्धेर्वा ।२।४।८२॥

एषाम् इञन्तानां स्त्रियामन्तस्य ष्यो वा स्यात् । दैवयज्ञ्या , दैवयज्ञी ; शौचिवृक्ष्या , शौचिवृक्षी ; सात्यमुग्र्या , सात्यमुग्री ; काण्ठेविद्ध्या , काण्ठेविद्धी ॥८२॥

## ष्या पुत्र-पत्योः केवलयोरिच् तत्पुरुषे ।२।४।८३॥

मुख्य आबन्तष्यः पुत्र-पत्योः केवलयोः परयोस्तत्पुरुषे समासे ईच् स्यात् । कारीषगन्धीपुत्रः , कारीषगन्धीपतिः । ष्येति किम् ? इभ्यापुत्रः । केवलयोरिति किम् ? कारीषगन्ध्यापुत्रकुलम् ॥८३॥

## बन्धौ बहुव्रीहौ ।२।४।८४॥

मुख्य आबन्तष्यो बन्धौ केवले परे बहुव्रीहावीच् स्यात् । कारीषगन्धीबन्धुः । केवल इत्येव-कारीषगन्ध्याबन्धुकुलः । मुख्य इत्येव-अतिकारीषगन्ध्याबन्धुः ॥८४॥

## मात-मातृ-मातृके वा ।२।४।८५॥

मुख्य आबन्तष्यो मातादिषु केवलेषु परेषु बहुव्रीहावीज् वा स्यात् । कारीष-

गन्धीमातः , कारीषगन्ध्यामातः ; कारीषगन्धीमाता , कारीषगन्ध्यामाता । कारीषगन्धीमातृकः , कारीषगन्ध्यामातृकः ॥८५॥

**अस्य ङ्यां लुक् ।२।४।८६॥**

ङ्यां परेऽतो लुक् स्यात् । मद्रचरी ॥८६॥

**मत्स्यस्य यः ।२।४।८७॥**

मत्स्यस्य यो ङ्यां लुक् स्यात् । मत्सी ॥८७॥

**व्यञ्जनात् तद्धितस्य ।२।४।८८॥**

व्यञ्जनात् परस्य तद्धितस्य यो ङ्यां लुक् स्यात् । मनुषी । व्यञ्जनादिति किम् ? कारिकेयी । तद्धितस्येति किम् ? वैश्यी ॥८८॥

**सूर्या-ऽऽगस्त्ययोरीये च ।२।४।८९॥**

अनयोर्यो ङ्यामीये च प्रत्यये लुक् स्यात् । सूरी , आगस्ती ; सौरीयः , आगस्तीयः ॥८९॥

**तिष्य-पुष्ययोर्भाणि ।२।४।९०॥**

**भं** नक्षत्रम् , तस्याऽणि परेऽनयोर्यो लुक् स्यात् । तैषी रात्रिः , पौषमहः । भाणीति किम् ? तैष्यश्चरुः ॥९०॥

**आपत्यस्य क्य-च्व्योः ।२।४।९१॥**

व्यञ्जनात् परस्याऽऽपत्यस्य यः क्ये च्वौ च परे लुक् स्यात् । गार्गीयति , गार्गायते , गार्गीभूतः । आपत्यस्येति किम् ? साङ्काश्यीयति । व्यञ्जनादित्येव-कारिकेयायते ॥९१॥

**तद्धितयस्वरेऽनाति ।२।४।९२॥**

व्यञ्जनात् परस्याऽऽपत्यस्य यो यादावादादिवर्जस्वरादौ च तद्धिते लुक् स्यात् । गार्ग्यः , गार्गकम् । आपत्यस्येत्येव-काम्पील्यकः । तद्धितेति किम् ? वात्स्येन । अनातीति किम् ? गार्ग्यायणः ॥९२॥

**बिल्वकीयादेरीयस्य ।२।४।९३॥**

नडादिस्था बिल्वादयः , तेषां कीयप्रत्ययान्तानाम् ईयस्य तद्धितयस्वरे लुक् स्यात् । बैल्वकाः , वैणुकाः । बिल्वकीयादेरिति किम् ? नाडकीयः ॥९३॥

**न राजन्य-मनुष्ययोरके ।२।४।९४॥**

अनयोर्योऽके परे लुग् न स्यात् । राजन्यकम् , मानुष्यकम् ।।९४।।

**ङ्यादेर्गौणस्याक्विपस्तद्धितलुक्यगोणी-सूच्योः ।२।४।९५।।**

ङ्यादेः प्रत्ययस्य गौणस्याक्विबन्तस्य तद्धितलुकि लुक् स्यात् , न तु गोणी-सूच्योः । सप्तकुमारः , पञ्चेन्द्रः , पञ्चयुवा , द्विपङ्गुः । गौणस्येति किम् ? अवन्ती । अक्विप इति किम् ? पञ्चकुमारी । अगोणी-सूच्योरिति किम् ? पञ्चगोणिः , दशसूचिः ।।९५।।

**गोश्चान्ते ह्रस्वोऽनंशिसमासेयोबहुव्रीहौ ।२।४।९६।।**

गौणस्याऽक्विपो गोर्ङ्याद्यन्तस्य चान्ते वर्त्तमानस्य ह्रस्वः स्यात् , न चेदसावंशिसमासान्त ईयस्वन्तबहुव्रीह्यन्तो वा । चित्रगुः , निष्कौशाम्बिः , अतिखट्वः , अतिब्रह्मबन्धुः । गौणस्येत्येव-सुगौः , राजकुमारी । अक्विप इत्येव-प्रियगौः , प्रियकुमारी चैत्रः । गोश्चेति किम् ? अतितन्त्रीः । अन्त इति किम् ? गोकुलम् , कन्यापुरम् । अंशिसमासादिवर्जनं किम् ? अर्द्धपिप्पली , बहुश्रेयसी ना ।।९६।।

**क्लीबे ।२।४।९७।।**

नपुंसकवृत्तेः स्वरान्तस्य ह्रस्वः स्यात् । कीलालपम् , अतिनु कुलम् ।।९७।।

**वेदूतोऽनव्यय-य्वृदीच्-ङीयुवः पदे ।२।४।९८।।**

ईदूतोरुत्तरपदे परे ह्रस्वो वा स्यात् , न चेत्तावव्ययौ य्वृतौ ईचौ ङ्यौ इयुवृस्थानौ च स्याताम् । लक्ष्मिपुत्रः , लक्ष्मीपुत्रः ; खलपुपुत्रः , खलपूपुत्रः । अव्ययादिवर्जनं किम् ? काण्डीभूतम् , इन्द्रहूपुत्रः , कारीषगन्धीपुत्रः , गार्गीपुत्रः , श्रीकुलम् , भ्रूकुलम् ।।९८।।

**ङ्यापो बहुलं नाम्नि ।२।४।९९।।**

ङ्यन्तस्याऽऽबन्तस्य चोत्तरपदे परे संज्ञायां ह्रस्वः स्याद् बहुलम् । भरणिगुप्तः ; रेवतिमित्रः , रेवतीमित्रः ; शिलवहम् ; गङ्गमहः , गङ्गामहः ।।९९।।

**त्वे ।२।४।१००।।**

ङ्याबन्तस्य त्वे परे बहुलं ह्रस्वः स्यात् । रोहिणित्वम् , रोहिणीत्वम् ; अजत्वम् , अजात्वम् ।।१००।।

**भ्रुवोऽच्च कुंस-कुटयोः ।२।४।१०१।।**

अनयोः परयोर्भ्रुवो ह्रस्वोऽच्च स्यात् । भ्रुकुंसः , भ्रकुंसः ; भ्रुकुटिः , भ्रकुटिः ॥१०१॥

**मालेषीकेष्टकस्याऽन्तेऽपि भारि-तूल-चिते ।२।४।१०२॥**

एषां केवलानामन्तस्थानां च भार्यादिषु परेषु यथासंख्यं ह्रस्वः स्यात् । मालभारी , उत्पलमालभारी ; इषीकतूलम् , इष्टकचितम् ॥१०२॥

**गोण्या मेये ।२।४।१०३॥**

गोण्या मानवृत्तेरुपचारान्मेयवृत्तेर्ह्रस्वः स्यात् । गोण्या मितो गोणिः ॥१०३॥

**ङ्यादीदूतः के ।२।४।१०४॥**

ङ्यादीदूतां च के प्रत्यये ह्रस्वः स्यात् । पट्विका , सोमपकः , लक्ष्मिका , वधुका ॥१०४॥

**न कचि ।२।४।१०५॥**

ङ्यादीदूतः कचि परे ह्रस्वो न स्यात् । बहुकुमारीकः , बहुकीलालपाकः , बहुलक्ष्मीकः , बहुब्रह्मबन्धूकः ॥१०५॥

**नवाऽऽपः ।२।४।१०६॥**

आपः कचि परे ह्रस्वो वा स्यात् । प्रियखट्वकः , प्रियखट्वाकः ॥१०६॥

**इच्चाऽपुंसोऽनित्क्याप्परे ।२।४।१०७॥**

आबेव परो यस्मान्न विभक्तिस्तस्मिन्ननितः प्रत्ययस्यावयवे के परेऽपुंलिङ्गार्थाद्विहितस्याऽऽपस्स्थाने इ-ह्रस्वौ वा स्याताम् । खट्विका , खट्वका , खट्वाका । अपुंस इति किम् ? सर्विका । अनिदिति किम् ? दुर्गका । आप्पर इति किम् ? प्रियखट्वाको ना , अतिप्रियखट्वाका स्त्री । आप इत्येव-मातृका ॥१०७॥

**स्व-ज्ञा-ऽज-भस्त्राऽधातुत्ययकात् ।२।४।१०८॥**

स्व-ज्ञा-ऽज-भस्त्रेभ्यो धातु-त्यवर्जस्य यौ य-कौ ताभ्यां च परस्याऽऽपः स्थानेऽनित्क्याप्परे परत इकारो वा स्यात् । स्विका , स्वका ; ज्ञिका , ज्ञका ; अजिका , अजका ; अभस्त्रिका , अभस्त्रका ; इभ्यिका , इभ्यका ; चटकिका , चटकका । धातु-त्यवर्जनं किम् ? सुनयिका , सुपाकिका , इहत्यिका । आप इत्येव-काम्पीलियिका ॥१०८॥

**द्वयेष-सूत-पुत्र-वृन्दारस्य ।२।४।१०९॥**

एषामन्तस्यानित्क्याप्परे इर्वा स्यात् । द्विके , द्वके ; एषिका , एषका ; सूतिका , सूतका ; पुत्रिका , पुत्रका ; वृन्दारिका , वृन्दारका ॥१०९॥

**वौ वर्त्तिका ।२।४।११०॥**

शकुनावर्थे वर्त्तिका इति इत्वं वा स्यात् । वर्त्तिका , वर्त्तका । वाविति किम् ? वर्त्तिका भागुरिः ॥११०॥

**अस्याऽयत्-तत्-क्षिपकादीनाम् ।२।४।१११॥**

यदादिवर्जस्याऽतोऽनित्क्याप्परे इः स्यात्। पाचिका, मद्रिका। अनित्कीत्येव-जीवका । आप्पर इत्येव-बहुपरिव्राजका । यदादिवर्जनं किम् ? यका , सका , क्षिपका , ध्रुवका ॥१११॥

**नरिका-मामिका ।२।४।११२॥**

नरका-मामकयोरित्वं निपात्यते । नरिका , मामिका ॥११२॥

**तारका-वर्णका-ऽष्टका ज्योतिस्-तान्तव-पितृदेवत्ये ।२।४।११३॥**

एतेष्वर्थेषु यथासंख्यम् एते इवर्जा निपात्यन्ते । तारका ज्योतिः , वर्णका प्रावरणविशेषः , अष्टका पितृदेवत्यं कर्म ॥११३॥

इत्याचार्यश्री**हेमचन्द्र**विरचितायां

**सिद्धहेमचन्द्रा**भिधानस्वोपज्ञशब्दानुशासनलघुवृत्तौ

द्वितीयस्याध्यायस्य चतुर्थः पादः समाप्तः ॥२।४॥

॥द्वितीयोऽध्यायः समाप्तः ॥

श्री**मूलराज**[१]क्षितिपस्य बाहुर्बिभर्ति पूर्वाचलशृङ्गशोभाम् ।
संकोचयन् वैरिमुखाम्बुजानि यस्मिन्नयं स्फूर्जति चन्द्रहासः ॥८॥

---

१. श्लोकोऽयं केवलं प्रा० बृहद्वृत्तौ च वर्तते ॥

## ॥अथ तृतीयोऽध्यायः ॥
## [प्रथमः पादः]

**धातोः पूजार्थस्वति-गतार्थाधिपर्यतिक्रमार्थातिवर्जः प्रादिरुपसर्गः प्राक् च ।३।१।१॥**

धातोः सम्बन्धी तदर्थद्योती प्रादिरुपसर्गः स्यात् , स च धातोः प्राक् , न [1]परे , न व्यवहितः , पूजार्थौ स्वती , गतार्थावधिपरी , अतिक्रमार्थमतिं च वर्जयित्वा । प्रणयति , परिणयति । धातोरिति किम् ? वृक्षं वृक्षमभि सेकः । पूजार्थस्वत्यादिवर्जनं किम् ? सुसिक्तम् , अतिसिक्तं भवता ; अध्यागच्छति , आगच्छत्यधि , पर्यागच्छति , आगच्छति परि ; अतिसिक्त्वा । धातोरिति प्राक् चेति च गतिसंज्ञां यावत् ॥१॥

**ऊर्याद्यनुकरण-च्वि-डाचश्च गतिः ।३।१।२॥**

एते उपसर्गाश्च धातोः सम्बन्धिनो गतयः स्युः , ते च प्राग् धातोः । ऊर्यादि- ऊरीकृत्य उररीकृत्य । अनुकरण- खाट्कृत्य ; च्व्यन्त- शुक्लीकृत्य ; डाजन्त- पटपटाकृत्य ; उपसर्ग- प्रकृत्य ॥२॥

**कारिका स्थित्यादौ ।३।१।३॥**

स्थित्यादावर्थे कारिका गतिः स्यात् । **स्थितिः** मर्यादा वृत्तिर्वा । कारिकाकृत्य ॥३॥

**भूषा-ऽऽदर-क्षेपेऽलं-सद-ऽसत् ।३।१।४॥**

एष्वर्थेष्वेते यथासंख्यं गतयः स्युः । अलङ्कृत्य , सत्कृत्य , असत्कृत्य । भूषादिष्विति किम् ? अलं कृत्वा , मा कारीत्यर्थः ॥४॥

**अग्रहा-ऽनुपदेशेऽन्तरदः ।३।१।५॥**

अनयोरर्थयोरेतौ यथासंख्यं गती स्याताम् । अन्तर्हत्य , अदःकृत्यैतत्कर्त्तेति ध्यायति ॥५॥

**कणे-मनस् तृप्तौ ।३।१।६॥**

एतावव्ययौ तृप्तौ गम्यायां गती स्याताम् । कणेहत्य मनोहत्य पयः पिबति

---

१. बृहद्वृत्तेर्हस्तलिखितादर्शेऽपि परे इत्येव पाठः ॥

। तृप्ताविति किम् ? तण्डुलावयवे कणे हत्वा ॥६॥

**पुरोऽस्तमव्ययम् ।३।१।७॥**

एतावव्ययौ गती स्याताम् । पुरस्कृत्य , अस्तङ्गत्य । अव्ययमिति किम् ? पुरः कृत्वा , नगरीरित्यर्थः ॥७॥

**गत्यर्थ-वदोऽच्छः ।३।१।८॥**

अच्छेत्यव्ययं गत्यर्थानां वदश्च धातोः सम्बन्धि गतिः स्यात् । अच्छगत्य , अच्छोद्य ॥८॥

**तिरोऽन्तर्द्धौ ।३।१।९॥**

तिरोऽन्तर्द्धौ गतिः स्यात् । तिरोभूय ॥९॥

**कृगो नवा ।३।१।१०॥**

तिरोऽन्तर्द्धौ कृगः सम्बन्धि गतिर्वा स्यात् । तिरस्कृत्य , तिरःकृत्य , पक्षे तिरः कृत्वा ॥१०॥

**मध्ये-पदे-निवचने-मनस्युरस्यनत्याधाने ।३।१।११॥**

**अनत्याधानम्** अनुपश्लेषोऽनाश्चर्यं वा[1] , तद्वृत्तय एतेऽव्ययाः कृग्योगे गतयो वा स्युः । मध्येकृत्य , मध्ये कृत्वा ; पदेकृत्य , पदे कृत्वा ; निवचनेकृत्य , निवचने कृत्वा ; मनसिकृत्य , मनसि कृत्वा ; उरसिकृत्य , उरसि कृत्वा ॥११॥

**उपाजेऽन्वाजे ।३।१।१२॥**

एतावव्ययौ दुर्बलस्य भग्नस्य वा बलाधानार्थौ कृग्योगे गती वा स्याताम् । उपाजेकृत्य , उपाजे कृत्वा ; अन्वाजेकृत्य , अन्वाजे कृत्वा ॥१२॥

**स्वाम्येऽधिः ।३।१।१३॥**

स्वाम्ये गम्येऽधीत्यव्ययं कृग्योगे गतिर्वा स्यात् । चैत्रं ग्रामेऽधिकृत्य , अधि कृत्वा वा गतः । स्वाम्य इति किम् ? ग्राममधिकृत्य , उद्दिश्येत्यर्थः ॥१३॥

**साक्षादादिश्च्व्यर्थे ।३।१।१४॥**

एते च्व्यर्थवृत्तयः कृग्योगे गतयो वा स्युः । साक्षात्कृत्य , साक्षात् कृत्वा ; मिथ्याकृत्य , मिथ्या कृत्वा ॥१४॥

१. च पा२ ॥

## नित्यं हस्ते-पाणावुद्वाहे ।३।१।१५॥

एतावव्ययावुद्वाहे गम्ये कृग्योगे गती स्याताम् । हस्तेकृत्य , पाणौकृत्य । उद्वाह इति किम् ? हस्ते कृत्वा काण्डं गतः ॥१५॥

## प्राध्वं बन्धे ।३।१।१६॥

प्राध्वमित्यव्ययं बन्धार्थं कृग्योगे गतिः स्यात् । प्राध्वंकृत्य । बन्ध इति किम् ? प्राध्वं कृत्वा शकटं गतः ॥१६॥

## जीविकोपनिषदौपम्ये ।३।१।१७॥

एतावौपम्ये गम्ये कृग्योगे गती स्याताम् । जीविकाकृत्य , उपनिषत्कृत्य ॥१७॥

## नाम नाम्नैकार्थ्ये समासो बहुलम् ।३।१।१८॥

नाम नाम्ना सह ऐकार्थ्ये सामर्थ्यविशेषे सति समासो बहुलं स्यात् , लक्षणमिदमधिकारश्च , तेन बहुव्रीह्यादिसंज्ञाऽभावे यत्रैकार्थता तत्रानेनैव समासः । विस्पष्टपटुः , दारुणाध्यायकः , सर्वचर्मीणो रथः , कन्येइव , श्रुतपूर्वः । नामेति किम् ? चरन्ति गावो धनमस्य । नाम्नेति किम् ? चैत्रः पचति ॥१८॥

## सुज्-वार्थे संख्या संख्येये संख्यया बहुव्रीहिः ।३।१।१९॥

सुजर्थो वारः , वार्थो विकल्पः संशयो वा , तद्वृत्ति सङ्ख्यावाचि नाम सङ्ख्येयार्थेन सङ्ख्यानाम्ना सहैकार्थ्ये समासो बहुव्रीहिश्च स्यात् । द्विदशाः , द्वित्राः । सङ्ख्येति किम् ? गावो वा दश वा । सङ्ख्ययेति किम् ? दश वा गावो वा । सङ्ख्येय इति किम् ? द्विर्विंशतिर्गवाम् ॥१९॥

## आसन्ना-ऽदूरा-ऽधिका-ऽध्यर्द्धा-ऽर्द्धादिपूरणं द्वितीयाद्यन्यार्थे । ३।१।२०॥

आसन्नादि अर्द्धपूर्वपदं च पूरणप्रत्ययान्तं नाम संख्यानाम्नैकार्थ्ये समासः स्यात् , द्वितीयाद्यन्तस्यान्यपदस्यार्थे सङ्ख्येये वाच्ये , स च बहुव्रीहिः । आसन्नदशाः , अदूरदशाः , अधिकदशाः , अध्यर्द्धविंशाः , अर्द्धपञ्चमविंशाः ॥२०॥

## अव्ययम् ।३।१।२१॥

अव्ययं नाम सङ्ख्यानाम्नैकार्थ्ये समस्यते द्वितीयाद्यन्यार्थे सङ्ख्येये वाच्ये स च बहुव्रीहिः । उपदशाः ॥२१॥

## एकार्थं चाऽनेकं च ।३।१।२२॥

एकमनेकं च **एकार्थं** समानाधिकरणम् अव्ययं च नाम्ना द्वितीयाद्यन्तान्यपदस्यार्थे समस्यते , स च बहुव्रीहिः । आरूढवानरो वृक्षः , सुसूक्ष्मजटकेशः , उच्चैर्मुखः ॥२२॥

**उष्ट्रमुखादयः ।३।१।२३॥**

एते बहुव्रीहिसमासा निपात्यन्ते । उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः , वृषस्कन्धः ॥२३।

**सहस्तेन ।३।१।२४॥**

तेनेति तृतीयान्तेन सहोऽन्यपदार्थे समस्यते , स च बहुव्रीहिः । सपुत्र आगतः , सकर्मकः ॥२४॥

**दिशो रूढ्याऽन्तराले ।३।१।२५॥**

रूढ्या दिग्वाचि नाम रूढ्यैव दिग्वाचिना सहान्तरालेऽन्यपदार्थे वाच्ये समासो बहुव्रीहिश्च स्यात् । दक्षिणपूर्वा दिक् । रूढ्येति किम् ? ऐन्द्र्याश्च कौबेर्याश्च दिशोर्यदन्तरालमिति ॥२५॥

**तत्राऽऽदाय मिथस्तेन प्रहृत्येति सरूपेण युद्धेऽव्ययीभावः ।३।१।२६॥**

**तत्रेति** सप्तम्यन्तं **मिथ आदायेति** क्रियाव्यतिहारे , **तेनेति** तृतीयान्तं **मिथः प्रहृत्येति** क्रियाव्यतिहारे , समानरूपेण नाम्ना युद्धविषयेऽन्यपदार्थे वाच्ये समासोऽव्ययीभावश्च स्यात् । केशाकेशि , दण्डादण्डि । तत्रेति तेनेति च किम् ? केशांश्च केशांश्च गृहीत्वा , मुखं च मुखं च प्रहृत्य कृतं युद्धम् । आदायेति प्रहृत्येति च किम् ? केशेषु च केशेषु च स्थित्वा , दण्डैश्च दण्डैश्चागत्य कृतं युद्धं गृहकोकिलाभ्याम् । सरूपेणेति किम् ? हस्ते च पादे च गृहीत्वा कृतं युद्धम् । युद्ध इति किम् ? हस्ते च हस्ते चाऽऽदाय सख्यं कृतम् ॥२६॥

**नदीभिर्नाम्नि ।३।१।२७॥**

नाम नदीवाचिना संज्ञायामन्यपदार्थे[१]ऽर्थे समासोऽव्ययीभावश्च स्यात् । उन्मत्तगङ्गं देशः , तूष्णींगङ्गम् । नाम्नीति किम् ? शीघ्रगङ्गो देशः ॥२७॥

**सङ्ख्या समाहारे ।३।१।२८॥**

संख्यावाचि नदीवाचिभिः समाहारे गम्ये समासोऽव्ययीभावः स्यात् । द्वियमुनम्

१. **पदार्थे समासो** खं२ ॥

, पञ्चनदम् । समाहार इति किम् ? एकनदी ।।२८।।

**वंश्येन पूर्वार्थे ।३।१।२९।।**

विद्यया जन्मना वा एकसन्तानो वंशः , तत्र भवो वंश्यः , तद्वाचिना नाम्ना संख्यावाचि समासोऽव्ययीभावः स्यात् , पूर्वपदस्यार्थे वाच्ये । एकमुनि व्याकरणस्य , सप्तकाशि राज्यस्य । पूर्वार्थ इति किम् ? द्विमुनिकं व्याकरणम् ।।२९।।

**पारे-मध्ये-ऽग्रे-ऽन्तः षष्ठ्या वा ।३।१।३०।।**

एतानि षष्ठ्यन्तेन पूर्वपदार्थे समासोऽव्ययीभावो वा स्युः । पारेगङ्गम् , मध्येगङ्गम् , अग्रेवणम् , अन्तर्गिरम् ; पक्षे गङ्गापारम् , गङ्गामध्यम् , वनाग्रम् , गिर्यन्तः ।।३०।।

**यावदियत्त्वे ।३।१।३१।।**

इयत्त्वेऽवधारणे गम्ये यावदिति नाम नाम्ना पूर्वपदार्थे वाच्ये समासोऽव्ययीभावः स्यात् । यावदमत्रं भोजय । इयत्त्व इति किम् ? यावद् दत्तं तावद् भुक्तम् ।।३१।।

**पर्यपा-ऽऽङ्-बहिरच् पञ्चम्या ।३।१।३२।।**

एतानि पञ्चम्यन्तेन पूर्वपदार्थे वाच्ये समासोऽव्ययीभावः स्युः[1] । परित्रिगर्त्तम् , अपत्रिगर्त्तम् , आग्रामम् , बहिर्ग्रामम , प्राग्ग्रामम् । पञ्चम्येति किम् ? परि वृक्षं विद्युत् ।।३२।।

**लक्षणेनाऽभि-प्रत्याभिमुख्ये ।३।१।३३।।**

**लक्षणं** चिह्नम् , तद्वाचिनाऽऽभिमुख्यार्थावभि-प्रती पूर्वपदार्थेऽर्थे समासोऽव्ययीभावः स्याताम् । अभ्यग्नि प्रत्यग्नि शलभाः पतन्ति । लक्षणेनेति किम् ? स्रुघ्नं प्रति गतः । पूर्वपदार्थ इत्येव-अभ्यङ्का गावः ।।३३।।

**दैर्घ्येऽनुः ।३।१।३४।।**

दैर्घ्ये आयामविषये यल्लक्षणं तद्वाचिना पूर्वपदार्थेऽर्थेऽनुः समासोऽव्ययीभावः स्यात् । अनुगङ्गं वाराणसी । दैर्घ्य इति किम् ? वृक्षमनु विद्युत् ।।३४।।

**समीपे ।३।१।३५।।**

समीपार्थेऽनुः समीपिवाचिना पू[2]र्वपदार्थेऽर्थे समासोऽव्ययीभावः स्यात् । अनुवनमशनिर्गता ।।३५।।

१. स्यात् पा१ खं२ J3 ।। २. °पदार्थे समासो खं१ ।।

## तिष्ठद्ग्वित्यादयः ।३।१।३६॥

एते समासा[1] अव्ययीभावाः स्युः , यथायोगमन्यस्य पूर्वस्य वा पदस्यार्थे । तिष्ठद्गु कालः , अधोनाभं हतः ॥३६॥

## नित्यं प्रतिनाऽल्पे ।३।१।३७॥

अल्पार्थेन प्रतिना नाम नित्यं समासोऽव्ययीभावः स्यात् । शाकप्रति । अल्प इति किम् ? वृक्षं प्रति विद्युत् ॥३७॥

## सङ्ख्या-ऽक्ष-शलाकं परिणा द्यूतेऽन्यथावृत्तौ ।३।१।३८॥

संख्यावाच्यक्ष-शलाके च द्यूतविषयायामन्यथावृत्तौ वर्त्तमानेन परिणा सह नित्यं समासोऽव्ययीभावः स्यात् । एकपरि , अक्षपरि , शलाकापरि , एकेनाऽक्षेण शलाकया वा न तथा वृत्तं यथा पूर्वं जय इत्यर्थः । सङ्ख्यादीति किम् ? पाशकेन न तथा वृत्तम् । द्यूत इति किम् ? रथस्याक्षेण न तथा वृत्तम् ॥३८॥

## विभक्ति-समीप-समृद्धि-व्यृद्ध्यर्थाभावा-ऽत्यया-ऽसंप्रति-पश्चात्-क्रम-ख्याति-युगपत्-सदृक्-सम्पत्-साकल्या-ऽन्तेऽव्ययम् ।३।१।३९॥

एष्वर्थेषु वर्त्तमानमव्ययं नाम्ना सह पूर्वपदार्थे वाच्ये नित्यं समासोऽव्ययीभावः स्यात् । विभक्ति- विभक्त्यर्थः कारकम् , अधिस्त्रि । समीप-उपकुम्भम् । समृद्धि-सुमद्रम् । विगता ऋद्धिर्व्यृद्धिः-दुर्यवनम् । अर्थाभाव-निर्मक्षिकम् । अत्ययोऽतीतत्वम्-अतिवर्षम् । असम्प्रतीति सम्प्रत्युपभोगाद्यभावः-अतिकम्बलम् । पश्चात्-अनुरथम् । क्रम-अनुज्येष्ठम् । ख्याति-इतिभद्रबाहु । युगपत्- सचक्रं धेहि । सदृक्- सव्रतम् । सम्पत्-सब्रह्म साधूनाम् । साकल्य-सतृणमभ्यवहरति । अन्त-सपिण्डैषणमधीते ॥३९॥

## योग्यता-वीप्सा-ऽर्थानतिवृत्ति-सादृश्ये ।३।१।४०॥

एष्वर्थेष्वऽव्ययं नाम्ना सह पूर्वपदार्थे समासोऽव्ययीभावः स्यात् । अनुरूपम् , प्रत्यर्थम् , यथाशक्ति , सशीलमनयोः ॥४०॥

## यथाऽथा ।३।१।४१॥

थाप्रत्ययवर्जं यथेत्यव्ययं पूर्वपदार्थे समासोऽव्ययीभावः स्यात् । यथारूपं चेष्टते , यथावृद्धम् , यथासूत्रम् । अथेति किम् ? यथा चैत्रस्तथा मैत्रः ॥४१॥

१. समासोऽव्य° पामू१ । समासाऽव्य° पासं१ । समासो अव्य° खंमू०२ ॥

## गति-क्वन्यस्तत्पुरुषः ।३।१।४२।।

गतयः कुश्च नाम्ना सह नित्यं समासस्तत्पुरुषः स्युः[1], **अन्यः** बहुव्रीह्यादिलक्षण-हीनः । ऊरीकृत्य , खाट्कृत्य , प्रकृत्य , कारिकाकृत्य ; कुब्राह्मणः , कोष्णम् । अन्य इति किम् ? कुपुरुषकः ।।४२।।

## दुर्निन्दा-कृच्छ्रे ।३।१।४३।।

दुरव्ययं[2] निन्दा-कृच्छ्रवृत्ति नाम्ना सह नित्यं समासस्तत्पुरुषः स्यात् । दुष्पुरुषः , दुष्कृतम् । अन्य इत्येव— दुष्पुरुषकः ।।४३।।

## सुः पूजायाम् ।३।१।४४।।

स्वित्यव्ययं पूजार्थं नाम्ना सह नित्यं समासस्तत्पुरुषः स्यात् । सुराजा । अन्य इत्येव- सुमद्रम् ।।४४।।

## अतिरतिक्रमे च ।३।१।४५।।

अतिक्रमे पूजायां चार्थे अतीत्यव्ययं नाम्ना[3] समासस्तत्पुरुषः स्यात् । अतिस्तुत्य , अतिराजा ।।४५।।

## आङल्पे ।३।१।४६।।

आङित्यव्ययमल्पार्थं नाम्ना समासस्तत्पुरुषः स्यात् । आकडारः ।।४६।।

## प्रात्यव-परि-निरादयो गत-क्रान्त-क्रुष्ट-ग्लान-क्रान्ताद्यर्थाः प्रथमाद्यन्तैः ।३।१।४७।।

प्रादयो गताद्यर्थाः प्रथमान्तैः , अत्यादयः क्रान्ताद्यर्था द्वितीयान्तैः , अवादयः क्रुष्टाद्यर्थास्तृतीयान्तैः , पर्यादयो ग्लानाद्यर्थाश्चतुर्थ्यन्तैः , निरादयः क्रान्ताद्यर्थाः पञ्चम्यन्तैर्नित्यं समासस्तत्पुरुषः स्यात् । प्राचार्यः , समर्थः ; अतिखट्वः , उद्वेलः ; अवकोकिलः , परिवीरुत् ; पर्यध्ययनः , उत्सङ्ग्रामः ; निष्कौशाम्बिः , अपशाखः ; बाहुलकात् षष्ठ्याऽपि- अन्तर्गार्ग्यः । गताद्यर्था इति किम् ? वृक्षं प्रति विद्युत् । अन्य इत्येव- प्राचार्यको देशः ।।४७।।

## अव्ययं प्रवृद्धादिभिः ।३।१।४८।।

अव्ययं प्रवृद्धादिभिस्सह नित्यं समासस्तत्पुरुषः स्यात् । पुनःप्रवृद्धम् , अन्तर्भूतः ।।४८।।

१. स्यात् J3 ।। २. दुरित्यव्ययं खं२ ।। ३. नाम्ना सह समास° खं२ । नाम्ना सह नित्यं समास° पा३ ।।

**ङस्युक्तं कृता ।३।१।४९॥**

कृत्प्रत्ययविधायके सूत्रे ङस्यन्तनाम्नोक्तं कृदन्तेन नाम्ना नित्यं समासस्तत्पुरुषः स्यात् । कुम्भकारः । ङस्युक्तमिति किम् ? अलं कृत्वा । कृतेति किम् ? धर्मो वो रक्षतु ॥४९॥

**तृतीयोक्तं वा ।३।१।५०॥**

*दंशेस्तृतीयया [५।४।७३]* इत्यतो यत्तृतीयोक्तं नाम तत् कृदन्तेन वा समासस्तत्पुरुषः स्यात् । मूलकोपदंशम् , मूलकेनोपदंशं भुङ्क्ते ॥५०॥

**नञ् ।३।१।५१॥**

नञ् नाम नाम्ना समासस्तत्पुरुषः स्यात् । अगौः ; असूर्यंपश्या राजदाराः ॥५१॥

**पूर्वा-ऽपरा-ऽधरोत्तरमभिन्नेनांशिना ।३।१।५२॥**

पूर्वादयोंऽशार्था अंशवद्वाचिना समासस्तत्पुरुषः स्युः , न चेत् सोंऽशी भिन्नः । पूर्वकायः , अपरकायः , अधरकायः , उत्तरकायः । अभिन्नेनेति किम् ? पूर्वं छात्राणामामन्त्रयस्व । अंशिनेति किम् ? पूर्वो नाभेः कायस्य ॥५२॥

**सायाह्नादयः ।३।१।५३॥**

एतेंऽशितत्पुरुषाः साधवः स्युः । सायाह्नः , मध्यन्दिनम् ॥५३॥

**समेंऽशेऽर्द्धं नवा ।३।१।५४॥**

समांशार्थमर्द्धमंशिनाऽभिन्नेन वा समासस्तत्पुरुषः स्यात् । अर्द्धपिप्पली , पिप्पल्यर्द्धम् । समेंऽश इति किम् ? ग्रामार्द्धः ॥५४॥

**जरत्यादिभिः ।३।१।५५॥**

एभिरंशिभिरभिन्नैरर्द्धो वा समासस्तत्पुरुषः स्यात् । अर्द्धजरती , जरत्यर्द्धः ; अर्द्धोक्तम् , उक्तार्द्धः ॥५५॥

**द्वि-त्रि-चतुष्पूरणा-ऽग्रादयः ।३।१।५६॥**

पूरणप्रत्ययान्ता द्वि-त्रि-चत्वारोऽग्रादयश्चाभिन्नेनांशिना वा समासस्तत्पुरुषः स्युः । द्वितीयभिक्षा , भिक्षाद्वितीयम् ; तृतीयभिक्षा , भिक्षातृतीयम् ; तुर्यभिक्षा , भिक्षातुर्यम् ; अग्रहस्तः , हस्ताग्रम् ; तलपादः , पादतलम् ॥५६॥

**कालो द्विगौ च मेयैः ।३।१।५७॥**

कालवाच्येकवचनान्तं द्विगौ च विषये मेयवाचिना समासस्तत्पुरुषः स्यात् । मासजातः ; द्विगौ-एकमासजातः , द्व्यह्नसुप्तः । काल इति किम् ? द्रोणो धान्यस्य ॥५७॥

**स्वयं-सामी क्तेन ।३।१।५८॥**

एते अव्यये क्तान्तेन समासस्तत्पुरुषः स्याताम् । स्वयंधौतम् , सामिकृतम् । क्तेनेति किम् ? स्वयं कृत्वा ॥५८॥

**द्वितीया खट्वा क्षेपे ।३।१।५९॥**

**खट्वेति** द्वितीयान्तं **क्षेपे** निन्दायां क्तान्तेन सहैकार्थ्ये समासस्तत्पुरुषः स्यात् । खट्वारूढः । क्षेप इति किम् ? खट्वामारूढः पिताऽध्यापयति ॥५९॥

**कालः ।३।१।६०॥**

कालवाचि द्वितीयान्तं क्तान्तेन समासस्तत्पुरुषः स्यात् । रात्र्यारूढाः , अहरतिसृताः ॥६०॥

**व्याप्तौ ।३।१।६१॥**

गुण-क्रिया-द्रव्यैरत्यन्तसंयोगे या द्वितीया तदन्तं कालवाचि व्यापकार्थेन समासस्तत्पुरुषः स्यात् । मुहुर्त्तसुखम् , क्षणपाठः , दिनगुडः । व्याप्ताविति किम् ? मासं पूरको याति ॥६१॥

**श्रितादिभिः ।३।१।६२॥**

द्वितीयान्तं श्रितादिभिः समासस्तत्पुरुषः स्यात् । धर्मश्रितः , शिवगतः ॥६२॥

**प्राप्ता-ऽऽपन्नौ तयाऽच्च ।३।१।६३॥**

एतौ प्रथमान्तौ द्वितीयान्तेन समासस्तत्पुरुषः स्याताम् , तद्योगे चानयोरत्[१] स्यात् । प्राप्तजीविका , आपन्नजीविका ॥६३॥

**ईषद् गुणवचनैः ।३।१।६४॥**

ईषदव्ययं गुणवचनैः समासस्तत्पुरुषः स्यात् । ये गुणे वर्त्तित्वा तद्योगाद् गुणिनि वर्त्तन्ते ते गुणवचनाः । ईषत्पिङ्गलः , ईषद्रक्तः । गुणवचनैरिति किम् ? ईषद् गार्ग्यः ॥६४॥

**तृतीया तत्कृतैः ।३।१।६५॥**

१. रच्च स्यात् खं१,२ ॥

तृतीयान्तं तदर्थकृतैर्गुणवचनैरैकार्थ्ये समासस्तत्पुरुषः स्यात् । शङ्कुलाखण्डः , मदपटुः । तत्कृतैरिति किम् ? अक्ष्णा काणः । गुणवचनैरित्येव-दध्ना पटुः , पाटवमित्यर्थः ॥६५॥

**चतस्रार्द्धम् ।३।१।६६॥**

अर्द्धस्तृतीयान्तस्तत्कृतार्थेन चतसृशब्देन समासस्तत्पुरुषः स्यात् । अर्द्धचतस्रो मात्राः । चतस्रेति किम् ? अर्द्धेन चत्वारो द्रोणाः ॥६६॥

**ऊनार्थपूर्वाद्यैः ।३।१।६७॥**

तृतीयान्तम् ऊनार्थैः पूर्वाद्यैश्च समासस्तत्पुरुषः स्यात् । माषोनम् , माषविकलम् ; मासपूर्वः , मासावरः ॥६७॥

**कारकं कृता ।३।१।६८॥**

कारकवाचि तृतीयान्तं कृदन्तेन समासस्तत्पुरुषः स्यात् । आत्मकृतम् , नखनिर्भिन्नः , काकपेया नदी , बाष्पच्छेद्यानि तृणानि । कारकमिति किम् ? विद्ययोषितः ॥६८॥

**नविंशत्यादिनैकोऽच्चान्तः ।३।१।६९॥**

एकशब्दस्तृतीयान्तो नविंशत्यादिना सह समासस्तत्पुरुषः स्यात् , एकस्य चाऽदन्तः । एकान्नविंशतिः , एकादूनविंशतिः , एकान्नत्रिंशत् , एकादूनत्रिंशत् ॥६९॥

**चतुर्थी प्रकृत्या ।३।१।७०॥**

**प्रकृतिः** परिणामि कारणम् , एतद्वाचिनैकार्थ्ये चतुर्थ्यन्तं विकारार्थं समासस्तत्पुरुषः स्यात् । यूपदारु । प्रकृत्येति किम् ? रन्धनाय स्थाली ॥७०॥

**हितादिभिः ।३।१।७१॥**

चतुर्थ्यन्तं हिताद्यैः समासस्तत्पुरुषः स्यात् । गोहितम् , गोसुखम् ॥७१॥

**तदर्थार्थेन ।३।१।७२॥**

[१]चतुर्थ्यर्थोऽर्थो यस्य तेनार्थेन चतुर्थ्यन्तं समासस्तत्पुरुष; स्यात् । पित्रर्थं पयः , आतुरार्था यवागूः । तदर्थेति किम् ? पित्रेऽर्थः ॥७२॥

**पञ्चमी भयाद्यैः ।३।१।७३॥**

पञ्चम्यन्तं भयाद्यैरैकार्थ्ये समासस्तत्पुरुषः स्यात् । वृकभयम् , वृकभीरुः ॥७३॥

१.चतुर्थ्या अर्थो यस्य पासं३ । चतुर्थ्यर्थो यस्य J3 ॥

**क्तेनाऽसत्त्वे ।३।१।७४॥**

असत्त्ववृत्तेर्या पञ्चमी तदन्तं क्तान्तेन समासस्तत्पुरुषः स्यात् । स्तोकान्मुक्तः , अल्पान्मुक्तः । असत्त्व इति किम् ? स्तोकाद् बद्धः ॥७४॥

**परःशतादिः ।३।१।७५॥**

अयं पञ्चमीतत्पुरुषः साधुः स्यात् । परःशताः , परःसहस्राः ॥७५॥

**षष्ठ्ययत्नाच्छेषे ।३।१।७६॥**

*शेषे* [२।२।८१] या षष्ठी तदन्तं नाम नाम्नैकार्थ्ये समासस्तत्पुरुषः स्यात् , न चेत् स शेषः *नाथ [२। २। १०]* इत्यादेर्यत्नात् । राजपुरुषः । अयत्नादिति किम् ? सर्पिषो नाथितम् । शेष इति किम् ? गवां कृष्णा सम्पन्नक्षीरा ॥७६॥

**कृति ।३।१।७७॥**

*कर्मणि कृतः [२। २। ८३] कर्त्तरि [२। २। ८६]* इति च या कृन्निमित्ता षष्ठी तदन्तं नाम्ना समासस्तत्पुरुषः स्यात् । सर्पिर्ज्ञानम् , गणधरोक्तिः ॥७७॥

**याजकादिभिः ।३।१।७८॥**

षष्ठ्यन्तं याजकाद्यैः समासस्तत्पुरुषः स्यात् । ब्राह्मणयाजकः , गुरुपूजकः ॥७८॥

**पत्ति-रथौ गणकेन ।३।१।७९॥**

एतौ षष्ठ्यन्तौ गणकेन समासस्तत्पुरुषः स्याताम् । पत्तिगणकः , रथगणकः । पत्ति-रथाविति किम् ? धनस्य गणकः ॥७९॥

**सर्वपश्चादादयः ।३।१।८०॥**

एते षष्ठीतत्पुरुषाः साधवः स्युः । सर्वपश्चात् , सर्वचिरम् ॥८०॥

**अकेन क्रीडा-ऽऽजीवे ।३।१।८१॥**

षष्ठ्यन्तमकप्रत्ययान्तेन क्रीडा-ऽऽजीविकयोर्गम्ययोः समासस्तत्पुरुषः स्यात् । उद्दालपुष्पभञ्जिका , नखलेखकः । क्रीडा-ऽऽजीव इति किम् ? पयसः पायकः ॥८१॥

**न कर्त्तरि ।३।१।८२॥**

कर्त्तरि या षष्ठी तदन्तमकाऽन्तेन समासो न स्यात्। तव[1] शायिका। कर्त्तरीति किम्? इक्षुभक्षिका ॥८२॥

**कर्मजा तृचा च ।३।१।८३॥**

कर्मणि या षष्ठी तदन्तं कर्तृविहिताऽकान्तेन तृजन्तेन च न समासः स्यात्। भक्तस्य भोजकः, अपां स्रष्टा। कर्मजेति किम्? गुणो गुणिविशेषकः, सम्बन्धेऽत्र षष्ठी। कर्त्तरीत्येव-पयःपायिका ॥८३॥

**तृतीयायाम् ।३।१।८४॥**

कर्त्तरि तृतीयायां सत्यां कर्मजा षष्ठी न समस्यते। आश्चर्यो गवां दोहोऽगोपा[2]लेन। तृतीयायामिति किम्? शब्दानुशासनं गुरोः ॥८४॥

**तृप्तार्थ-पूरणा-ऽव्यया-ऽतृश्-शत्रानशा ।३।१।८५॥**

तृप्तार्थैः पूरणप्रत्ययान्तैरव्ययैरतृशन्तैः शत्रन्तैरानशन्तैश्च षष्ठयन्तं न समस्यते। फलानां तृप्तः, तीर्थकृतां षोडशः, राज्ञः साक्षात्, रामस्य द्विषन्, चैत्रस्य[3] पचन्, मैत्रस्य पचमानः ॥८५॥

**ज्ञानेच्छा-ऽर्चार्था-ऽऽधारक्तेन ।३।१।८६॥**

ज्ञानेच्छार्चार्थेभ्यो यो वर्त्तमाने क्तो यश्च *अद्यर्थाच्चाधारे [५।१।१२]* इत्याधारे तदन्तेन षष्ठयन्तं न समस्यते। राज्ञां ज्ञातः, राज्ञामिष्टः, राज्ञां पूजितः, इदमेषां यातम् ॥८६॥

**अस्वस्थगुणैः ।३।१।८७॥**

ये गुणाः स्वात्मन्येवावतिष्ठन्ते न द्रव्ये ते स्वस्थास्तत्प्रतिषेधेनाऽस्वस्थगुणवाचिभिः षष्ठयन्तं न समस्यते। पटस्य शुक्लः, गुडस्य मधुरः। अस्वस्थगुणैरिति किम्? घटवर्णः, चन्दनगन्धः ॥८७॥

**सप्तमी शौण्डाद्यैः ।३।१।८८॥**

एभिः सहैकार्थ्ये सप्तम्यन्तं समासस्तत्पु[4]रुषश्च स्यात्। पानशौण्डः, अक्षधूर्तः ॥८८॥

**सिंहाद्यैः पूजायाम् ।३।१।८९॥**

१. **भवतः शायिका तव शायिका** खं२ ॥ २. **पालकेन** पा२ J3 ॥ ३. **चैत्रस्य** खं१,२ ॥ ४. **रुषः स्यात्** पा२ खं२ J3 ॥

एभिः सप्तम्यन्तं समासस्तत्पुरुषश्च स्यात् , पूजायां गम्यायाम् । समरसिंहः , भूमिवासवः ॥८९॥

**काकाद्यैः क्षेपे ।३।१।९०॥**

एभिः सप्तम्यन्तं निन्दायां गम्यायां[1] समासस्तत्पुरुषश्च स्यात् । तीर्थकाकः , तीर्थश्वा । क्षेप इति किम् ? तीर्थे काकोऽस्ति ॥९०॥

**पात्रेसमितेत्यादयः ।३।१।९१॥**

एते सप्तमीत्पुरुषाः क्षेपे निपात्यन्ते । पात्रेसमिताः , गेहेशूरः ॥९१॥

**क्तेन ।३।१।९२॥**

सप्तम्यन्तं क्तान्तेन क्षेपे समासस्तत्पुरुषश्च स्यात् । भस्मनिहुतम् , अवतप्ते-नकुलस्थितम् ॥९२॥

**तत्राहोरात्रांशम् ।३।१।९३॥**

तत्रेति सप्तम्यन्तम् , अहरवयवा रात्र्यवयवाश्च सप्तम्यन्ताः क्तान्तेन समासस्तत्पुरुषश्च स्यात् । तत्रकृतम् , पूर्वाह्णकृतम् , पूर्वरात्रकृतम् । तत्राहोरात्रांशमिति किम् ? घटे कृतम् । अहोरात्रग्रहणं किम् ? शुक्लपक्षे कृतम् । अंशमिति किम् ? अह्नि भुक्तम् , रात्रौ नृत्तम् ॥९३॥

**नाम्नि ।३।१।९४॥**

सप्तम्यन्तं नाम्ना संज्ञाविषये समासस्तत्पुरुषश्च स्यात् । अरण्येतिलकाः , अरण्येमाषकाः ॥९४॥

**कृद्येनाऽऽवश्यके ।३।१।९५॥**

सप्तम्यन्तं नाम *य एच्चातः [५।१।२८]* इति यान्तेनाऽवश्यम्भावे गम्ये समासस्तत्पुरुषश्च स्यात् । मासदेयम् । कृदिति किम् ? मासे पित्र्यम् ॥९५॥

**विशेषणं विशेष्येणैकार्थं कर्मधारयश्च ।३।१।९६॥**

भिन्नप्रवृत्तिनिमित्तयोः शब्दयोरेकस्मिन्नर्थे वृत्तिरैकार्थ्यम् , तद् विशेषणवाचि विशेष्यवाचिनैकार्थ्ये समासस्तत्पुरुषः कर्मधारयश्च स्यात् । नीलोत्पलम् , खञ्जकुण्टः , कुण्टखञ्जः । एकार्थमिति किम् ? वृद्धस्योक्षा वृद्धोक्षा ॥९६॥

**पूर्वकालैक-सर्व-जरत्-पुराण-नव-केवलम् ।३।१।९७॥**

---

१. गम्यायां खं१ विना नास्ति ॥

पूर्वः कालो यस्य तद्वाच्येकादीनि चैकार्थानि परेण नाम्ना समासस्तत्पुरुषः कर्मधारयश्च स्यात्। स्नातानुलिप्तः , एकशाटी , सर्वान्नम् , जरद्गवः , पुराणकविः , नवोक्तिः , केवलज्ञानम्। एकार्थमित्येव-स्नात्वाऽनुलिप्तः ॥९७॥

**दिगधिकं संज्ञा-तद्धितोत्तरपदे ।३।१।९८॥**

दिग्वाच्यधिकं चैकार्थं नाम्ना समासस्तत्पुरुषः कर्मधारयश्च स्यात् , संज्ञायां तद्धिते च विषयभूते उत्तरपदे च परतः । दक्षिणकोशलाः , पूर्वेषुकामशमी , दाक्षिणशालः , अधिकषाष्टिकः , उत्तरगवधनः , अधिकगवप्रियः ॥९८॥

**संख्या समाहारे च द्विगुश्चाऽनाम्न्ययम् ।३।१।९९॥**

संख्यावाचि परेण नाम्ना समासस्तत्पुरुषः कर्म्मधारयश्च स्यात् , संज्ञातद्धितयोर्विषये , उत्तरपदे च परे , समाहारे चार्थे , अयमेव चाऽसंज्ञायां द्विगुश्च । पञ्चाम्राः , सप्तर्षयः ; द्वैमातुरः , अध्यर्द्धकंसः ; पञ्चगवधनः , पञ्चनावप्रियः ; पञ्चराजी । समाहारे चेति किम् ? अष्टौ प्रवचनमातरः । अनाम्नीति किम् ? पाञ्चर्षम् ॥९९॥

**निन्द्यं कुत्सनैरपापाद्यैः ।३।१।१००॥**

निन्द्यवाचि निन्दाहेतुभिः पापादिवर्जैः सह समासस्तत्पुरुषः कर्म्मधारयश्च स्यात् । वैयाकरणखसूची , मीमांसकदुर्दुरूढः । निन्द्यमिति किम् ? वैयाकरणश्चौरः । अपापाद्यैरिति किम् ? पापवैयाकरणः , हतविधिः ॥१००॥

**उपमानं सामान्यैः ।३।१।१०१॥**

उपमानवाच्येकार्थमुपमानोपमेयसाधारणधर्म्मवाचिभिरेव समासस्तत्पुरुषः कर्म्मधारयश्च स्यात् । शस्त्रीश्यामा , मृगचपला । उपमानमिति किम् ? देवदत्ता श्यामा । सामान्यैरिति किम् ? अग्निर्माणवकः ॥१०१॥

**उपमेयं व्याघ्राद्यैः साम्यानुक्तौ ।३।१।१०२॥**

उपमेयवाच्येकार्थमुपमानवाचिभिर्व्याघ्राद्यैः साधारणधर्मानुक्तौ समासस्तत्पुरुषः कर्म्मधारयश्च स्यात्। पुरुषव्याघ्रः , श्वसिंही। साम्यानुक्ताविति किम् ? पुरुषव्याघ्रः शूर इति मा भूत् ॥१०२॥

**पूर्वा-ऽपर-प्रथम-चरम-जघन्य-समान-मध्य-मध्यम-वीरम् । ३।१।१०३॥**

एतान्येकार्थानि परेण नाम्ना समासस्तत्पुरुषः कर्म्मधारयश्च स्युः । पूर्वपुरुषः , अपरपुरुषः , प्रथमपुरुषः , चरमपुरुषः , जघन्यपुरुषः , समानपुरुषः , मध्यपुरुषः , मध्यमपुरुषः , वीरपुरुषः ॥१०३॥

**श्रेण्यादि कृताद्यैश्च्व्यर्थे ।३।१।१०४॥**

श्रेण्याद्येकार्थं कृताद्यैः सह च्व्यर्थे गम्ये समासस्तत्पुरुषः कर्म्मधारयश्च स्यात् । श्रेणिकृताः , ऊककृताः । च्व्यर्थ इति किम् ? श्रेणयः कृताः किञ्चित् ॥१०४॥

**क्तं नञादिभिन्नैः ।३।१।१०५॥**

क्तान्तमेकार्थं नञ्प्रकारैरेव यानि भिन्नानि तैः सह समासस्तत्पुरुषः कर्मधारयश्च स्यात् । कृताकृतम् , पीताऽवपीतम् । क्तमिति किम् ? कर्त्तव्यमकर्त्तव्यं च । नञादिभिन्नैरिति किम् ? कृतं प्रकृतम् , कृतं चाऽविहितं च ॥१०५॥

**सेड् नाऽनिटा ।३।१।१०६॥**

सेट् क्तान्तं नञादिभिन्नेनाऽनिटा सह न समस्यते । क्लिशितमक्लिष्टम् , शितमशातम् । सेडिति किम् ? कृताकृतम् । अनिटेति किम् ? अशितानशितम् ॥१०६॥

**सन्महत्परमोत्तमोत्कृष्टं पूजायाम् ।३।१।१०७॥**

एतान्येकार्थानि पूजायां गम्यायां पूज्यवचनैः सह समासस्तत्पुरुषः कर्मधारयश्च स्युः । सत्पुरुषः , महापुरुषः , परमपुरुषः , उत्तमपुरुषः , उत्कृष्टपुरुषः । पूजायामिति किम् ? सन् घटः , अस्तीत्यर्थः ॥१०७॥

**वृन्दारक-नाग-कुञ्जरैः ।३।१।१०८॥**

पूजायां गम्यायामेभिः सह पूज्यवाच्येकार्थं समासस्तत्पुरुषः कर्म्मधारयश्च स्यात् । गोवृन्दारकः , गोनागः , गोकुञ्जरः । पूजायामित्येव— सुसीमो नागः ॥१०८॥

**कतर-कतमौ जातिप्रश्ने ।३।१।१०९॥**

एतावेकार्थौ जातिप्रश्ने गम्ये जात्यर्थेन नाम्ना समासस्तत्पुरुषः कर्मधारयश्च स्याताम् । कतरकठः , कतमगार्ग्यः । जातिप्रश्न इति किम् ? कतरः शुक्लः , कतमो गन्ता ॥१०९॥

**किं क्षेपे ।३।१।११०॥**

निन्दायां गम्यायां किमित्येकार्थं कुत्स्यवाचिना समासस्तत्पुरुषः कर्मधारयश्च

स्यात् । किंराजा , किंगौः । क्षेप इति किम् ? को राजा तत्र ॥११०॥

**पोटा-युवति-स्तोक-कतिपय-गृष्टि-धेनु-वशा-वेहद्-बष्कयणी-प्रवक्तृ-श्रोत्रिया-ऽध्यायक-धूर्त्त-प्रशंसारूढैर्जातिः ।३।१।१११॥**

पोटादिभिः प्रशंसारूढैश्च सह जातिवाच्येकार्थं समासस्तत्पुरुषः कर्मधारयश्च स्यात् । इभ्यपोटा , नागयुवतिः , अग्निस्तोकम् , दधिकतिपयम् , गोगृष्टिः , गोधेनुः , गोवशा , गोवेहत् , गोबष्कयणी , कठप्रवक्ता , कठश्रोत्रियः , कठाध्यायकः , मृगधूर्त्तः , गोमतल्लिका , गोप्रकाण्डम् ॥१११॥

**चतुष्पाद् गर्भिण्या ।३।१।११२॥**

चत्वारः पादा यस्या जातेस्तद्वाच्येकार्थं गर्भिण्या सह समासस्तत्पुरुषः कर्म्मधारयश्च स्यात् । गोगर्भिणी , महिषगर्भिणी । जातिरित्येव-कालाक्षी गर्भिणी ॥११२॥

**युवा खलति-पलित-जरद्-वलिनैः ।३।१।११३॥**

युवन्नित्येकार्थमेभिः सह समासस्तत्पुरुषः कर्मधारयश्च स्यात् । युवखलतिः , युवपलितः , युवजरन् , युववलिनः , युववलिना ॥११३॥

**कृत्य-तुल्याख्यमजात्या ।३।१।११४॥**

कृत्यान्तं तुल्यपर्यायं चैकार्थमजात्यर्थेन सह समासस्तत्पुरुषः कर्मधारयश्च स्यात् । भोज्योष्णम् , स्तुत्यपटुः , तुल्यसन् , सदृशमहान् । अजात्येति किम् ? भोज्य ओदनः ॥११४॥

**कुमारः श्रमणादिना ।३।१।११५॥**

कुमार इत्येकार्थं श्रमणादिना समासस्तत्पुरुषः कर्मधारयश्च स्यात् । कुमारश्रमणा , कुमारप्रव्रजिता ॥११५॥

**मयूरव्यंसकेत्यादयः ।३।१।११६॥**

एते तत्पुरुषसमासा निपात्यन्ते । मयूरव्यंसकः , कम्बोजमुण्डः , एहीडं कर्म , अश्नीतपिबता क्रिया , कुरुकटो वक्ता , गतप्रत्यागतम् , क्रयाक्रयिका , शाकपार्थिवः , त्रिभागः , सर्वश्वेतः ॥११६॥

**चार्थे द्वन्द्वः सहोक्तौ ।३।१।११७॥**

नाम नाम्ना सह सहोक्तिविषये चार्थवृत्तिः समासो द्वन्द्वः स्यात् । प्लक्षन्यग्रोधौ

, वाक्त्वचम् । नाम नाम्नेत्यनुवृत्तावपि *लघ्वक्षरा०[ ३ । १ । १६० ]* दिसूत्रे एकग्रहणाद् बहूनामपि—धव-खदिर-पलाशाः । चार्थ इति किम् ? वीप्सासहोक्तौ मा भूत्—ग्रामो ग्रामो रमणीयः । सहोक्ताविति किम् ? प्लक्षश्च न्यग्रोधश्च वीक्ष्यताम् ॥११७॥

**समानामर्थेनैकः शेषः ।३।१।११८॥**

अर्थेन **समानां** समानार्थानां सहोक्तौ गम्यायामेकः शिष्यते , अर्थादन्ये निवर्त्तन्ते । वक्रश्च कुटिलश्च वक्रौ कुटिलौ वा । सितश्च शुक्लश्च श्वेतश्च सिताः शुक्लाः श्वेता वा । अर्थेन समानामिति किम् ? प्लक्ष-न्यग्रोधौ । सहोक्तावित्येव-वक्रश्च कुटिलश्च दृश्यः ॥११८॥

**स्यादावसंख्येयः ।३।१।११९॥**

सर्वस्मिन् स्यादौ विभक्तौ **समानां** तुल्यरूपाणां सहोक्तावेकः शिष्यते , न तु संख्येयवाची । अक्षश्च शकटस्य[1] , अक्षश्च देवनः , अक्षश्च बिभीतकः=अक्षाः । स्यादाविति किम् ? माता च जननी , माता च धान्यस्य=मातृ-मातारौ । असंख्येय इति किम् ? एकश्चैकश्च ॥११९॥

**त्यदादिः ।३।१।१२०॥**

त्यदाद्यैरन्येन च सहोक्तौ त्यदादिरेवैकः शिष्यते । स च चैत्रश्च=तौ , स च यश्च=यौ , अहं च स च त्वं च=वयम् ॥१२०॥

**भ्रातृ-पुत्राः स्वसृ-दुहितृभिः ।३।१।१२१॥**

स्वस्रर्थेन सहोक्तौ भ्रात्रर्थः , दुहित्रर्थेन च पुत्रार्थ एकः शिष्यते । भ्राता च स्वसा च=भ्रातरौ , पुत्रश्च दुहिता च=पुत्रौ ॥१२१॥

**पिता मात्रा वा ।३।१।१२२॥**

मातृशब्देन सहोक्तौ पितृशब्द एकः शिष्यते वा । पिता च माता च=पितरौ , मातापितरौ ॥१२२॥

**श्वशुरः श्वश्र्वा वा ।३।१।१२३॥**

श्वश्रूशब्देन सहोक्तौ श्वशुर एको वा शिष्यते । श्वशुरौ , श्वश्रू-श्वशुरौ ॥१२३॥

**वृद्धो यूना तन्मात्रभेदे ।३।१।१२४॥**

यूना सहोक्तौ वृद्धवाच्येकः शिष्यते , **तन्मात्रभेदे** , न चेत् प्रकृतिभेदोऽर्थभेदो

१. शकटः पा१ । शकट पामू३ ॥

वाऽन्यः स्यात् । गार्ग्यश्च गार्ग्यायणश्च=गार्ग्यौ । वृद्ध इति किम् ? गर्ग-गार्ग्यायणौ । यूनेति किम् ? गार्ग्य-गर्गौ । तन्मात्रभेद इति किम् ? गार्ग्य-वात्स्यायनौ ॥१२४॥

**स्त्रीपुंवच्च ।३।१।१२५॥**

वृद्धस्त्रीवाची यूना सहोक्तौ एकः शिष्यते , पुंलिङ्गश्चायं तन्मात्रभेदे । गार्गी च गार्ग्यायणश्च=गार्ग्यौ । गार्गी[1] च गार्ग्यायणौ च [=गर्गाः] गर्गान् ॥१२५॥

**पुरुषः स्त्रिया ।३।१।१२६॥**

पुरुषशब्दः प्राणिनि पुंसि रूढः , स्त्रीवाचिना सहोक्तौ पुरुष एकः शिष्यते स्त्रीपुरुषमात्रभेदश्चेत् । ब्राह्मणश्च ब्राह्मणी च=ब्राह्मणौ । पुरुष इति किम् ? तीरं नदनदीपतेः । तन्मात्रभेद इत्येव-पुंस्त्रियौ[2] ॥१२६॥

**ग्राम्याशिशुद्विशफसंघे स्त्री प्रायः ।३।१।१२७॥**

ग्राम्या अशिशवो ये द्विशफा द्विखुरा अर्थात् पशवस्तेषां संघे स्त्रीपुरुषसहोक्तौ प्रायः स्त्रीवाच्येकः शिष्यते , स्त्रीपुरुषमात्रभेदश्चेत् । गावश्च स्त्रियः गावश्च नराः=इमा गावः । ग्राम्येति किम् ? रुरवश्चेमे रुरवश्चेमाः=इमे रुरवः । अशिश्विति किम् ? बर्कर्यश्च बर्कराश्च=बर्कराः । द्विशफेति किम् ? गर्दभाश्च गर्दभ्यश्च=गर्दभाः । संघ इति किम् ? गौश्चायं गौश्चेयम्=इमौ गावौ । प्रायः इति किम् ? उष्ट्राश्च उष्ट्र्यश्च =उष्ट्राः ॥१२७॥

**क्लीबमन्येनैकं च वा ।३।१।१२८॥**

**क्लीबं** नपुंसकम् , **अन्येन** अक्लीबेन सहोक्तावेकं शिष्यते क्लीबा-ऽक्लीबमात्रभेदे[3] , **एकमेकार्थं च वा** स्यात् । शुक्लं च शुक्लश्च=शुक्लं शुक्ले वा । शुक्लं च शुक्लश्च शुक्ला च=शुक्लं शुक्लानि वा । अन्येनेति किम् ? शुक्लं च शुक्लं च=शुक्ले । तन्मात्रभेद इत्येव-हिमहिमान्यौ ॥१२८॥

**पुष्यार्थाद् भे पुनर्वसुः ।३।१।१२९॥**

पुष्यार्थान्नक्षत्रवृत्तेः परो नक्षत्रवृत्तिः पुनर्वसुः सहोक्तौ द्व्यर्थः सन् एकार्थः स्यात् । उदितौ पुष्य-पुनर्वसू , तिष्य-पुनर्वसू । पुष्यार्थादिति किम् ? आर्द्रा-पुनर्वसवः । पुनर्वसुरिति किम् ? पुष्य-मघाः । भ इति किम् ? तिष्य-पुनर्वसवो बालाः ॥१२९॥

---

१. **गार्ग्यौ च गार्ग्यायणौ च गर्गान्** खं२, अयं पाठः समीचीन एव ॥ २. **स्त्रीपुंसौ** खं१,२ पा२ J3 ॥ ३. **भेदे तच्च शिष्यमाणमेकमेकार्थं** खं१ ॥

## विरोधिनामद्रव्याणां नवा द्वन्द्वः स्वैः ।३।१।१३०॥

**द्रव्यं** गुणाद्याश्रयः , विरोधिवाचिनाम् अतदाश्रयवृत्तीनां द्वन्द्वो वैकार्थः स्यात् । **स्वैः** सजातीयैरेवाऽऽरब्धश्चेत् । सुखदुःखम् , सुखदुःखे ; लाभालाभम् , लाभालाभौ । विरोधिनामिति किम् ? काम-क्रोधौ । अद्रव्याणामिति किम् ? शीतोष्णे जले । स्वैरिति किम् ? बुद्धि-सुख-दुःखानि ॥१३०॥

## अश्ववडव-पूर्वापरा-ऽधरोत्तराः ।३।१।१३१॥

एते त्रयो[1] द्वन्द्वा एकार्था वा स्युः , स्वैश्चेत् । अश्ववडवम् , अश्ववडवौ ; पूर्वापरम् , पूर्वापरे ; अधरोत्तरम् , अधरोत्तरे ॥१३१॥

## पशु-व्यञ्जनानाम् ।३।१।१३२॥

पशूनां व्यञ्जनानां च स्वैर्द्वन्द्व एकार्थो वा स्यात् । गोमहिषम् , गोमहिषौ ; दधिघृतम् , दधिघृते ॥१३२॥

## तरु-तृण-धान्य-मृग-पक्षिणां बहुत्वे ।३।१।१३३॥

एतद्वाचिनां बह्वर्थानां प्रत्येकं स्वैर्द्वन्द्व एकार्थो वा स्यात् । प्लक्षन्यग्रोधम् , प्लक्षन्यग्रोधाः ; कुशकाशम् , कुशकाशाः ; तिलमाषम् , तिलमाषाः ; ऋश्यैणम् , ऋश्यैणाः ; हंसचक्रवाकम् , हंसचक्रवाकाः ॥१३३॥

## सेनाङ्ग-क्षुद्रजन्तूनाम् ।३।१।१३४॥

सेनाङ्गानां क्षुद्रजन्तूनां च बह्वर्थानां स्वैर्द्वन्द्व एकार्थो नित्यं स्यात् । अश्वरथम् , यूकालिक्षम् ॥१३४॥

## फलस्य जातौ ।३।१।१३५॥

फलवाचिनां बह्वर्थानां जातौ द्वन्द्व एकार्थः स्यात् । बदरामलकम् । जाताविति किम् ? एतानि बदरामलकानि सन्ति ॥१३५॥

## अप्राणि-पश्वादेः ।३।१।१३६॥

प्राणिभ्यः पश्वादिसूत्रोक्तेभ्यश्च येऽन्यद्रव्यवाचिनस्तेषां जात्यर्थानां स्वैर्द्वन्द्व एकार्थः स्यात् । आराशस्त्रि । जातावित्येव-सह्यविन्ध्यौ । प्राण्यादिवर्जनं किम् ? ब्राह्मणक्षत्रियविट्शूद्राः , ब्राह्मणक्षत्रियविट्शूद्रम् ; गोमहिषौ , गोमहिषम् ; प्लक्षन्यग्रोधौ , प्लक्षन्यग्रोधम् ; अश्वरथौ , अश्वरथम् ; बदरामलके ,

१. त्रयोऽपि खं१ ॥

बदरामलकम् ॥१३६॥

**प्राणि-तूर्याङ्गाणाम् ।३।१।१३७॥**

प्राणि-तूर्ययोरङ्गार्थानां स्वैर्द्वन्द्व एकार्थः स्यात् । कर्णनासिकम् , मार्दङ्गिक-पाणविकम् । स्वैरित्येव-पाणि-गृध्रौ ॥१३७॥

**चरणस्य स्थेणोऽद्यतन्यामनुवादे ।३।१।१३८॥**

**चरणाः** कठादयः , तद्वाचिनामद्यतन्यां यौ स्थेणौ तयोः कर्तृत्वेन सम्बन्धिनां स्वैर्द्वन्द्वोऽनुवादविषये एकार्थः स्यात् । प्रत्यष्ठात् कठकालापम् , उदगात् कठकौथुमम् । अनुवाद इति किम् ? उदगुः कठकालापाः , अप्रसिद्धं कथयति ॥१३८॥

**अक्लीबेऽध्वर्युक्रतोः ।३।१।१३९॥**

**अध्वर्युः** यजुर्वेदः , तद्विहितक्रतुवाचिनां स्वैर्द्वन्द्व एकार्थः स्यात् , न चेदेते क्लीबवृत्तयः । अर्काश्वमेधम् । अक्लीब इति किम् ? गवामयनादित्यानामयने । अध्वर्य्विति किम् ? इषु-वज्रौ । क्रतोरिति किम् ? दर्श-पौर्णमासौ ॥१३९॥

**निकटपाठस्य ।३।१।१४०॥**

निकटः पाठो येषामध्येतॄणां तेषां स्वैर्द्वन्द्व एकार्थः स्यात् । पदकक्रमकम् ॥१४०॥

**नित्यवैरस्य ।३।१।१४१॥**

नित्यं जातिनिबद्धं वैरं येषां तेषां स्वैर्द्वन्द्व एकार्थः स्यात् । अहिनकुलम् । नित्यवैरस्येति किम् ? देवासुराः , देवासुरम् ॥१४१॥

**नदी-देश-पुरां विलिङ्गानाम् ।३।१।१४२॥**

एषां विविधलिङ्गानां स्वैर्द्वन्द्व एकार्थः स्यात् । गङ्गा-शोणम् , कुरु-कुरुक्षेत्रं , मथुरा-पाटलिपुत्रम् । विलिङ्गानामिति किम् ? गङ्गा-यमुने ॥१४२॥

**पात्र्यशूद्रस्य ।३।१।१४३॥**

पात्रार्हशूद्रवाचिनां स्वैर्द्वन्द्व एकार्थः स्यात् । तक्षायस्कारम् । पात्र्येति किम् ? जनङ्गम-बुक्कसाः ॥१४३॥

**गवाश्वादिः ।३।१।१४४॥**

अयं द्वन्द्वः एकार्थः स्यात् । गवाश्वम् , गवाविकम् ॥१४४॥

**न दधिपयआदिः ।३।१।१४५॥**

दधिपयआद्यो द्वन्द्व एकार्थो न स्यात् । दधिपयसी , सर्पिर्मधुनी ॥१४५॥

**संख्याने ।३।१।१४६॥**

वर्त्तिपदार्थानां गणने गम्ये द्वन्द्व एकार्थो न स्यात् । दश गोमहिषाः , बहवः पाणिपादाः ॥१४६॥

**वाऽन्तिके ।३।१।१४७॥**

वर्त्तिपदार्थानां संख्यानस्य समीपे गम्ये द्वन्द्व एकार्थो वा स्यात् । उपदशं गोमहिषम् , उपदशा गोमहिषाः ॥१४७॥

**प्रथमोक्तं प्राक् ।३।१।१४८॥**

अत्र समासप्रकरणे प्रथमान्तेन यन्निर्दिष्टं तत् प्राक् स्यात् । आसन्नदशाः , सप्तगङ्गम् ॥१४८॥

**राजदन्तादिषु ।३।१।१४९॥**

एतेषु समासेष्वप्राप्तप्रागूनिपातं प्राक् स्यात् । राजदन्तः , लिप्तवासितम् ॥१४९॥

**विशेषण-सर्वादि-संख्यं बहुव्रीहौ ।३।१।१५०॥**

विशेषणं सर्वादि संख्यावाचि च बहुव्रीहौ प्राक् स्यात् । चित्रगुः , सर्वशुक्लः , द्विकृष्णः ॥१५०॥

**क्ताः ।३।१।१५१॥**

क्तान्तं सर्वं बहुव्रीहौ प्राक् स्यात् । कृतकटः ॥१५१॥

**जाति-काल-सुखादेर्नवा ।३।१।१५२॥**

जातेः कालात् सुखादिभ्यश्च बहुव्रीहौ क्तान्तं वा प्राक् स्यात् । शाङ्गरजग्धी , जग्धशाङ्गरा ; मा[1]सजाता , जातमासा ; सुखजाता , जातसुखा ; दुःखहीना , हीनदुःखा ॥१५२॥

**आहिताग्न्यादिषु ।३।१।१५३॥**

एषु बहुव्रीहिषु क्तान्तं वा प्राक् स्यात् । आहिताग्निः , अग्न्याहितः ; जातदन्तः , दन्तजातः ॥१५३॥

**प्रहरणात् ।३।१।१५४॥**

१. **मासयाता, यातमासा, सुखयाता, यातसुखा** पा२, खंसं२, J3 विना । दृश्यताम् २।४।४७॥

प्रहरणार्थात् क्तान्तं बहुव्रीहौ वा प्राक् स्यात्। उद्यतासिः , अस्युद्यतः ॥१५४॥

**न सप्तमीन्द्वादिभ्यश्च ।३।१।१५५॥**

इन्द्वादेः प्रहरणार्थाच्च प्राक् सप्तम्यन्तं बहुव्रीहौ न स्यात्। इन्दुमौलिः , पद्मनाभः , असिपाणिः ॥१५५॥

**गड्वादिभ्यः ।३।१।१५६॥**

गड्वादिभ्यो बहुव्रीहौ सप्तम्यन्तं प्राग् वा स्यात् । कण्ठेगडुः , गडुकण्ठः ; मध्येगुरुः , गुरुमध्यः ॥१५६॥

**प्रियः ।३।१।१५७॥**

अयं बहुव्रीहौ प्राग् वा स्यात् । प्रियगुडः , गुडप्रियः ॥१५७॥

**कडारादयः कर्मधारये ।३।१।१५८॥**

एते कर्मधारये प्राग् वा स्युः । कडारजैमिनिः , जैमिनिकडारः ; काणद्रोणः , द्रोणकाणः ॥१५८॥

**धर्मार्थादिषु द्वन्द्वे ।३।१।१५९॥**

एषु द्वन्द्वेष्वप्राप्तप्राक्त्वं वा प्राक् स्यात् । धर्म्मार्थौ , अर्थधर्म्मौ ; शब्दार्थौ , अर्थशब्दौ ॥१५९॥

**लघ्वक्षरा-ऽसखीदुत्-स्वराद्यदल्पस्वरा-ऽर्च्यमेकम् ।३।१।१६०॥**

लघ्वक्षरं सखिवर्जेदुदन्तं स्वराद्यकारान्तमल्पस्वरं पूज्यवाचि चैकं द्वन्द्वे प्राक् स्यात् । शरशीर्षम्[1] , अग्नीषोमौ , वायुतोयम् । असखीति किम् ? सुतसखायौ । अस्त्र-शस्त्रम् , प्लक्ष-न्यग्रोधौ , श्रद्धा-मेधे । लघ्वादीति किम् ? कुक्कुट-मयूरौ , मयूर-कुक्कुटौ । एकमिति किम् ? शङ्ख-दुन्दुभि-वीणाः । द्वन्द्व इत्येव-विस्पष्टपटुः ॥१६०॥

**मास-वर्ण-भ्रात्रऽनुपूर्वम् ।३।१।१६१॥**

एतद्वाचि द्वन्द्वेऽनुपूर्वं प्राक् स्यात् । फाल्गुन-चैत्रौ , ब्राह्मण-क्षत्रियौ , ब्राह्मण-क्षत्रिय-विशः , बलदेव-वासुदेवौ ॥१६१॥

**भर्तुतुल्यस्वरम् ।३।१।१६२॥**

---

१. लघुवृत्तेर्हस्तलिखितादर्शेषु °शीर्षं इति पा१,२, खं१,२, J3 मध्ये पाठः । °सीर्पं पा३ । बृहद्वृत्तौ K1 मध्ये °रीर्यं इति, K2 मध्ये तु °शीर्यं इति पाठः ॥

नक्षत्रर्तुवाचि तुल्यस्वरं द्वन्द्वेऽनुपूर्वं प्राक् स्यात् । अश्विनी-भरणी-कृत्तिकाः , हेमन्त-शिशिर-वसन्ताः । तुल्यस्वरमिति किम् ? आर्द्रा-मृगशिरसी , ग्रीष्म-वसन्तौ ॥१६२॥

**संख्या समासे ।३।१।१६३॥**

समासमात्रे संख्यावाच्यनुपूर्वं प्राक् स्यात् । द्वित्राः , द्विशती , एकादश ॥१६३॥

[इत्याचार्यश्री **हेमचन्द्र**विरचितायां
**सिद्धहेमचन्द्रा**भिधानस्वोपज्ञशब्दानुशासनलघुवृत्तौ]
तृतीयस्याध्यायस्य प्रथमः पादः समाप्तः[1] ॥३।१॥

असंरब्धा अपि चिरं दुःसहा वैरिभूभृताम्[2] ।
चण्डा**श्चामुण्डराजस्य** प्रतापशिखिनः कणाः ॥९॥

१. **समाप्तः** खं२ विना नास्ति ॥ २. **भूभुजाम्** प्रा० पा२ ॥

## [द्वितीयः पादः]

### परस्परा-ऽन्योन्येतरेतरस्याम् स्यादेर्वाऽपुंसि ।३।२।१।।

एषामपुंवृत्तीनां स्यादेराम् वा स्यात् । इमे सख्यौ कुले वा परस्परां परस्परम् , अन्योन्यामन्योन्यम् , इतरेतरामितरेतरं भोजयतः । आभिः सखीभिः कुलैर्वा परस्परां परस्परेण , अन्योन्यामन्योन्येन , इतरेतरामितरेतरेण भोज्यते । अपुंसीति किम् ? नरा[1]ः परस्परं भोजयन्ति ।।१।।

### अमव्ययीभावस्याऽतोऽपञ्चम्याः ।३।२।२।।

अदन्तस्याव्ययीभावस्य स्यादेरम् स्यात् , न तु पञ्चम्याः । उपकुम्भमस्ति , उपकुम्भं धे[2]हि । अव्ययीभावस्येति किम् ? प्रियोपकुम्भोऽयम् । अत इति किम् ? अधिस्त्रि । अपञ्चम्या इति किम् ? उपकुम्भात् ।।२।।

### वा तृतीयायाः ।३।२।३।।

अदन्तस्याव्ययीभावस्य तृतीयाया अम् वा स्यात् । किं नः उपकुम्भम् , किं नः उपकुम्भेन । अव्ययीभावस्येत्येव— प्रियोपकुम्भेन ।।३।।

### सप्तम्या वा ।३।२।४।।

अदन्तस्याव्ययीभावस्य सप्तम्या अम् वा स्यात् । उपकुम्भम् , उपकुम्भे धेहि । अव्ययीभावस्येत्येव-प्रियोपकुम्भे ।।४।।

### ऋद्ध-नदी-वंश्यस्य ।३।२।५।।

एतदन्तस्याऽव्ययीभावस्याऽदन्तस्य सप्तम्या अम् नित्यं स्यात् । सुमगधम् , उन्मत्तगङ्गम् , एकविंशतिभारद्वाजं वसति ।।५।।

### अनतो लुप् ।३।२।६।।

अदन्तवर्जस्याऽव्ययीभावस्य स्यादेर्लुप् स्यात् । उपवधु , उपकर्तृ । अनत इति किम् ? उपकुम्भात् । अव्ययीभावस्येत्येव-प्रियोपवधुः ।।६।।

### अव्ययस्य ।३।२।७।।

अव्ययानां स्यादेर्लुप् स्यात् । स्वः , प्रातः । अव्ययस्येति किम् ? अत्युच्चैसः ।।७।।

---

१. इमे नराः J3 ।। २. देहि खं२ विना ।।

## ऐकार्थ्ये ।३।२।८।।

**ऐकार्थ्यम्** ऐकपद्यम्, तन्निमित्तस्य स्यादेर्लुप् स्यात् । चित्रगुः , पुत्रीयति , औपगवः । अत एव लुब्विधानाद् *नाम नाम्ना० [३।१।१८]* इत्युक्तावपि स्याद्यन्तानां समासः स्यात् । ऐकार्थ्य इति किम् ? चित्रा गावो यस्येत्यादिवाक्ये मा भूत् ।।८।।

## न नाम्येकस्वरात् खित्युत्तरपदेऽमः ।३।२।९।।

समासारम्भकमन्त्यं पदम् उत्तरपदम् , तस्मिन् खित्प्रत्ययान्ते परे नाम्यन्तादेकस्वरात् पूर्वपदात् परस्याऽमो लुब् न स्यात् । स्त्रियंमन्यः , नावंमन्यः । नामीति किम् ? क्ष्मंमन्यः । एकस्वरादिति किम् ? वधुंमन्या । खितीति किम् ? स्त्रीमानी ।।९।।

## असत्त्वे ङसेः ।३।२।१०।।

असत्त्वे विहितस्य ङसेरुत्तरपदे परे लुब् न स्यात् । स्तोकान्मुक्तः । असत्त्व इति किम् ? स्तोकभयम् । उत्तरपद इत्येव-निःस्तोकः ।।१०।।

## ब्राह्मणाच्छंसी ।३।२।११।।

अत्र समासे ङसेर्लुबभावो निपात्यते । ब्राह्मणाच्छंसिनौ । निपातनाद् ऋत्विग्विशेषादन्यत्र लुबेव-ब्राह्मणशंसिनी स्त्री ।।११।।

## ओजो-ऽञ्जः-सहो-ऽम्भस्-तमस्-तपसष्टः ।३।२।१२।।

एभ्यः परस्य टावचनस्योत्तरपदे परे लुब् न स्यात् । ओजसाकृतम् , अञ्जसाकृतम् , सहसाकृतम् , अम्भसाकृतम् , तमसाकृतम् , तपसाप्राप्तम्[१] । ट इति किम् ? ओजोभावः[२] ।।१२।।

## पुंजनुषोऽनुजा-ऽन्धे ।३।२।१३।।

पुम्-जनुर्भ्यां परस्य टो यथासंख्यमनुजेऽन्धे चोत्तरपदे लुब् न स्यात् । पुंसाऽनुजः , जनुषाऽन्धः । ट इत्येव-पुमनुजा ।।१३।।

## आत्मनः पूरणे ।३।२।१४।।

अस्मात् परस्य टः पूरणप्रत्ययान्ते उत्तरपदे लुब् न स्यात् । आत्मनाद्वितीयः , आत्मनाषष्ठः ।।१४।।

---

१. **तपसाप्तम्** पा२ । **तपसाकृतम्** खं१ ।। २. **ओजसो भाव ओजोभावः** पा१ ।।

## मनसश्चाऽऽज्ञायिनि ।३।२।१५।।

मनस आत्मनश्च परस्य ट आज्ञायिन्युत्तरपदे परे[1] लुब् न स्यात् । मनसाऽऽज्ञायी , आत्मनाऽऽज्ञायी ।।१५।।

## नाम्नि ।३।२।१६।।

मनसः परस्य टः संज्ञाविषये उत्तरपदे परे लुब् न स्यात् । मनसादेवी । नाम्नीति किम् ? मनोदत्ता कन्या ।।१६।।

## परा-ऽऽत्मभ्यां ङेः ।३।२।१७।।

आभ्यां परस्य ङेवचनस्योत्तरपदे परे[2] नाम्नि लुब् न स्यात् । परस्मैपदम् , आत्मनेपदम् । नाम्नीत्येव-परहितम् ।।१७।।

## अद्-व्यञ्जनात् सप्तम्या बहुलम् ।३।२।१८।।

अदन्ताद् व्यञ्जनान्ताच्च परस्याः सप्तम्या बहुलं नाम्नि लुब् न स्यात् । अरण्येतिलकाः , युधिष्ठिरः । अद्व्यञ्जनादिति किम् ? भूमिपाशः । नाम्नीत्येव-तीर्थकाकः ।।१८।।

## प्राक्कारस्य व्यञ्जने ।३।२।१९।।

राजलभ्यो रक्षानिर्वेशः **कारः** । प्राचां देशे यः कारः तस्य संज्ञायां गम्यायामद्व्यञ्जनात् परस्याः सप्तम्या व्यञ्जनादावुत्तरपदे परे[3] लुब् न स्यात् । मुकुटेकार्षापणः , समिधिमाषकः । प्रागिति किम् ? यूथपशुः , उदीचामयं न प्राचाम् । कार इति किम् ? अभ्यर्हितपशुः । व्यञ्जन इति किम् ? अविकटोरणः ।।१९।।

## तत्पुरुषे कृति ।३।२।२०।।

अद्-व्यञ्जनात् परस्याः सप्तम्याः कृदन्ते उत्तरपदे तत्पुरुषे लुब् न स्यात् । स्तम्बेरमः , भस्मनिहुतम् । तत्पुरुष इति किम् ? धन्वकारकः । अद्व्यञ्जनादित्येव-कुरुचरः ।।२०।।

## मध्या-ऽन्ताद् गुरौ ।३।२।२१।।

आभ्यां परस्याः सप्तम्या गुरावुत्तरपदे परे[4] लुब् न स्यात् । मध्येगुरुः , अन्तेगुरुः ।।२१।।

---

१. परे पा१ J3 नास्ति ।। २. परे पा१ खं२ नास्ति ।। ३. परे पा१ विना नास्ति ।। ४. परे नास्ति खं२ ।।

## अमूर्द्ध-मस्तकात् स्वाङ्गादकामे ।३।२।२२।।

मूर्द्धमस्तकवर्जात् स्वाङ्गवाचिनोऽद्-व्यञ्जनात् परस्याः सप्तम्याः कामवर्जे उत्तरपदे लुब् न स्यात् । कण्ठेकालः । अमूर्द्धमस्तकादिति किम् ? मूर्द्धशिखः , मस्तकशिखः । अकाम इति किम् ? मुखकामः ।।२२।।

## बन्धे घञि नवा ।३।२।२३।।

बन्धे घञन्ते उत्तरपदे अद्-व्यञ्जनात् परस्याः सप्तम्या लुब् वा न स्यात् । हस्तेबन्धः , हस्तबन्धः ; चक्रेबन्धः चक्रबन्धः । घञीति किम् ? अजन्ते - हस्तबन्धः ।।२३।।

## कालात् तन-तर-तम-काले ।३।२।२४।।

अद्-व्यञ्जनान्तात् कालवाचिनः परस्याः सप्तम्यास्तनादिप्रत्ययेषु काले चोत्तर-पदे वा लुब् न स्यात् । पूर्वाह्णेतनः , पूर्वाह्णतनः ; पूर्वाह्णेतराम् , पूर्वाह्णतरे ; पूर्वाह्णेतमाम् , पूर्वाह्णतमे ; पूर्वाह्णेकाले पूर्वाह्णकाले । कालादिति किम् ? शुक्लतरे । अद्व्यञ्जनादित्येव-रात्रितरायाम् ।।२४।।

## शय-वासि-वासेष्वकालात् ।३।२।२५।।

अकालवाचिनोऽद्व्यञ्जनात् परस्याः सप्तम्या एषूत्तरपदेषु लुब् वा न स्यात् । बिलेशयः , बिलशयः ; वनेवासी , वनवासी ; ग्रामेवासः , ग्रामवासः । अकालादिति किम् ? पूर्वाह्णशयः ।।२५।।

## वर्ष-क्षर-वरा-ऽप्-सरः-शरोरोमनसो जे ।३।२।२६।।

एभ्यः परस्याः सप्तम्या जे उत्तरपदे लुब् वा न स्यात् । वर्षेजः , वर्षजः ; क्षरेजः , क्षरजः ; वरेजः , वरजः ; अप्सुजम् , अब्जम् ; सरसिजम् , सरोजम् ; शरेजः , शरजः ; उरसिजः , उरोजः ; मनसिजः , मनोजः ।।२६।।

## द्यु-प्रावृड्-वर्षा-शरत्-कालात् ।३।२।२७।।

एभ्यः परस्याः सप्तम्या जे उत्तरपदे लुब् न स्यात् । दिविजः , प्रावृषिजः , वर्षासुजः , शरदिजः , कालेजः ।।२७।।

## अपो य-योनि-मति-चरे ।३।२।२८।।

अपः परस्याः सप्तम्या ये प्रत्यये योन्यादौ चोत्तरपदे लुब् न स्यात् । अप्सव्यः

, अप्सुयोनिः , अप्सुमतिः , अप्सुचरः ॥२८॥

**नेन्-सिद्ध-स्थे ।३।२।२९॥**

इन्प्रत्ययान्ते सिद्ध-स्थयोश्चोत्तरपदयोः सप्तम्या लुब् न न स्यात् , भवत्येवेत्यर्थः । स्थण्डिलवर्त्ती , साङ्काश्यसिद्धः , समस्थः ॥२९॥

**षष्ठ्याः क्षेपे ।३।२।३०॥**

उत्तरपदे परे क्षेपे गम्ये षष्ठ्या लुब् न स्यात् । चौरस्यकुलम् ॥३०॥

**पुत्रे वा ।३।२।३१॥**

पुत्रे उत्तरपदे क्षेपे षष्ठ्या लुब् वा न स्यात् । दास्याःपुत्रः , दासीपुत्रः ॥३१॥

**पश्यद्-वाग्-दिशो हर-युक्ति-दण्डे ।३।२।३२॥**

एभ्यः परस्याः षष्ठ्या यथासंख्यं हरादावुत्तरपदे लुब् न स्यात् । पश्यतोहरः , वाचोयुक्तिः , दिशोदण्डः ॥३२॥

**अदसोऽकञायनणोः ।३।२।३३॥**

अदसः परस्याः षष्ठ्या अकञ्[1]विषये उत्तरपदे आयनणि च परे लुब् न स्यात् । आमुष्यपुत्रिका , आमुष्यायणः ॥३३॥

**देवानांप्रियः ।३।२।३४॥**

अत्र षष्ठ्या लुब् न स्यात् । देवानांप्रियः ॥३४॥

**शेप-पुच्छ-लाङ्गूलेषु नाम्नि शुनः ।३।२।३५॥**

शुनः परस्याः षष्ठ्याः शेपादावुत्तरपदे संज्ञायां लुब् न स्यात् । शुनःशेपः , शुनःपुच्छः , शुनोलाङ्गूलः ॥३५॥

**वाचस्पति-वास्तोष्पति-दिवस्पति-दिवोदासम् ।३।२।३६॥**

एते समासाः षष्ठ्यलुपि निपात्यन्ते नाम्नि । वाचस्पतिः , वास्तोष्पतिः , दिवस्पतिः , दिवोदासः ॥३६॥

**ऋतां विद्या-योनिसम्बन्धे ।३।२।३७॥**

ऋदन्तानां विद्यया योन्या च कृते सम्बन्धे हेतौ सति प्रवृत्तानां षष्ठ्यास्तत्रैव हेतौ सति प्रवृत्ते उत्तरपदे लुब् न स्यात् । होतुःपुत्रः , पितुःपुत्रः , पितुरन्तेवासी । ऋतामिति किम् ? आचार्यपुत्रः । विद्यायोनिसम्बन्ध इति किम् ?

१. अकञन्ते उत्तर° खं१,२ पा१ ॥

भर्तृगृहम् ।।३७।।

## स्वसृ-पत्योर्वा ।३।२।३८।।

विद्यायोनिसम्बन्धनिमित्तानाम् ऋदन्तानां षष्ठ्याः स्वसृपत्योरुत्तरपदयोर्योनि-सम्बन्धनिमित्तयोर्लुब् वा न स्यात् । होतुःस्वसा , होतृस्वसा ; स्वसुःपतिः , स्वसृपतिः । विद्यायोनिसम्बन्ध इत्येव-भर्तृस्वसा , होतृपतिः ।।३८।।

## आ द्वन्द्वे ।३।२।३९।।

विद्यायोनिसम्बन्धनिमित्तानामृदन्तानांयोद्वन्द्वस्तस्मिन्सत्युत्तरपदेपूर्वपद-स्याऽऽत् स्यात् । होतापोतारौ , मातापितरौ । ऋतामित्येव-गुरुशिष्यौ । विद्यायोनिसम्बन्ध इत्येव-कर्तृकारयितारौ ।।३९।।

## पुत्रे ।३।२।४०।।

पुत्रे उत्तरपदे विद्यायोनिसम्बन्धनिमित्तानाम् ऋदन्तानां द्वन्द्वे आः स्यात् । मातापुत्रौ , होतापुत्रौ ।।४०।।

## वेदसहश्रुताऽवायुदेवतानाम् ।३।२।४१।।

एषां द्वन्द्वे पूर्वपदस्योत्तरपदे आः स्यात् । इन्द्रासोमौ । वेदेति किम् ? ब्रह्मप्रजापती । सहेति किम् ? विष्णुशक्रौ । श्रुतेति किम् ? चन्द्रसूर्यौ । वायुवर्जनं किम् ? वाय्वग्नी । देवतानामिति किम् ? यूपचषालौ ।।४१।।

## ई षोम-वरुणेऽग्नेः ।३।२।४२।।

वेदसहश्रुताऽवायुदेवतानां द्वन्द्वे षोमे वरुणे चोत्तरपदेऽग्नेरीः स्यात् , षोमेति निर्देशाद् ईयोगे षत्वं च । अग्नीषोमौ , अग्नीवरुणौ । देवताद्वन्द्व इत्येव-अग्निसोमौ बटू ।।४२।।

## इर्वृद्धिमत्यविष्णौ ।३।२।४३।।

विष्णुवर्जे वृद्धिमत्युत्तरपदे देवताद्वन्द्वे अग्नेरिः स्यात् । आग्निवारुणीमनड्वाही-मालभेत । वृद्धिमतीति किम् ? अग्नीवरुणौ । अविष्णाविति किम् ? आग्नावैष्णवं चरुं निर्वपेत् ।।४३।।

## दिवो द्यावा ।३।२।४४।।

देवताद्वन्द्वे दिव उत्तरपदे द्यावेति स्यात् । द्यावाभूमी ।।४४।।

## दिवस्-दिवः पृथिव्यां वा ।३।२।४५।।

देवताद्वन्द्वे दिवः पृथिव्यामुत्तरपदे एतौ वा स्याताम् । दिवस्पृथिव्यौ , दिवःपृथिव्यौ , द्यावापृथिव्यौ ॥४५॥

**उषासोषसः ।३।२।४६॥**

देवताद्वन्द्वे उषस उत्तरपदे उषासा स्यात् । उषासासूर्यम् ॥४६॥

**मातरपितरं वा ।३।२।४७॥**

मातृपित्रोः पूर्वोत्तरपदयोर्द्वन्द्वे ऋतोऽरो वा निपात्यते । मातरपितरयोः , मातापित्रोः ॥४७॥

**वर्चस्कादिष्ववस्करादयः ।३।२।४८॥**

एष्वर्थेष्वेते कृतशषसाद्युत्तरपदाः साधवः स्युः । अवस्करोऽन्नमलम् , अवकरोऽन्यः ; अपस्करो रथाङ्गम् , अपकरोऽन्यः ॥४८॥

**परतः स्त्री पुंवत् स्त्र्येकार्थेऽनूङ् ।३।२।४९॥**

**परतः** विशेष्यवशात् स्त्रीलिङ्गः स्त्रीवृत्तावेकार्थे उत्तरपदे पुंवत् स्यात् , न तूङन्तः । दर्शनीयभार्यः । परत इति किम् ? द्रोणीभार्यः । स्त्रीति किम् ? खलपुदृष्टिः । स्त्र्येकार्थ इति किम् ? गृहिणीनेत्रः , कल्याणीमाता । अनूङिति किम् ? करभोरूभार्यः ॥४९॥

**क्यङ्-मानि-पित्तद्धिते ।३।२।५०॥**

क्यङि मानिनि चोत्तरपदे पित्तद्धित्ते च परतः स्त्रीलिङ्गोऽनूङ् पुंवत् स्यात् । श्येतायते , दर्शनीयमानी अयमस्याः , अजथ्यं यूथम् ॥५०॥

**जातिश्च णि-तद्धितय-स्वरे ।३।२।५१॥**

अन्या परतः स्त्री जातिश्च णौ प्रत्यये यादौ स्वरादौ च तद्धिते विषयभूते पुंवत् स्याद् , अनूङ् । पटयति , एत्यः , भावत्कम् । जाति- दारद्यः , गार्गः । तद्धितेति किम् ? हस्तिनीयति , हस्तिन्यः ॥५१॥

**एयेऽग्नायी ।३।२।५२॥**

एयप्रत्ययेऽग्नाय्येव परतः स्त्री पुंवत् स्यात् । आग्नेयः । पूर्वेण सिद्धे नियमार्थमिदम् । श्यैनेयः ॥५२॥

**नाऽप्-प्रियाऽऽदौ ।३।२।५२॥**

अप्प्रत्ययान्ते स्त्र्येकार्थे उत्तरपदे प्रियादौ च परतः स्त्री पुंवन्न स्यात् ।

कल्याणी[१] श्चमा रात्रयः , कल्याणीप्रियः । अपूप्रियादाविति किम् ? कल्याण-पञ्चमीकः पक्षः ॥५३॥

**तद्धिताऽककोपान्त्य-पूरण्याख्याः ।३।२।५४॥**

तद्धितस्याऽकप्रत्ययस्य च क उपान्त्यो यासां ताः , पूरणप्रत्ययान्ताः , संज्ञाश्च परतः स्त्रियः पुंवन्न स्युः । मद्रिकाभार्यः , कारिकाभार्यः , पञ्चमीभार्यः , दत्ताभार्यः । तद्धिताकेति किम् ? पाकभार्यः ॥५४॥

**तद्धितः स्वरवृद्धिहेतुररक्त-विकारे ।३।२।५५॥**

रक्त-विकाराभ्यामन्यार्थे स्वरवृद्धिहेतुर्यस्तद्धितस्तदन्तः परतः स्त्री पुंवन्न स्यात् । माथुरीभार्यः । स्वरेति किम् ? वैयाकरणभार्यः । वृद्धिहेतुरिति किम् ? अर्द्धप्रस्थभार्यः । अरक्तविकार इति किम् ? काषायबृहतिकः , लौहेषः ॥५५॥

**स्वाङ्गान्ङीर्जातिश्चाऽमानिनि ।३।२।५६॥**

स्वाङ्गाद् यो ङीस्तदन्तो जातिवाची च परतः स्त्री पुंवन्न स्यात् , न तु मानिनि । दीर्घकेशीभार्यः , कठीभार्यः , शूद्राभार्यः । स्वाङ्गादिति किम् ? पटुभार्यः । अमानिनीति किम् ? दीर्घकेशमानिनी ॥५६॥

**पुंवत् कर्म्मधारये ।३।२।५७॥**

परतः स्त्री अनूङ् कर्मधारये सति स्त्र्येकार्थे उत्तरपदे परे पुंवत् स्यात् । कल्याणप्रिया , मद्रकभार्या , माथुरवृन्दारिका , चन्द्रमुखवृन्दारिका । अनूङित्येव-ब्रह्मबन्धूवृन्दारिका ॥५७॥

**रिति ।३।२।५८॥**

परतः स्त्री अनूङ् रिति प्रत्यये पुंवत् स्यात् । पटुजातीया , कठदेशीया ॥५८॥

**त्व-ते गुणः ।३।२।५९॥**

परतः स्त्र्यनूङ् गुणवचनस्त्व-तयोः प्रत्यययोः पुंवत् स्यात् । पटुत्वम् , पटुता । गुण इति किम् ? कठीत्वम् ॥५९॥

**च्वौ क्वचित् ।३।२।६०॥**

परतः स्त्र्यनूङ् च्वौ क्वचित् पुंवत् स्यात् । महद्भूता कन्या । क्वचिदिति किम् ? गोमतीभूता ॥६०॥

**सर्वादयोऽस्यादौ ।३।२।६१॥**

सर्वादिः परतः स्त्री पुंवत् स्यात् , न तु स्यादौ । सर्वस्त्रियः , भवत्पुत्रः । अस्यादाविति किम् ? सर्वस्यै ॥६१॥

**मृगक्षीरादिषु वा ।३।२।६२॥**

एषु समासेषु परतः स्त्री उत्तरपदे पुंवद् वा स्यात् । मृगक्षीरम् , मृगीक्षीरम् , काकशावः , काकीशावः ॥६२॥

**ऋदुदित् तर-तम-रूप-कल्प-ब्रुव-चेलड्-गोत्र-मत-हते वा ह्रस्वश्च ।३।२।६३॥**

ऋदुदित् परतः स्त्री तरादिषु प्रत्ययेषु ब्रुवादौ च स्त्र्येकार्थे उत्तरपदे ह्रस्वान्तः पुंवच्च वा स्यात् । पचन्तितरा , पचत्तरा , पचन्तीतरा ; श्रेयसितरा , श्रेयस्तरा , श्रेयसीतरा । पचन्तितमा , पचत्तमा , पचन्तीतमा ; श्रेयसितमा , श्रेयस्तमा , श्रेयसीतमा । पचन्तिरूपा , पचद्रूपा , पचन्तीरूपा ; विदुषिरूपा , विद्वद्रूपा ; विदुषीरूपा । पचन्तिकल्पा , पचत्कल्पा , पचन्तीकल्पा ; विदुषिकल्पा , विद्वत्कल्पा , विदुषीकल्पा । पचन्तिब्रुवा , पचद्ब्रुवा पचन्तीब्रुवा ; श्रेयसिब्रुवा , श्रेयोब्रुवा श्रेयसीब्रुवा । पचन्तिचेली , पचच्चेली , पचन्तीचेली ; श्रेयसिचेली , श्रेयश्चेली , श्रेयसीचेली । पचन्तिगोत्रा , पचद्गोत्रा , पचन्तीगोत्रा ; श्रेयसिगोत्रा , श्रेयोगोत्रा , श्रेयसीगोत्रा । पचन्तिमता , पचन्मता , पचन्तीमता ; श्रेयसिमता , श्रेयोमता , श्रेयसीमता । पचन्तिहता , पचद्धता , पचन्तीहता ; श्रेयसिहता , श्रेयोहता , श्रेयसीहता ॥६३॥

**ङ्यः ।३।२।६४॥**

ङ्यन्तायाः परतः स्त्रियास्तरादिषु प्रत्ययेषु ब्रुवादिषु चोत्तरपदेषु एकार्थेषु ह्रस्वः स्यात् । गौरितरा , गौरितमा , नर्त्तकिरूपा , कुमारिकल्पा , ब्राह्मणिब्रुवा , गार्गिचेली , ब्राह्मणिगोत्रा , गार्गिमता , गौरिहता ॥६४॥

**भोगवद्-गौरिमतोर्नाम्नि ।३।२।६५॥**

अनयोर्ङ्यन्तयोः संज्ञायां तरादिषु प्रत्ययेषु ब्रुवादौ चोत्तरपदे एकार्थे ह्रस्वः स्यात् । भोगवतितरा , गौरिमतितमा , भोगवतिरूपा , गौरिमतिकल्पा , भोगवतिब्रुवा , गौरिमतिचेली , भोगवतिगोत्रा , गौरिमतिमता , भोगवतिहता । नाम्नीति किम् ? भोगवतितरा , भोगवत्तरा , भोगवतीतरा ॥६५॥

## नवैकस्वराणाम् ।३।२।६६॥

एकस्वरस्य ङ्यन्तस्य तरादौ प्रत्यये ब्रुवादौ चोत्तरपदे स्त्र्येकार्थे वा ह्रस्वः स्यात् । श्रितरा , श्रीतरा ; ज्ञितमा , ज्ञीतमा ; ज्ञिब्रुवा , ज्ञीब्रुवा । एकस्वराणामिति किम् ? कुटीतरा ॥६६॥

## ऊङः ।३।२।६७॥

ऊङन्तस्य तरादौ[१] ब्रुवादौ चोत्तरपदे स्त्र्येकार्थे वा ह्रस्वः स्यात् । ब्रह्मबन्धुतरा , ब्रह्मबन्धूतरा ; कद्रुब्रुवा , कद्रूब्रुवा ॥६७॥

## महतः कर-घास-विशिष्टे डाः ।३।२।६८॥

करादावुत्तरपदे महतो डा वा स्यात् । महाकरः , महत्करः ; महाघासः , महद्घासः ; महाविशिष्टः , महद्विशिष्टः ॥६८॥

## स्त्रियाम् ।३।२।६९॥

स्त्रीवृत्तेर्महतः करादावुत्तरपदे नित्यं डाः स्यात् । महाकरः , महाघासः , महाविशिष्टः ॥६९॥

## जातीयैकार्थेऽच्वेः ।३।२।७०॥

महतोऽच्व्यन्तस्य जातीयरि एकार्थे चोत्तरपदे डाः स्यात् । महाजातीयः , महावीरः । जातीयैकार्थे इति किम् ? महत्तरः । अच्वेरिति किम् ? महद्भूता कन्या ॥७०॥

## न पुंवन्निषेधे ।३।२।७१॥

महतः पुंवन्निषेधविषये उत्तरपदे डा न स्यात् । महतीप्रियः ॥७१॥

## इच्यस्वरे दीर्घ आच्च ।३।२।७२॥

इजन्तेऽस्वरादावुत्तरपदे पूर्वपदस्य दीर्घ आच्च स्यात् । मुष्टीमुष्टि , मुष्टामुष्टि । अस्वर इति किम् ? अस्यसि ॥७२॥

## हविष्यष्टनः कपाले ।३।२।७३॥

हविष्यर्थे कपाले उत्तरपदेऽष्टनो दीर्घः स्यात् । अष्टाकपालं हविः । हविषीति किम् ? अष्टकपालम् । कपाल इति किम् ? अष्टपात्रं हविः ॥७३॥

---

१. तरादौ प्रत्यये पा१ खं२ ॥

## गवि युक्ते ।३।२।७४॥

युक्तेऽर्थे गव्युत्तरपदेऽष्टनो दीर्घः स्यात् । अष्टागवं शकटम् । युक्त इति किम् ? अष्टगुश्चैत्रः ॥७४॥

## नाम्नि ।३।२।७५॥

अष्टन उत्तरपदे संज्ञायां दीर्घः स्यात् । अष्टापदः कैलाशः[१] । नाम्नीति किम् ? अष्टदंष्ट्रः ॥७५॥

## कोटर-मिश्रक-सिध्रक-पुरग-सारिकस्य वणे ।३।२।७६॥

एषां कृतणत्वे वने उत्तरपदे संज्ञायां दीर्घः स्यात् । कोटरावणम् , मिश्रकावणम् , सिध्रकावणम् , पुरगावणम् , सारिकावणम् ॥७६॥

## अञ्जनादीनां गिरौ ।३।२।७७॥

एषां गिरावुत्तरपदे नाम्नि दीर्घः स्यात् । अञ्जनागिरिः , कुक्कुटागिरिः ॥७७॥

## अनजिरादिबहुस्वर-शरादीनां मतौ ।३।२।७८॥

अजिरादिवर्जबहुस्वराणां शरादीनां च मतौ प्रत्यये नाम्नि दीर्घः स्यात् । उदुम्बरावती , शरावती , वंशावती । अनजिरादीति किम् ? अजिरवती , हिरण्यवती ॥७८॥

## ऋषौ विश्वस्य मित्रे ।३।२।७९॥

ऋषावर्थे मित्रे उत्तरपदे विश्वस्य नाम्नि दीर्घः स्यात् । विश्वामित्रः ॥७९॥

## नरे ।३।२।८०॥

नरे उत्तरपदे नाम्नि विश्वस्य दीर्घः स्यात् । विश्वानरः कश्चित् ॥८०॥

## वसु-राटोः ।३।२।८१॥

अनयोरुत्तरपदयोर्विश्वस्य दीर्घः स्यात् । विश्वावसुः , विश्वाराट् ॥८१॥

## वलच्यपित्रादेः ।३।२।८२॥

वलच्प्रत्यये पित्रादिवर्जानां दीर्घः स्यात् । आसुतीवलः । अपित्रादेरिति किम् ? पितृवलः , मातृवलः ॥८२॥

## चितेः कचि ।३।२।८३॥

---

१. **कैलासः** पा२ J3 बृहद्वृत्तौ च ॥

चितेः कचि दीर्घः स्यात् । एकचितीकः ॥८३॥

**स्वामिचिह्नस्याऽविष्टा-ऽष्ट-पञ्च-भिन्न-च्छिन्न-च्छिद्र-स्रुव-स्वस्तिकस्य कर्णे ।३।२।८४॥**

*स्वामी चिह्नयते येन तद्वाचिनो विष्टादिवर्जस्य कर्णे* उत्तरपदे दीर्घः स्यात् । दात्राकर्णः पशुः । स्वामिचिह्नस्येति किम् ? लम्बकर्णः । विष्टादिवर्जनं किम् ? विष्टकर्णः , अष्टकर्ण इत्यादि ॥८४॥

**गति-कारकस्य नहि-वृति-वृषि-व्यधि-रुचि-सहि-तनौ कौ ।३।२।८५॥**

गति-कारकयोर्नह्यादौ किबन्ते उत्तरपदे दीर्घः स्यात् । उपानत् , नीवृत् , प्रावृट् , श्वावित् , नीरुक् , ऋतीषट् , जलासट् , परीतत् ॥८५।

**घञ्युपसर्गस्य बहुलम् ।३।२।८६॥**

घञन्ते उत्तरपदे उपसर्गस्य बहुलं दीर्घः स्यात् । नीक्लेदः , नीवारः । बाहुलकात् क्वचिद् वा - प्रतीवेशः , प्रतिवेशः । क्वचिन्न - विषादः , निषादः ॥८६॥

**नामिनः काशे ।३।२।८७॥**

नाम्यन्तस्योपसर्गस्याऽजन्ते काशे उत्तरपदे दीर्घः स्यात् । नीकाशः , वीकाशः । नामिन इति किम् ? प्रकाशः ॥८७॥

**दस्ति ।३।२।८८॥**

दो यस्तादिरादेशस्तस्मिन् परे नाम्यन्तस्योपसर्गस्य दीर्घः स्यात् । नीत्तम् , वीत्तम् । द इति किम् ? वितीर्णम् । तीति किम् ? सुदत्तम् ॥८८॥

**अपील्वादेर्वहे ।३।२।८९॥**

पील्वादिवर्जस्य नाम्यन्तस्य वहे उत्तरपदे दीर्घः स्यात् । ऋषीवहम् , मुनीवहम् । अपील्वादेरिति किम् ? पीलुवहम् , दारुवहम् ॥८९॥

**शुनः ।३।२।९०॥**

अस्योत्तरपदे दीर्घः स्यात् । श्वादन्तः , श्वावराहम् ॥९०॥

**एकादश-षोडश-षोडत्-षोढा-षड्ढा ।३।२।९१॥**

एकादयो दशादिषु कृतदीर्घत्वादयो निपात्यन्ते । एकादश , षोडश , षड् दन्ता अस्य षोडन् , षोढा , षड्ढा ॥९१॥

**द्वित्र्यष्टानां द्वा-त्रयो-ऽष्टाः प्राक् शतादनशीति-बहुव्रीहौ ।३।२।९२।।**

एषां यथासंख्यमेते प्राक् शतात् संख्यायामुत्तरपदे स्युः , न तु अशीतौ बहुव्रीहिविषये च । द्वादश , त्रयोविंशतिः , अष्टात्रिंशत् । प्राक्शतादिति किम् ? द्विशतम् , त्रिशतम् , अष्टसहस्रम् । अनशीतिबहुव्रीहाविति किम् ? द्व्यशीतिः , द्वित्राः ।।९२।।

**चत्वारिंशदादौ वा ।३।२।९३।।**

द्वित्र्यष्टानां प्राक् शताच्चत्वारिंशदादावुत्तरपदे यथासंख्यं द्वा-त्रयोऽष्टा वा स्युः , अनशीतिबहुव्रीहौ । द्वाचत्वारिंशत् , द्विचत्वारिंशत् ; त्रयश्चत्वारिंशत् , त्रिचत्वारिंशत् ; अष्टाचत्वारिंशत् , अष्टचत्वारिंशत् ।।९३।।

**हृदयस्य हृल्लास-लेखा-ऽण्-ये ।३।२।९४।।**

अस्य लास-लेखयोरुत्तरपदयोरणि ये च प्रत्यये हृत् स्यात् । हृल्लासः , हृल्लेखः , हार्दम् , हृद्यः[१] ।।९४।।

**पदः पादस्याऽऽज्याति-गोपहते ।३।२।९५।।**

पादस्याज्यादावुत्तरपदे पदः स्यात् । पदाजिः , पदातिः , पदगः , पदोपहतः ।।९५।।

**हिम-हति-काषि-ये पद् ।३।२।९६।।**

हिमादावुत्तरपदे ये च प्रत्यये पादस्य पद् स्यात् । पद्धिमम् , पद्धतिः , पत्काषी , पद्याः शर्कराः ।।९६।।

**ऋचः शसि ।३।२।९७।।**

ऋचां पादस्य शादौ शस्प्रत्यये पद् स्यात् । पच्छो गायत्रीं शंसति । ऋच इति किम् ? पादशः श्लोकं वक्ति । द्विशपाठात्[२] स्यादिशसि न स्यात् - ऋचः पादान् पश्य ।।९७।।

**शब्द-निष्क-घोष-मिश्रे वा ।३।२।९८।।**

शब्दादावुत्तरपदे पादस्य पद् वा स्यात् । पच्छब्दः , पादशब्दः ; पन्निष्कः , पादनिष्कः ; पद्घोषः , पादघोषः ; पन्मिश्रः , पादमिश्रः ।।९८।।

**नस् नासिकायास्तः क्षुद्रे ।३।२।९९।।**

१. हृद्यम् खं२ ।। २. द्विशकारपाठात् खं२ J3 ।।

नासिकायास्तस्प्रत्यये क्षुद्रे चोत्तरपदे नस् स्यात् । नस्तः , नःक्षुद्रः ॥९९॥

**येऽवर्णे ।३।२।१००॥**

नासिकाया ये प्रत्यये वर्णादन्यत्रार्थे नस् स्यात् । नस्यम् । य इति किम् ? नासिक्यं पुरम् । अवर्ण इति किम् ? नासिक्यो वर्णः ॥१००॥

**शिरसः शीर्षन् ।३।२।१०१॥**

शिरसो ये प्रत्यये शीर्षन् स्यात् । शीर्षण्यः स्वरः , शीर्षण्यं तैलम् । य इत्येव-शिरस्तः , शिरस्यति ॥१०१॥

**केशे वा ।३।२।१०२॥**

शिरसः केशविषये ये प्रत्यये शीर्षन् वा स्यात् । शीर्षण्याः शिरस्याः केशाः ॥१०२॥

**शीर्षः स्वरे तद्धिते ।३।२।१०३॥**

शिरसः स्वरादौ तद्धिते शीर्षः स्यात् । हास्तिशीर्षिः , शीर्षिकः ॥१०३॥

**उदकस्योदः पेषं-धि-वास-वाहने ।३।२।१०४॥**

उदकस्य पेषमादावुत्तरपदे उदः स्यात् । उदपेषं पिनष्टि , उदधिर्घटः , उदवासः , उदवाहनः ॥१०४॥

**वैकव्यञ्जने पूर्ये ।३।२।१०५॥**

उदकस्याऽसंयुक्तव्यञ्जनादौ पूर्यमाणार्थे उत्तरपदे उदो वा स्यात् ।उदकुम्भः , उदककुम्भः । व्यञ्जन इति किम् ? उदकामत्रम् । एकेति किम् ? उदकस्थालम् । पूर्य इति किम् ? उदकदेशः ॥१०५॥

**मन्थौदन-सक्तु-बिन्दु-वज्र-भार-हार-वीवध-गाहे वा ।३।२।१०६॥**

एषूत्तरपदेषु उदकस्योदो वा स्यात् । उदमन्थः , उदकमन्थः ; उदौदनः , उदकौदनः ; उदसक्तुः , उदकसक्तुः ; उदबिन्दुः , उदकबिन्दुः ; उदवज्रः , उदकवज्रः ; उदभारः , उदकभारः ; उदहारः , उदकहारः ; उदवीवधः , उदकवीवधः ; उदगाहः , उदकगाहः ॥१०६॥

**नाम्न्युत्तरपदस्य च ।३।२।१०७॥**

उदकस्य पूर्वपदस्योत्तरपदस्य च संज्ञायामुदः स्यात् । उदमेघः , उदवाहः , उदपानम् , उदधिः , लवणोदः , कालोदः ॥१०७॥

**ते लुग्वा ।३।२।१०८।।**

संज्ञाविषये पूर्वोत्तरपदे लुग् वा स्यात् । देवदत्तः , देवः , दत्तः ।।१०८।।

**द्व्यन्तरनवर्णोपसर्गादप ईप् ।३।२।१०९।।**

द्व्यन्तर्भ्यामवर्णान्तवर्जोपसर्गेभ्यश्च परस्याऽप उत्तरपदस्य ईप् स्यात् । द्वीपम् , अन्तरीपम् , नीपम् , समीपम् । उपसर्गादिति किम् ? स्वापः । अनवर्णेति किम् ? प्रापम् , परापम् ।।१०९।।

**अनोर्देशे उप् ।३।२।११०।।**

अनोः परस्याऽपो देशेऽर्थे उप् स्यात् । अनूपो देशः । देश इति किम् ? अन्वीपं वनम् ।।११०।।

**खित्यनव्यया-ऽरुषो मोऽन्तो ह्रस्वश्च ।३।२।१११।।**

स्वरान्तस्यानव्ययस्यारुषश्च खित्प्रत्ययान्ते उत्तरपदे मोऽन्तो यथासम्भवं ह्रस्वादेशश्च स्यात् । झंमन्यः , कालिंमन्या , अरुन्तुदः । खितीति किम् ? झमानी । अनव्ययेति किम् ? दोषामन्यमहः ।।१११।।

**सत्या-ऽगदा-ऽस्तोः कारे ।३।२।११२।।**

एभ्यः कारे उत्तरपदे मोऽन्तः स्यात् । सत्यङ्कारः , अगदङ्कारः , अस्तुङ्कारः ।।११२।।

**लोकम्पृण-मध्यन्दिना-ऽनभ्याशमित्यम्[1] ।३।२।११३।।**

एते कृतपूर्वपदमन्ता[2] निपात्यन्ते । लोकम्पृणः , मध्यन्दिनम् , अनभ्याशमित्यः[3] ।।११३।।

**भ्राष्ट्रा-ऽग्नेरिन्धे ।३।२।११४।।**

आभ्यामिन्धे उत्तरपदे मोऽन्तः स्यात् । भ्राष्ट्रमिन्धः , अग्निमिन्धः ।।११४।।

**अगिलाद् गिल-गिलगिलयोः ।३।२।११५।।**

गिलान्तवर्जात् पूर्वपदात् परे गिले गिलगिले चोत्तरपदे मोऽन्तः स्यात् । तिमिङ्गिलः , तिमिङ्गिलगिलः । अगिलादिति किम् ? तिमिङ्गिलगिलः ।।११५।।

**भद्रोष्णात् करणे ।३।२।११६।।**

१. °भ्यास° प्रा० बृहद्वृत्तिं च विना ।। २. °मान्ता पा१ ।। ३. °भ्यासमित्यः पा१,२ विना ।।

आभ्यां परः करणे उत्तरपदे मोऽन्तः स्यात् । भद्रंकरणम् , उष्णंकरणम् ॥११६॥

**नवाऽखित्कृदन्ते रात्रेः ।३।२।११७॥**

खिद्वर्जे कृदन्ते उत्तरपदे परे रात्रेर्मोऽन्तो वा स्यात् । रात्रिंचरः , रात्रिचरः । खिद्वर्जनं किम् ? रात्रिंमन्यमहः । कृदन्त इति किम् ? रात्रिसुखम् । अन्तग्रहणं किम् ? रात्रयिता ॥११७॥

**धेनोर्भव्यायाम् ।३।२।११८॥**

धेनोर्भव्यायामुत्तरपदे मोऽन्तो वा स्यात् । धेनुंभव्या , धेनुभव्या ॥११८॥

**अषष्ठीतृतीयादन्याद् दोऽर्थे ।३।२।११९॥**

अषष्ठ्यन्तादतृतीयान्ताच्चाऽन्यादर्थे उत्तरपदे दन्तो वा स्यात् । अन्यदर्थः , अन्यार्थः । षष्ठ्यादिवर्जनं किम् ? अन्यस्याऽन्येन वाऽर्थः=अन्यार्थः ॥११९॥

**आशीराशा-ऽऽस्थिता-ऽऽस्थोत्सुकोति-रागे ।३।२।१२०॥**

एषूत्तरपदेषु अषष्ठीतृतीयादन्याद् दन्तः स्यात् । अन्यदाशीः , अन्यदाशा , अन्यदास्थितः , अन्यदास्था , अन्यदुत्सुकः , अन्यदूतिः , अन्यद्रागः । अषष्ठीतृतीयादित्येव-अन्यस्य अन्येन वा आशीः अन्याशीः ॥१२०॥

**ईय-कारके ।३।२।१२१॥**

अन्याद् ईये प्रत्यये कारके चोत्तरपदे दन्तः स्यात् । अन्यदीयः , अन्यत्कारकः ॥१२१॥

**सर्वादि-विश्वग्-देवाड्डद्रिः क्वचञ्चौ ।३।२।१२२॥**

सर्वादेर्विष्वग्-देवाभ्यां च परः क्विबन्ते अञ्चावुत्तरपदे डद्रिरन्तः स्यात् । सर्वद्रीचः ,द्व्यद्रयङ् ; विष्वद्रयङ् , देवद्रयङ् । क्वीति किम् ? विष्वगञ्चनम् ॥१२२॥

**सह-समः सध्रि-समि ।३।२।१२३॥**

अनयोः स्थाने क्विबन्ते अञ्चावुत्तरपदे यथासंख्यं सध्रि-समी स्याताम् । सध्र्यङ् , सम्यङ् । क्वचञ्चावित्येव-सहाञ्चनम् ॥१२३॥

**तिरसस्तिर्यति ।३।२।१२४॥**

अकारादौ क्व्यञ्चावुत्तरपदे तिरसस्तिरिः स्यात् । तिर्यङ् । अतीति किम् ? तिरश्चः ॥१२४॥

## नञत् ।३।२।१२५॥

उत्तरपदे परे नञ् अः स्यात् । अचौरः पन्थाः । उत्तरपद इत्येव- न भुङ्क्ते ॥१२५॥

## त्यादौ क्षेपे ।३।२।१२६॥

त्याद्यन्ते पदे परे निन्दायां गम्यायाम् नञ् अः स्यात् । अपचसि त्वं जाल्म ! । क्षेप इति किम् ? न पचति चैत्रः ॥१२६॥

## नगोऽप्राणिनि वा ।३।२।१२७॥

अप्राणिन्यर्थे नगो वा निपात्यते । नगः , अगो गिरिः । अप्राणिनीति किम् ? अगोऽयं शीतेन ॥१२७॥

## नखादयः ।३।२।१२८॥

एते अकृतादनादेशा[1] निपात्यन्ते । नखः , नासत्यः ॥१२८॥

## अन् स्वरे ।३।२।१२९॥

स्वरादावुत्तरपदे नञोऽन् स्यात् । अनन्तो जिनः ॥१२९॥

## कोः कत् तत्पुरुषे ।३।२।१३०॥

स्वरादावुत्तरपदे कोस्तत्पुरुषे कद् स्यात् । कदश्वः । तत्पुरुष इति किम् ? कूष्ट्रो देशः । स्वर इत्येव-कुब्राह्मणः ॥१३०॥

## रथ-वदे ।३।२।१३१॥

रथे वदे चोत्तरपदे कोः कद् स्यात् । कद्रथः , कद्वदः ॥१३१॥

## तृणे जातौ ।३।२।१३२॥

जातावर्थे तृणे उत्तरपदे कोः कद् स्यात् । कत्तृणा रौहिषाख्या तृणजातिः ॥१३२॥

## कत्त्रिः ।३।२।१३३॥

कोः किमो वा त्रावुत्तरपदे कद् स्यात् । कत्त्रयः ॥१३३॥

## काऽक्ष-पथोः ।३।२।१३४॥

अनयोरुत्तरपदयोः कोः का स्यात् । काऽक्षः , कापथम् ॥१३४॥

१. अकृतः अत् अन् आदेशो येषां ते तथोक्ताः । **'अकृताकाराद्यादेशा'** J3 ॥

**पुरुषे वा ।३।२।१३५।।**

पुरुषे उत्तरपदे कोः का वा स्यात् । कापुरुषः , कुपुरुषः ।।१३५।।

**अल्पे ।३।२।१३६।।**

ईषदर्थस्य कोरुत्तरपदे का स्यात् । कामधुरम् , काऽच्छम् ।।१३६।।

**का-कवौ वोष्णे ।३।२।१३७।।**

उष्णे उत्तरपदे कोः का-कवौ वा स्याताम् । कोष्णम् , कवोष्णम् ।पक्षे यथाप्राप्तमिति तत्पुरुषे -कदुष्णम् । बहुव्रीहौ -कूष्णो देशः ।।१३७।।

**कृत्येऽवश्यमो लुक् ।३।२।१३८।।**

कृत्यान्ते उत्तरपदे ऽवश्यमो लुक् स्यात् । अवश्यकार्यम् । कृत्य इति किम् ? अवश्यंलावकः ।।१३८।

**समस्तत-हिते वा ।३।२।१३९।।**

तते हिते चोत्तरपदे समो लुग् वा स्यात् । सततम् , सन्ततम् ; सहितम् , संहितम् ।।१३९।।

**तुमश्च मनः कामे ।३।२।१४०।।**

तुम्-समोर्मनसि कामे चोत्तरपदे लुक् स्यात् । भोक्तुमनाः , गन्तुकामः ; समनाः , सकामः ।।१४०।।

**मांसस्याऽनड्-घञि पचि नवा ।३।२।१४१।।**

अनड्-घञन्ते पचावुत्तरपदे मांसस्य लुग् वा स्यात् । मांस्पचनम् , मांसपचनम् ; मांस्पाकः , मांसपाकः ।।१४१।।

**दिक्शब्दात् तीरस्य तारः ।३।२।१४२।।**

अस्मात् परस्य तीरस्योत्तरपदस्य तारो वा स्यात् । दक्षिणतारम् , दक्षिणतीरम् ।।१४२।।

**सहस्य सोऽन्यार्थे ।३।२।१४३।।**

उत्तरपदे परे बहुव्रीहौ सहस्य सो वा स्यात् । सपुत्रः , सहपुत्रः । अन्यार्थ इति किम् ? सहजः ।।१४३।।

**नाम्नि ।३।२।१४४।।**

उत्तरपदे परे बहुव्रीहौ सहस्य सः संज्ञायाम् स्यात् । साश्वत्थं वनम् । अन्यार्थ इत्येव-सहदेवः कुरुः ॥१४४॥

**अदृश्या-ऽधिके ।३।२।१४५॥**

**अदृश्यं** परोक्षम् , **अधिकम्** अधिरूढम् , तदर्थयोरुत्तरपदयोर्बहुव्रीहौ सहस्य सः स्यात् । साग्निः कपोतः , सद्रोणा खारी ॥१४५॥

**अकालेऽव्ययीभावे ।३।२।१४६॥**

अकालवाचिन्युत्तरपदे सहस्याव्ययीभावे सः स्यात् । सब्रह्म साधूनाम् । अकाल इति किम् ? सहपूर्वाह्णं शेते । अव्ययीभाव इति किम् सहयुध्वा ॥१४६॥

**ग्रन्थान्ते ।३।२।१४७॥**

एतद्वाच्युत्तरपदे सहस्याव्ययीभावे सः स्यात् । सकलं ज्योतिषमधीते ॥१४७॥

**नाऽऽशिष्यगो-वत्स-हले ।३।२।१४८॥**

गवादिवर्जे उत्तरपदे आशिषि गम्यायां सहस्य सो न स्यात् । स्वस्ति गुरवे सहशिष्याय । आशिषीति किम् ? सपुत्रः । गवादिवर्जनं किम् ? स्वस्ति तुभ्यं सगवे , सहगवे ; सवत्साय , सहवत्साय ; सहलाय , सहहलाय ॥१४८॥

**समानस्य धर्मादिषु ।३।२।१४९॥**

धर्मादावुत्तरपदे समानस्य सः स्यात् । सधर्मा , सनामा ॥१४९॥

**सब्रह्मचारी ।३।२।१५०॥**

अयं निपात्यते ॥१५०॥

**दृक्-दृश-दृक्षे ।३।२।१५१॥**

एषूत्तरपदेषु समानस्य सः स्यात् । सदृक् , सदृशः , सदृक्षः ॥१५१॥

**अन्य-त्यदादेराः ।३।२।१५२॥**

अन्यस्य त्यदादेश्च दृगादावुत्तरपदे आः स्यात् । अन्यादृक् , अन्यादृशः , अन्यादृक्षः ; त्या[1]दृक् , त्यादृशः , त्यादृक्षः ; अस्मादृक् , अस्मादृशः , अस्मादृक्षः ॥१५२॥

**इदं-किमीत्-की ।३।२।१५३॥**

१. तादृक् तादृशः तादृक्षः खं२ ॥

दृगादावुत्तरपदे इदम्-किमौ यथासङ्ख्यम् ईत्-कीरूपौ स्याताम् । ईदृक् , ईदृशः , ईदृक्षः ; कीदृक् , कीदृशः , कीदृक्षः ॥१५३॥

**अनञः क्त्वो यप् ।३।२।१५४॥**

नञोऽन्यस्मादव्ययात् पूर्वपदात् परं यदुत्तरपदं तदवयवस्य क्त्वो यप् स्यात् । प्रकृत्य । अनञ इति किम् ? अकृत्वा , परमकृत्वा । उत्तरपदस्येत्येव-अलं कृत्वा ॥१५४॥

**पृषोदरादयः ।३।२।१५५॥**

एते साधवः स्युः । पृषोदरः , बलाहकः[1] ॥१५५॥

**वाऽवाऽप्योस्तनि-क्री धागू-नहोर्व-पी ।३।२।१५६॥**

अवस्योपसर्गस्य तनिक्रियोरपेश्च धागू-नहोः परयोर्यथासंख्यं व-पी वा स्याताम् । वतंसः , अवतंसः ; वक्रयः , अवक्रयः ; पिहितम् , अपिहितम् ; पिनद्धम् , अपिनद्धम् ॥१५६॥

इत्याचार्यश्री**हेमचन्द्र**विरचितायां
**सिद्धहेमचन्द्रा**भिधानस्वोपज्ञशब्दानुशासनलघुवृत्तौ
तृतीयस्याध्यायस्य द्वितीयः पादः समाप्तः ॥३१२॥

श्रीमद्**वल्लभराजस्य** , प्रतापः कोऽपि दुःसहः ।
प्रसरन् वैरिभूपेषु दीर्घनिद्रामकल्पयत् ॥१०॥

---

१. **बलाहकः मयूर महिषः** पा१ ॥

# तृतीयः पाद:[१]

## [ अथाऽऽख्यातप्रकरणम् ]

### वृद्धिराऽऽरैदौत् ।३।३।१।।

आ आर् ऐ औ , एते प्रत्येकं वृद्धिः स्युः । मार्ष्टि , कार्यम् , नायकः , औपगवः ।।१।।

### गुणोऽरेदोत् ।३।३।२।।

एते प्रत्येकं गुणः स्युः । करोति , चेता , स्तोता ।।२।।

### क्रियार्थो धातुः ।३।३।३।।

कृतिः क्रिया पूर्वापरीभूता , साऽर्थो यस्य स धातुः स्यात् । भवति , अत्ति , गोपायति , जुगुप्सते , पापच्यते , पुत्रकाम्यति , मुण्डयति , जवनः ।।३।।

### न प्रादिरप्रत्ययः ।३।३।४।।

प्रादिर्धातोरवयवो न स्यात् , ततः पर एव धातुरित्यर्थः , न चेत् ततः परः प्रत्ययः । अभ्यमनायत , प्रासादीयत् । प्रादिरिति किम् ? अमहापुत्रीयत् । अप्रत्यय इति किम् ? औत्सुकायत ।।४।।

### अवौ दा-धौ दा ।३।३।५।।

दाधारूपौ धातू अवितौ दा स्याताम् । दाम् -प्रणिदाता । देङ्-प्रणिदयते । डुदांग् - प्रणिददाति । दों - प्रणिद्यति । ट्धें - प्रणिधयति । डुधांग् -प्रणिदधाति । अवाविति किम् ? दांव् -दातं बर्हिः । दैंव् -अवदातं मुखम् ।।५।।

### वर्तमाना-तिव् तस् अन्ति , सिव् थस् थ , मिव् वस् मस् ; ते आते अन्ते , से आथे ध्वे , ए वहे महे ।३।३।६।।

इमानि वचनानि वर्त्तमाना स्युः ।।६।।

### सप्तमी-यात् याताम् युस् , यास् यातम् यात , याम् याव याम ; ईत ईयाताम् ईरन् , ईथास् ईयाथाम् ईध्वम् , ईय ईवहि ईमहि ।३।३।७।।

१. ३।३।१।- त आरभ्य ५।४।९०। पर्यन्तमस्य संशोधने लघुवृत्तेः इमे हस्तलिखिता आदर्शाः सम्प्रयुक्ताः— पा१,२,३,४,५ P1,2,3, J2,3 ।।

इमानि वचनानि सप्तमी स्युः ॥७॥

**पञ्चमी-तुव् ताम् अन्तु , हि तम् त , आनिव् आवव् आमव् ; ताम् आताम् अन्ताम् , स्व आथाम् ध्वम् , ऐव् आवहैव् आमहैव् ।३।३।८॥**

इमानि वचनानि पञ्चमी स्युः ॥८॥

**ह्यस्तनी-दिव् ताम् अन् , सिव् तम् त , अम्व् व म ; त आताम् अन्त , थास् आथाम् ध्वम् , इ वहि महि ।३।३।९॥**

इमानि वचनानि ह्यस्तनी स्युः ॥९॥

**एताः शितः ।३।३।१०॥**

एताश्चतस्रः शितो ज्ञेयाः । भवति , भवेत् , भवतु , अभवत् ॥१०॥

**अद्यतनी-दि ताम् अन् , सि तम् त , अम् व म ; त आताम् अन्त , थास् आथाम् ध्वम् , इ वहि महि ।३।३।११॥**

इमानि वचनानि अद्यतनी स्युः ॥११॥

**परोक्षा- णव् अतुस् उस् , थव् अथुस् अ , णव् व म ; ए आते इरे , से आथे ध्वे , ए वहे महे ।३।३।१२॥**

इमानि वचनानि परोक्षा स्युः ॥१२॥

**आशीः- क्यात् क्यास्ताम् क्यासुस् , क्यास् क्यास्तम् क्यास्त , क्यासम् क्यास्व क्यास्म ; सीष्ट सीयास्ताम् सीरन् , सीष्ठास् सीयास्थाम् सीध्वम् , सीय सीवहि सीमहि ।३।३।१३॥**

इमानि वचनानि आशीः स्युः ॥१३॥

**श्वस्तनी- ता तारौ तारस् , तासि तास्थस् तास्थ , तास्मि तास्वस् तास्मस् ; ता तारौ तारस् , तासे तासाथे ताध्वे , ताहे तास्वहे तास्महे ।३।३।१४॥**

इमानि वचनानि श्वस्तनी स्युः ॥१४॥

**भविष्यन्ती- स्यति स्यतस् स्यन्ति , स्यसि स्यथस् स्यथ , स्यामि स्यावस् स्यामस् ; स्यते स्येते स्यन्ते , स्यसे स्येथे स्यध्वे , स्ये स्यावहे स्यामहे ।३।३।१५।।**

इमानि वचनानि भविष्यन्ती स्युः ।।१५।।

**क्रियातिपत्तिः- स्यत् स्यताम् स्यन् , स्यस् स्यतम् स्यत , स्यम् स्याव स्याम ; स्यत स्येताम् स्यन्त , स्यथास् स्येथाम् स्यध्वम् , स्ये स्यावहि स्यामहि ।३।३।१६।।**

इमानि वचनानि क्रियातिपत्तिः स्युः ।।१६।।

**त्रीणि त्रीण्यन्ययुष्मदस्मदि ।३।३।१७।।**

सर्वासां विभक्तीनां त्रीणि त्रीणि वचनानि , अन्यस्मिन्नर्थे युष्मदर्थेऽस्मदर्थे च वाच्ये यथाक्रमं स्युः । स पचति , तौ पचतः , ते पचन्ति । पचते , पचेते , पचन्ते । त्वं पचसि , युवां पचथः , यूयं पचथ । पचसे , पचेथे , पचध्वे । अहं पचामि , आवां पचावः , वयं पचामः । पचे , पचावहे , पचामहे । एवं सर्वासु । द्वययोगे त्रययोगे च पराश्रयमेव वचनम् । स च त्वं च पचथः , स च त्वं च अहं च पचामः ।।१७।।

**एक-द्वि-बहुषु ।३।३।१८।।**

अन्यादिषु यानि त्रीणि त्रीण्युक्तानि तान्येक-द्वि-बहुष्वर्थेषु स्युः[१] । स पचति , तौ पचतः , ते पचन्तीत्यादि ।।१८।।

**नवाऽऽद्यानि शतृ-क्वसू च परस्मैपदम् ।३।३।१९।।**

सर्वविभक्तीनामाद्यानि नव नव वचनानि शतृ-क्वसू च परस्मैपदानि स्युः । तिव् , तस् , अन्ति ; सिव् , थस् , थ ; मिव् वस् , मस् । एवं सर्वासु ।।१९।।

**पराणि काना-ऽऽनशौ चाऽऽत्मनेपदम् ।३।३।२०।।**

सर्वविभक्तीनां पराणि नव नव वचनानि कानानशौ चाऽऽत्मनेपदानि स्युः

१. यथाक्रमं स्युः पा१ ।।

। ते , आते , अन्ते ; से , आथे , ध्वे ; ए , वहे , महे । एवं सर्वासु ॥२०॥

**तत् साप्या-ऽनाप्यात् कर्म-भावे , कृत्य-क्त-खलर्थाश्च ।३।३।२१॥**

तद् आत्मनेपदं कृत्य-क्त-खलर्थाश्च प्रत्ययाः सकर्मकाद्धातोः **कर्मणि** , अकर्मकादविवक्षितकर्मकाच्च **भावे** स्युः । क्रियते कटश्चैत्रेण , चक्राणः , क्रियमाणः , भूयते त्वया , भूयमानम् , क्रियते , मृदु पच्यते , कार्यः कर्त्तव्यः करणीयः देयः कृत्यः कटस्त्वया , शयितव्यम् , शयनीयम् , शेयम् , कार्यम् , कर्त्तव्यम् , करणीयम् , देयम् , कृत्यं त्वया , कृतः कटः , शयितम् , कृतं त्वया ; सुकरः कटस्त्वया , सुशयम् , सुकरं त्वया , सुकटंकराणि वीरणानि , ईषदाढ्यम्भवं भवता , सुज्ञानं तत्त्वं मुनिना , सुग्लानं दीनेन ; मास आस्यते , मासमास्यते ॥२१॥

**इङितः कर्त्तरि ।३।३।२२॥**

इदितो ङितश्च धातोः कर्त्तर्यात्मनेपदम् स्यात् । एधते , एधमानः , शेते , शयानः ॥२२॥

**क्रियाव्यतिहारेऽगति-हिंसा-शब्दार्थ-हसो ह्-वहश्चाऽनन्योन्यार्थे ।३।३।२३॥**

अन्यचिकीर्षितायाः क्रियाया अन्येन हरणं करणम्=क्रियाव्यतिहारः , तदर्थाद् गति-हिंसा-शब्दार्थ-हसृवर्जाद् धातोर्हृ-वहिभ्यां च कर्त्तर्यात्मनेपदम् स्यात् , न त्वन्योन्येतरेतर-परस्परशब्दयोगे । व्यतिलुनते , व्यतिहरन्ते , व्यतिवहन्ते भारम् । क्रियेति किम् ? द्रव्यव्यतिहारे मा भूत् , चैत्रस्य धान्यं व्यतिलुनन्ति । गत्यर्थादिवर्जनं किम् ? व्यतिसर्प्पन्ति , व्यतिहिंसन्ति , व्यतिजल्पन्ति , व्यतिहसन्ति । अनन्योन्यार्थ इति किम् ? परस्परस्य व्यतिलुनन्ति । कर्त्तरीत्येव-तेन भावकर्मणोः पूर्वेणैव गत्यर्थादिभ्योऽपि स्यात् , व्यतिगम्यन्ते ग्रामाः ॥२३॥

**निविशः ।३।३।२४॥**

नेर्विशः कर्त्तर्यात्मनेपदं स्यात् । निविशते ॥२४॥

**उपसर्गादस्योहो वा ।३।३।२५॥**

उपसर्गात् पराभ्यामस्यत्यूहिभ्याम् कर्त्तर्यात्मनेपदं वा स्यात् । विपर्यस्यते ,

विपर्यस्यति ; समूहते , समूहति ॥२५॥

**उत्-स्वराद् युजेरयज्ञतत्पात्रे ।३।३।२६॥**

उदः स्वरान्ताच्चोपसर्गात् पराद् युनक्तेः कर्त्तर्यात्मनेपदं स्यात् , न चेद् यज्ञे यत् तत्पात्रं तद्विषयो युज्यर्थः स्यात् । उद्युङ्क्ते , उपयुङ्क्ते । उत्स्वरादिति किम् ? संयुनक्ति । अयज्ञतत्पात्र इति किम् ? द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति ॥२६॥

**परि-व्यवात् क्रियः ।३।३।२७॥**

एभ्य उपसर्गेभ्यः परात् क्रीणातेः कर्त्तर्यात्मनेपदं स्यात् । परिक्रीणीते , विक्रीणीते , अवक्रीणीते । उपसर्गादित्येव- उपरि क्रीणाति ॥२७॥

**परा-वेर्जेः ।३।३।२८॥**

आभ्यां पराज्जयतेः कर्त्तर्यात्मनेपदं स्यात् । पराजयते , विजयते[१] ॥२८॥

**समः क्ष्णोः ।३।३।२९॥**

समः परात् क्ष्णौतेः कर्त्तर्यात्मनेपदं स्यात् । संक्ष्णुते शस्त्रम्[२] ॥२९॥

**अपस्किरः ।३।३।३०॥**

अपात् किरतेः सस्सट्कात् कर्त्तर्यात्मनेपदम् स्यात् । अपस्किरते वृषभो हृष्टः । स्सट्निर्देशः किम् ? अपकिरति ॥३०॥

**उदश्चरः साप्यात् ।३।३।३१॥**

उत्पूर्वाच्चरेः सकर्मकात् कर्त्तर्यात्मनेपदं स्यात् । मार्गमुच्चरते । साप्यादिति किम् ? धूम उच्चरति ॥३१॥

**समस्तृतीयया ।३।३।३२॥**

सम्पूर्वाच्चरेस्तृतीयान्तेन योगे कर्त्तर्यात्मनेपदं स्यात् । अश्वेन सञ्चरते । तृतीययेति किम् ? उभौ लोकौ सञ्चरसि ॥३२॥

**क्रीडोऽकूजने ।३।३।३३॥**

---

१. इतः परं केवलं J3 मध्ये **'उपसर्गाभ्यामित्येव — सेना परा जयति , वनं बहुवि जयति'** इति पाठोऽधिको दृश्यते ॥ २. इतः परं **'सम इति किम् ? क्ष्णौति । उपसर्गादित्येव— आयसं क्ष्णौति'** इत्यधिकः पाठो J3 मध्ये दृश्यते ॥

**कूजनम्** अव्यक्तः शब्दः , ततोऽन्यार्थात् संपूर्वात् क्रीडेः कर्त्तर्यात्मनेपदं स्यात् । संक्रीडते । सम इत्येव-क्रीडति । अकूजन इति किम् ? संक्रीडन्त्यनांसि ॥३३॥

## अन्वाङ्-परेः ।३।३।३४॥

एभ्यः परात् क्रीडेः कर्त्तर्यात्मनेपदं स्यात् । अनुक्रीडते , आक्रीडते , परिक्रीडते ॥३४॥

## शप उपलम्भने ।३।३।३५॥

**उपलम्भनं** प्रकाशनं शपथो वा , तदर्थाच्छपेः कर्त्तर्यात्मनेपदं स्यात् । मैत्राय शपते । उपलम्भन इति किम् ? मैत्रं शपति ॥३५॥

## आशिषि नाथः ।३।३।३६॥

आशीरर्थादेव नाथेः कर्त्तर्यात्मनेपदं स्यात् । सर्प्पिषो नाथते । आशिषीति किम् ? मधु नाथति ॥३६॥

## भुनजोऽत्राणे ।३।३।३७॥

पालनादन्यार्थाद् भुनक्तेः कर्त्तर्यात्मनेपदं स्यात् । ओदनं भुङ्क्ते । भुनज इति किम् ? ओष्ठौ निर्भुजति । अत्राण इति किम् ? पृथ्वीं भुनक्ति ॥३७॥

## हृगो गतताच्छील्ये ।३।३।३८॥

**गतं** सादृश्यम् , हृगो गतताच्छील्यार्थात् कर्त्तर्यात्मनेपदं स्यात् । पैतृकमश्वा अनुहरन्ते , पितुरनुहरन्ते[१] । गत इति किम् ? पितुर्हरति । ताच्छील्य इति किम् ? नटो राममनुहरति ॥३८॥

## पूजा-ऽऽचार्यक-भृत्युत्क्षेप-ज्ञान-विगणन-व्यये नियः ।३।३।३९॥

पूजादिषु गम्येषु नियः कर्त्तर्यात्मनेपदं स्यात् । नयते विद्वान् स्याद्वादे , माणवकमुपनयते , कर्मकरानुपनयते , शिशुमुदानयते , नयते तत्त्वार्थे , मद्राः कारं विनयन्ते , शतं विनयते । एष्विति किम् ? अजां नयति ग्रामम् ॥३९॥

## कर्तृस्थामूर्त्ताऽऽप्यात् ।३।३।४०॥

कर्तृस्थममूर्तं कर्म यस्य तस्मान्नियः कर्त्तर्यात्मनेपदं स्यात् । श्रमं विनयते

१. ॰हरते P1सं, P3, J2, पा१,४,५ बृहद्वृत्तौ मध्यमवृत्तौ न्यासे च ॥

। कर्तृस्थेति किम् ? चैत्रो मैत्रस्य मन्युं विनयति । अमूर्त्तेति किम् ? गडुं विनयति । आप्येति किम् ? बुद्ध्या विनयति ॥४०॥

**शदेः शिति ।३।३।४१॥**

शिद्विषयात् शदेः कर्त्तर्यात्मनेपदं स्यात् । शीयते । शितीति किम् ? शत्स्यति ॥४१॥

**म्रियतेरद्यतन्याशिषि च ।३।३।४२॥**

अतो[१]ऽद्यतन्याशीर्विषयाच्छिद्विषयाच्च कर्त्तर्यात्मनेपदं स्यात् । अमृत , मृषीष्ट , म्रियते । अद्यतन्याशिषि चेति किम् ? ममार ॥४२॥

**क्यङ्षो नवा ।३।३।४३॥**

क्यङ्षन्तात् कर्त्तर्यात्मनेपदं वा स्यात् । निद्रायति , निद्रायते ॥४३॥

**द्युद्भ्योऽद्यतन्याम् ।३।३।४४॥**

द्युतादिभ्योऽद्यतनीविषये कर्त्तर्यात्मनेपदं वा स्यात् । व्यद्युतत् , व्यद्योतिष्ट ; अरुचत् , अरोचिष्ट । अद्यतन्यामिति किम् ? द्योतते ॥४४॥

**वृद्भ्यः स्य-सनोः ।३।३।४५॥**

वृदादेः पञ्चतः स्यादौ प्रत्यये सनि च विषये कर्त्तर्यात्मनेपदं वा स्यात् । वर्त्स्यति , वर्तिष्यते ; विवृत्सति , विवर्त्तिषते । स्य-सनोरिति किम् ? वर्त्तते ॥४५॥

**कृपः श्वस्तन्याम् ।३।३।४६॥**

कृपेः श्वस्तनीविषये कर्त्तर्यात्मनेपदं वा स्यात् । कल्प्तासि , कल्पितासे ॥४६॥

**क्रमोऽनुपसर्गात् ।३।३।४७॥**

अतः[२] कर्त्तर्यात्मनेपदं वा स्यात् । क्रमते , क्रामति[३] ॥४७॥

**वृत्ति-सर्ग-तायने ।३।३।४८॥**

**वृत्तिः** अप्रतिबन्धः , **सर्गः** उत्साहः , **तायनं** स्फीतता , एतद्वृत्तेः क्रमेः

---

१. म्रियते[:] अद्य° पा२ ॥ २. अनुपसर्गादतः कर्त° P2 । अविद्यमानोपसर्गात् कर्त° J3 ॥ ३. इतः परम् 'अनुपसर्गादिति किम् ? अनुक्रामति' इति J3 मध्येऽधिकः पाठः ॥

कर्त्तर्यात्मनेपदं स्यात् । शास्त्रेऽस्य क्रमते बुद्धिः , सूत्राय क्रमते , क्रमन्तेऽस्मिन् योगाः ॥४८॥

## परोपात् ।३।३।४९॥

आभ्यामेव परात् क्रमेर्वृत्त्याद्यर्थात् कर्त्तर्यात्मनेपदं स्यात् । पराक्रमते , उपक्रमते । परोपादिति किम् ? अनुक्रामति । वृत्त्यादावित्येव-पराक्रामति ॥४९॥

## वेः स्वार्थे ।३।३।५०॥

स्वार्थः पादविक्षेपः , तदर्थाद् विपूर्वात् क्रमेः कर्त्तर्यात्मनेपदं स्यात् । साधु विक्रमते गजः । स्वार्थ इति किम् ? गजेन विक्रामति ॥५०॥

## प्रोपादारम्भे ।३।३।५१॥

आरम्भार्थात् प्रोपाभ्यां परात् क्रमेः कर्त्तर्यात्मनेपदं स्यात् । प्रक्रमते , उपक्रमते भोक्तुम् । आरम्भ इति किम् ? प्रक्रामति , यातीत्यर्थः ॥५१॥

## आङो ज्योतिरुद्गमे ।३।३।५२॥

आङः परात् क्रमेश्चन्द्राद्युद्गमार्थात् कर्त्तर्यात्मनेपदं स्यात् । आक्रमते चन्द्रः सूर्यो वा । ज्योतिरुद्गम इति किम् ? आक्रामति बटुः कुतुपम् , धूम आक्रामति ॥५२॥

## दागोऽस्वास्यप्रसार-विकासे ।३।३।५३॥

स्वास्यप्रसार-विकासाभ्यामन्यार्थाद् आङ्पूर्वाद् दागः कर्त्तर्यात्मनेपदं स्यात् । विद्यामादत्ते । स्वास्यादिवर्जनं किम् ? उष्ट्रो मुखं व्याददाति , कूलं व्याददाति ॥५३॥

## नु-प्रच्छः ।३।३।५४॥

आङ्पूर्वान्नौतेः प्रच्छेश्च कर्त्तर्यात्मनेपदं स्यात् । आनुते शृगालः , आपृच्छते गुरून् ॥५४॥

## गमेः क्षान्तौ ।३।३।५५॥

कालहरणार्थाद् गमयतेराङ्पूर्वात् कर्त्तर्यात्मनेपदं स्यात् । आगमयते गुरुम् , कञ्चित् कालं प्रतीक्षते । क्षान्ताविति किम् ? विद्यामागमयति ॥५५॥

## ह्वः स्पर्द्धे ।३।३।५६॥

आङ्पूर्वाद् ह्वयतेः स्पर्द्धे गम्ये कर्त्तर्यात्मनेपदं स्यात् । मल्लो मल्लमाह्वयते ।

स्पर्द्ध इति किम् ? गामाह्वयति ।।५६।।

**सं-नि-वेः ।३।३।५७।।**

एभ्यो ह्वयतेः कर्त्तर्यात्मनेपदं स्यात् । संह्वयते , निह्वयते , विह्वयते ।।५७।।

**उपात् ।३।३।५८।।**

उपाद् ह्वयतेः कर्त्तर्यात्मनेपदं स्यात् । उपह्वयते ।।५८।।

**यमः स्वीकारे ।३।३।५९।।**

उपाद् यमेः स्वीकारार्थात् कर्त्तर्यात्मनेपदं स्यात् । कन्यामुपयच्छते , उपायंस्त महास्त्राणि । च्विनिर्देशः किम् ? शाटकानुपयच्छति ।।५९।।

**देवार्चा-मैत्री-सङ्गम-पथिकर्तृक-मन्त्रकरणे स्थः ।३।३।६०।।**

एतदर्थाद् उपपूर्वात् तिष्ठतेः कर्त्तर्यात्मनेपदं स्यात् । देवार्चा -जिनेन्द्रमुपतिष्ठते । मैत्री -रथिकानुपतिष्ठते । सङ्गम -यमुना गङ्गामुपतिष्ठते । पन्थाः कर्त्ता यस्य तत्र -स्रुघ्नमुपतिष्ठते पन्थाः । मन्त्रः[1] करणं यस्य तत्र ऐन्द्र्या गार्हपत्यमुपतिष्ठते ।।६९।।

**वा लिप्सायाम् ।३।३।६१।।**

उपात् स्थो लिप्सायां गम्यायां कर्त्तर्यात्मनेपदं वा स्यात् । भिक्षुर्दातृकुलमुपतिष्ठते , उपतिष्ठति वा ।।६१।।

**उदोऽनूर्ध्वेहे ।३।३।६२।।**

अनूर्ध्वा या चेष्टा तदर्थाद् उत्पूर्वात् स्थः कर्त्तर्यात्मनेपदं स्यात् । मुक्तावुत्तिष्ठते । अनूर्ध्वेति किम् ? आसनादुत्तिष्ठति । ईहेति किम् ? ग्रामाच्छतमुत्तिष्ठति ।।६२।।

**सं-वि-प्रा-ऽवात् ।३।३।६३।।**

एभ्यः परात् स्थः कर्त्तर्यात्मनेपदं स्यात् । संतिष्ठते , वितिष्ठते , प्रतिष्ठते , अवतिष्ठते ।।६३।।

**ज्ञीप्सा-स्थेये ।३।३।६४।।**

**ज्ञीप्सा** आ[2]त्मप्रकाशनम् , **स्थेयः** सभ्यः , ज्ञीप्सायां स्थेयविषयार्थे च

१. मन्त्रः करणं यस्य अर्थस्य स मन्त्रकरणः तत्र J1 ।। २. आत्मनः प्रका° J. P1मू० ।।

वर्त्तमानात् स्थः कर्त्तर्यात्मनेपदं स्यात् । तिष्ठते कन्या च्छात्रेभ्यः , त्वयि तिष्ठते विवादः ॥६४॥

**प्रतिज्ञायाम् ।३।३।६५॥**

अभ्युपगमार्थात् स्थः कर्त्तर्यात्मनेपदं स्यात् । नित्यं शब्दमातिष्ठते ॥६५॥

**समो गिरः ।३।३।६६॥**

संपूर्वाद् गिरः प्रतिज्ञार्थात् कर्त्तर्यात्मनेपदं स्यात् । स्याद्वादं सङ्गिरते ॥६६॥

**अवात् ।३।३।६७॥**

अवाद् गिरः कर्त्तर्यात्मनेपदं स्यात् । अवगिरते ॥६७॥

**निह्नवे ज्ञः ।३।३।६८॥**

**निह्नवः** अपलापः , तद्वृत्तेर्ज्ञः कर्त्तर्यात्मनेपदं स्यात् । शतमपजानीते ॥६८॥

**सं-प्रतेरस्मृतौ ।३।३।६९॥**

स्मृतेरन्यार्थात् संप्रतिभ्यां पराज्ज्ञः कर्त्तर्यात्मनेपदं स्यात् । शतं संजानीते प्रतिजानीते वा । अस्मृताविति किम् ? मातुः संजानाति ॥६९॥

**अननोः सनः ।३।३।७०॥**

सन्नन्ताज्ज्ञः कर्त्तर्यात्मनेपदं स्यात् , न त्वनोः परात् । धर्मं जिज्ञासते । अननोरिति किम् ? धर्ममनुजिज्ञासति ॥७०॥

**श्रुवोऽनाङ्-प्रतेः ।३।३।७१।**

सन्नन्ताच्छृणोतेः कर्त्तर्यात्मनेपदं स्यात् , न त्वाङ्प्रतिभ्यां परात् । शुश्रूषते गुरून् । अनाङ्प्रतेरिति किम् ? आशुश्रूषति , प्रतिशुश्रूषति ॥७१॥

**स्मृ-दृशः ।३।३।७२॥**

आभ्यां सन्नन्ताभ्यां कर्त्तर्यात्मनेपदं स्यात् । सुस्मूर्षते , दिदृक्षते ॥७२॥

**शको जिज्ञासायाम् ।३।३।७३॥**

शको ज्ञानानुसंहितार्थात् सन्नन्तात् कर्त्तर्यात्मनेपदं स्यात् । विद्याः शिक्षते । जिज्ञासायामिति किम् ? शिक्षति ॥७३॥

**प्राग्वत् ।३।३।७४॥**

सनः पूर्वो यो धातुस्तस्मादिव सन्नन्तात् कर्त्तर्यात्मनेपदं स्यात् । शिशयिषते

, अश्वेन संचिचरिषते ॥७४॥

**आमः कृगः ।३।३।७५॥**

आमः परादनुप्रयुक्तात् कृग आम एव प्राग् यो धातुस्तस्मादिव कर्त्तर्यात्मनेपदं स्यात् , भवति न भवति चेति विधिनिषेधावतिदिश्येते । ईहाञ्चक्रे , बिभयाञ्चकार । कृग इति किम् ? ईक्षामास ॥७५॥

**गन्धना-ऽवक्षेप-सेवा-साहस-प्रतियत्न-प्रकथनोपयोगे ।३।३।७६॥**

एतदर्थात् कृगः कर्त्तर्यात्मनेपदं स्यात् । **गन्धनं** द्रोहेण परदोषोद्घाटनम् , उत्कुरुते । **अवक्षेपः** कुत्सनम् , दुर्वृत्तानवकुरुते । **सेवा** अनुवृत्तिः[1]-महामात्रानुपकुरुते । **साहसम्** अविमृश्य प्रवृत्तिः , परदारान् प्रकुरुते । **प्रतियत्नः** गुणान्तराऽऽधानम् , एधोदकस्योपस्कुरुते । **प्रकथनम्** -जनवादान् प्रकुरुते । **उपयोगः** धर्मादौ विनियोगः , शतं प्रकुरुते ॥७६॥

**अधेः प्रसहने ।३।३।७७॥**

अधेः परात् कृगः प्रसहनार्थात् कर्त्तर्यात्मनेपदं स्यात् । **प्रसहनं** पराभिभवः परेणापराजयो वा , तं हाऽधिचक्रे । प्रसहन इति किम् ? तमधिकरोति ॥७७॥

**दीप्ति-ज्ञान-यत्न-विमत्युपसंभाषोपमन्त्रणे वदः ।३।३।७८॥**

एष्वर्थेषु गम्येषु वदेः कर्त्तर्यात्मनेपदं स्यात् । **दीप्तिः** भासनम् , वदते विद्वान् स्याद्वादे । ज्ञान -वदते धीमांस्तत्त्वार्थे । यत्न -तपसि वदते । नानामतिर्**विमतिः** , धर्म्मे विवदन्ते । **उपसंभाष** उपसान्त्वनम् , कर्म्मकरानुपवदते । **उपमन्त्रणं** रहस्युपच्छन्दनम् , कुलभार्यामुपवदते ॥७८॥

**व्यक्तवाचां सहोक्तौ ।३।३।७९॥**

व्यक्तवाचो रूढ्या मनुष्यादयस्तेषां संभूयोच्चारणार्थाद् वदेः[2] कर्त्तर्यात्मनेपदं स्यात् । संप्रवदन्ते ग्राम्याः । व्यक्तवाचामिति किम् ? संप्रवदन्ति शुकाः । सहोक्ताविति किम् ? चैत्रेणोक्ते मैत्रो वदति ॥७९॥

**विवादे वा ।३।३।८०॥**

विरुद्धार्थो वादो विवादः , व्यक्तवाचां विवादरूपसहोक्त्यर्थाद् वदः कर्त्तर्यात्मने-

---

१. अनुवृत्तिः P2 मध्य एव वर्तते बृहद्वृत्तौ च ॥ २. वदः पा२ P3 विना ॥

पदं वा स्यात् । विप्रवदन्ते विप्रवदन्ति वा मौहूर्त्ताः । विवाद इति किम् ? संप्रवदन्ते वैयाकरणाः । सहोक्ताविल्येव-मौहूर्त्तो मौहूर्त्तेन क्रमाद् विप्रवदति ॥८०॥

**अनोः कर्मण्यसति ।३।३।८१॥**

व्यक्तवाचामर्थे वर्त्तमानादनुपूर्वाद् वदः कर्मण्यसति कर्त्तर्यात्मनेपदं स्यात् । अनुवदते चैत्रो मैत्रस्य । कर्मण्यसतीति किम् ? उक्तमनुवदति । व्यक्तवाचामित्येव-अनुवदति वीणा ॥८१॥

**ज्ञः ।३।३।८२॥**

जानातेः कर्मण्यसति कर्त्तर्यात्मनेप्दं स्यात् । सर्पिषो जानीते । कर्मण्यसतीत्येव- तैलं सर्पिषो जानाति ॥८२॥

**उपात् स्थः ।३।३।८३॥**

अतः कर्मण्यसति कर्त्तर्यात्मनेपदं स्यात् । योगे योगे उपतिष्ठते । कर्मण्यसतीत्येव—राजानमुपतिष्ठति ॥८३॥

**समो गमृच्छि-प्रच्छि-श्रु-वित्-स्वरत्यर्त्ति-दृशः ।३।३।८४॥**

संपूर्वेभ्य एभ्यः कर्मण्यसति कर्त्तर्यात्मनेपदं स्यात् । सङ्गच्छते , समृच्छिष्यते , संपृच्छते , संशृणुते , संवित्ते , संस्वरते , समृच्छते , समियृते , संपश्यते । कर्मण्यसतीत्येव-सङ्गच्छति मैत्रम् ॥८४॥

**वेः कृगः शब्दे चाऽनाशे ।३।३।८५॥**

अनाशार्थाद् विपूर्वात् कृगः कर्मण्यसति , शब्दे च कर्मणि कर्त्तर्यात्मनेपदं स्यात् । विकुर्वते सैन्धवाः , क्रोष्टा विकुरुते स्वरान् । शब्दे चेति किम् ? विकरोति मृदम् ।अनाश इति किम् ? विकरोत्यध्यायम् ॥८५॥

**आङो यम-हनः , स्वेऽङ्गे च ।३।३।८६॥**

आङः पराभ्यां यम्-हन्भ्यां कर्मण्यसति , कर्त्तुः स्वेऽङ्गे च कर्मणि कर्त्तर्यात्मनेपदं स्यात् । आयच्छते , आहते । आयच्छते , आहते वा पादम् । स्वेऽङ्गे चेति किम् ? आयच्छति रज्जुम् ॥८६॥

**व्युदस्तपः ।३।३।८७॥**

आभ्यां परात् तपेः कर्मण्यसति , स्वेऽङ्गे च कर्मणि कर्त्तर्यात्मनेपदं स्यात्

। वितपते उत्तपते रविः , वितपते उत्तपते पाणिम् ॥८७॥

**अणिक्कर्मणिक्कर्तृकाण्णिगोऽस्मृतौ ।३।३।८८॥**

अणिगवस्थायां यत्कर्म तदेव णिगवस्थायां कर्त्ता यस्य तस्माद् णिगन्तादस्मृत्यर्थात् कर्त्तर्यात्मनेपदं स्यात् । आरोहयते हस्ती हस्तिपकान् । अणिगिति किम् ? आरोहयति हस्तिपकान् महामात्रः , आरोहयन्ति महामात्रेण हस्तिपकाः । गित् किम् ? गणयते गणो गोपालकम् । कर्मेति किम् ? दर्शयति प्रदीपो भृत्यान् । णिगिति किम् ? लुनाति केदारं चैत्रः , लूयते केदारः स्वयमेव , तं प्रयुङ्क्ते=लावयति केदारं चैत्रः । कर्त्तेति किम् ? आरोहन्ति हस्तिनं हस्तिपकाः , तानेनमारोहयति महामात्रः । णिग इति किम् ? आरोहन्ति हस्तिनं हस्तिपकाः , तानारोहयते हस्तीत्यणिगि मा भूत् । अस्मृताविति किम् ? स्मरयति वनगुल्मः कोकिलम् ॥८८॥

**प्रलम्भे गृधि-वञ्चेः ।३।३।८९॥**

आभ्यां णिगन्ताभ्यां वञ्चनार्थाभ्यां कर्त्तर्यात्मनेपदं स्यात् । बटुं गर्द्धयते वञ्चयते वा । प्रलम्भ इति किम् ? श्वानं गर्द्धयति ॥८९॥

**लीङ्-लिनोऽर्चा-ऽभिभवे चाऽऽच्चाकर्त्तर्यपि ।३।३।९०॥**

आभ्यां णिगन्ताभ्यामर्चा-ऽभिमव-प्रलम्भार्थाभ्यां कर्त्तर्यात्मनेपदं स्याद् , आच्चानयोरकर्त्तर्यपि । अर्चा -जटाभिरालापयते । अभिभव -श्येनो वर्त्तिकामपलापयते । प्रलम्भ -कस्त्वामुल्लापयते ? । अकर्त्तर्यपीति किम् ? जटाभिरालाप्यते जटिलेन ॥९०॥

**स्मिङः प्रयोक्तुः स्वार्थे ।३।३।९१॥**

प्रयोक्तृतो यः स्वार्थः स्मयस्तदर्थात् णिगन्तात् स्मिङः कर्त्तर्यात्मनेपदं स्यात् , आच्चास्याऽकर्तर्यपि । जटिलो विस्मापयते । प्रयोक्तुः स्वार्थ इति किम् ? रूपेण विस्माययति । अकर्त्तर्यपीत्येव-विस्मापनम् ॥९१॥

**बिभेतेर्भीष् च ।३।३।९२॥**

प्रयोक्तृतः स्वार्थवृत्तेर्ण्यन्ताद् भियः कर्त्तर्यात्मनेपदं स्यात् , अस्य च भीष् , पक्षे आच्चाऽकर्त्तर्यपि । मुण्डो भीषयते , भापयते वा । प्रयोक्तुः स्वार्थ इत्येव-कुञ्चिकया भाययति । अकर्त्तर्यपीत्येव-भीषा , भापनम् ॥९२॥

## मिथ्याकृगोऽभ्यासे ।३।३।९३।।

मिथ्यायुक्तात् कृगो ण्यन्तात् क्रियाभ्यासवृत्त्यर्थात् कर्त्तर्यात्मनेपदं स्यात् । पदं मिथ्या कारयते । मिथ्येति किम् ? पदं साधु कारयति । अभ्यास इति किम् ? सकृत् पदं मिथ्या कारयति ।।९३।।

## परिमुहा-ऽऽयमा-ऽऽयस-पा-ट्धे-वद-वस-दमा-ऽद-रुच-नृतः फलवति ।३।३।९४।।

प्रधानफलवति कर्त्तरि विवक्षिते एभ्यो णिगन्तेभ्यः आत्मनेपदं स्यात् । परिमोहयते चैत्रम् , आयामयते सर्पम् , आयासयते मैत्रम् , पाययते बटुम् , धापयते शिशुम् , वादयते बटुम् , वासयते पान्थम् , दमयते अश्वम् , आदयते चैत्रेण , रोचयते मैत्रम् , नर्त्तयते नटम् ।।९४।।

## ई-गितः ।३।३।९५।।

ईदितो गितश्च धातोः फलवति कर्त्तर्यात्मनेपदं स्यात् । यजते , कुरुते । फलवतीत्येव-यजन्ति , कुर्वन्ति ।।९५।।

## ज्ञोऽनुपसर्गात् ।३।३।९६।।

अतः फलवति कर्त्तर्यात्मनेपदं स्यात् । गां जानीते । फलवतीत्येव—परस्य गां जानाति ।।९६।।

## वदोऽपात् ।३।३।९७।।

अतः फलवति[१] कर्तर्यात्मनेपदं स्यात् । एकान्तमपवदते । फलवतीत्येव-अपवदति परं स्वतः ।।९७।।

## समुदाङो यमेरग्रन्थे ।३।३।९८।।

एभ्यः पराद् यमेरग्रन्थविषये फलवत्कर्त्तर्यात्मनेपदं स्यात् । संयच्छते , उद्यच्छते , आयच्छते । अग्रन्थ इति किम् ? चिकित्सामुद्यच्छति । फलवतीत्येव-संयच्छति ।।९८।।

## पदान्तरगम्ये वा ।३।३।९९।।

प्रकान्तसूत्रपञ्चके यदात्मनेपदमुक्तं तत् पदान्तरगम्ये फलवत्कर्त्तरि वा स्यात् । स्वं शत्रुं परिमोहयते परिमोहयति वा । स्वं यज्ञं यजते यजति वा । स्वां

१. फलवत्कर्त° J2, P3, पा३,४ ।।

गां जानीते जानाति वा । स्वं शत्रुमपवदते अपवदति वा । स्वान् व्रीहीन् संयच्छते संयच्छति वा ॥९९॥

**शेषात् परस्मै ।३।३।१००॥**

येभ्यो धातुभ्यो येन विशेषेणाऽऽत्मनेपदमुक्तं ततोऽन्यस्मात् कर्त्तरि परस्मैपदं स्यात् । भवति , अत्ति ॥१००॥

**परानोः कृगः ।३।३।१०१॥**

परानुपूर्वात् कृगः कर्त्तरि परस्मैपदं स्यात् । पराकरोति , अनुकरोति ॥१०१॥

**प्रत्यभ्यतेः क्षिपः ।३।३।१०२॥**

एभ्यः परात् क्षिपः कर्त्तरि परस्मैपदं स्यात् । प्रतिक्षिपति , अभिक्षिपति , अतिक्षिपति ॥१०२॥

**प्राद् वहः ।३।३।१०३॥**

अतः कर्त्तरि परस्मैपदं स्यात् । प्रवहति ॥१०३॥

**परेर्मृषश्च ।३।३।१०४॥**

परेः परान्मृषेर्वहेश्च कर्त्तरि परस्मैपदं स्यात् । परिमृष्यति , परिवहति ॥१०४॥

**व्याङ्-परे रमः ।३।३।१०५॥**

एभ्यः पराद् रमेः कर्त्तरि परस्मैपदं स्यात् । विरमति , आरमति , परिरमति ॥१०५॥

**वोपात् ।३।३।१०६॥**

उपाद् रमेः कर्त्तरि परस्मैपदं वा स्यात् । भार्यामुपरमति , उपरमते वा ॥१०६॥

**अणिगि प्राणिकर्तृकानाप्याण्णिगः ।३।३।१०७॥**

अणिगवस्थायां यः प्राणिकर्तृकोऽकर्मकश्च धातुस्तस्मात् णिगन्तात् कर्त्तरि परस्मैपदं स्यात् । आसयति चैत्रम् । अणिगीति किम् ? स्वयमेवारोहयमाणं गजं प्रयुङ्क्ते=आरोहयते । अणिगिति[1] गित् किम् ? चेतयमानं प्रयुङ्क्ते=चेतयति । प्राणिकर्तृकादिति किम् ? शोषयते व्रीहीन् आतपः । अनाप्यादिति किम् ? कटं कारयते ।१०७॥

१. अणिगिति किम् P1, P3, पा३,४ विना ॥

**चल्याहारार्थेङ्-बुध-युध-प्रु-द्रु-स्रु-नश-जनः ।३।३।१०८।।**

चल्यर्था-ऽऽहारार्थेभ्य इङादिभ्यश्च णिगन्तेभ्यः कर्त्तरि परस्मैपदं स्यात् । चलयति , कम्पयति ; भोजयति , आशयति चैत्रमन्नम् ; सूत्रमध्यापयति शिष्यम् , बोधयति पद्मं रविः , योधयति काष्ठानि , प्रावयति राज्यम् , द्रावयत्ययः , स्रावयति तैलम् , नाशयति पापम् , जनयति पुण्यम् ।।१०८।।

[इत्याचार्यश्री**हेमचन्द्र**विरचितायां
**सिद्धहेमचन्द्रा**भिधानस्वोपज्ञशब्दानुशासनलघुवृत्तौ]
तृतीयस्याध्यायस्य तृतीयः पादः समाप्तः[१] ।।३।३।।

श्रीदुर्लभेशद्युमणेः पादास्तुष्टुविरे न कैः ? ।
लुलद्भिर्मौदिनीपालैर्वालिखिल्यैरिवाग्रतः ।।११।।

१. समाप्तः पा१ P1 J3 विना नास्ति ।।

# चतुर्थः पादः

**गुपौ-धूप-विच्छि-पणि-पनेरायः ।३।४।१॥**

एभ्यो धातुभ्यः स्वार्थे आयः[1] स्यात् । गोपायति , धूपायति , विच्छायति , पणायति , पनायति ॥१॥

**कमेर्णिङ् ।३।४।२॥**

कमेः स्वार्थे णिङ् स्यात् । कामयते ॥२॥

**ऋतेर्डीयः ।३।४।३॥**

ऋतेः स्वार्थे डीयः स्यात् । ऋतीयते ॥३॥

**अशवि ते वा ।३।४।४॥**

गुपादिभ्योऽशव्विषये ते आयादयो वा स्युः । गोपायिता , गोप्ता ; कामयिता , कमिता ; ऋतीयिता , अर्त्तिता ॥४॥

**गुप्-तिजो गर्हा-क्षान्तौ सन् ।३।४।५॥**

गुपो गर्हायां तिजः क्षान्तौ वर्त्तमानात् स्वार्थे सन् स्यात् । जुगुप्सते , तितिक्षते । गर्हा-क्षान्ताविति किम् ? गोपनम् , तेजनम् ॥५॥

**कितः संशय-प्रतीकारे ।३।४।६॥**

कितः संशय-प्रतीकारार्थात् स्वार्थे सन् स्यात् । विचिकित्सति मे[2] मनः , व्याधिं चिकित्सति । संशयप्रतीकारे इति किम् ? केतयति ॥६॥

**शान्-दान्-मान्-बधान्निशाना-ऽऽर्जव-विचार-वैरूप्ये दीर्घश्चेतः ।३।४।७॥**

एभ्यो यथासङ्ख्यं निशानाद्यर्थेभ्यः स्वार्थे सन् स्यात् , दीर्घश्चैषां द्वित्वे पूर्वस्येतः । शीशांसति , दीदांसति , मीमांसते , बीभत्सते । अर्थोक्तिः किम् ? अर्थान्तरे मा भूत्-निशानम् , अवदानम् , मानयति , बाधयति ॥७॥

**धातोः कण्ड्वादेर्यक् ।३।४।८॥**

एभ्यो धातुभ्यः स्वार्थे यक् स्यात् । कण्डूयति , कण्डूयते , महीयते । धातोरिति

---

१. **आयः प्रत्ययो भवति** P2 ॥ २. **मे मनः** P2, पामू३, P3सं० विना नास्ति । **विचिकित्सति मे मनः । संशय°** पामू३ । **विचिकित्सति व्याधिं चिकित्सति । संशय°** पासं३ ॥

किम् ? कण्डूः ॥८॥

**व्यञ्जनादेरेकस्वराद् भृशाऽऽभीक्ष्ण्ये यङ् वा ।३।४।९॥**

गुणक्रियाणामधिश्रयणादीनां क्रियान्तराव्यवधानेन साकल्येन संपत्तिः फलातिरेको वा भृशत्वम् , प्रधानक्रियाया विच्छेदादेः क्रियान्तराव्यवधानेनाऽऽवृत्तिराभीक्ष्ण्यम् , तद्विशिष्टार्थवृत्तेर्धातोर्व्यञ्जनादेरेकस्वराद् यङ् वा स्यात् । पापच्यते । व्यञ्जनादेरिति किम् ? भृशमीक्षते । एकस्वरादिति किम् ? भृशं चकास्ति । वेति किम् ? लुनीहि लुनीहीत्येवायं लुनातीत्यादि ॥९॥

**अटयर्त्ति-सूत्रि-मूत्रि-सूच्यशूर्णोः ।३।४।१०॥**

एभ्यो भृशाऽऽभीक्ष्ण्यार्थवृत्तिभ्यो यङ् स्यात् । अटाटयते , अरार्यते , सोसूत्र्यते , मोमूत्र्यते , सोसूच्यते , अशाश्यते , प्रोर्णोनूयते ॥१०॥

**गत्यर्थात् कुटिले ।३।४।११॥**

व्यञ्जनादेरेकस्वराद् गत्यर्थात् कुटिले एवार्थे वर्त्तमानाद् धातोर्यङ् स्यात् । चङ्क्रम्यते । कुटिल इति किम् ? भृशं क्रामति ॥११॥

**गॄ-लुप-सद-चर-जप-जभ-दश-दहो गर्ह्ये ।३।४।१२॥**

गर्ह्यार्थेभ्य एव एभ्यो यङ् स्यात् । निजेगिल्यते , लोलुप्यते , सासद्यते , चञ्चूर्यते , जञ्जप्यते , जञ्जभ्यते दन्दश्यते , दन्दह्यते । गर्ह्य इति किम् ? साधु जपति , भृशं निगिरति ॥१२॥

**न गृणा-शुभ-रुचः ।३।४।१३॥**

एभ्यो यङ् न स्यात् । निन्द्यं गृणाति , भृशं शोभते , भृशं रोचते ॥१३॥

**बहुलं लुप् ।३।४।१४॥**

यङो लुप् बहुलं स्यात् । बोभूयते , बोभवीति । बहुलवचनात् क्वचिन्न भवति-लोलूया , पोपूया ॥१४॥

**अचि ।३।४।१५॥**

यङोऽचि परे लुप् स्यात् । चेच्यः ॥१५॥

**नोतः ।३।४।१६॥**

उदन्ताद् विहितस्य यङोऽचि लुब् न स्यात् । रोरूयः ॥१६॥

**चुरादिभ्यो णिच् ।३।४।१७॥**

एभ्यो धातुभ्यः स्वार्थे णिच् स्यात् । चोरयति । पदयते ॥१७॥

**युजादेर्नवा ।३।४।१८॥**

एभ्यः स्वार्थे णिच् वा स्यात् । योजयति , योजति । साहयति , सहति ॥१८॥

**भूङः प्राप्तौ णिङ् ।३।४।१९॥**

भुवः प्राप्त्यर्थाण्णिङ् वा स्यात् । भावयते , भवते । प्राप्ताविति किम् ? भवति ॥१९॥

**प्रयोक्तृव्यापारे णिग् ।३।४।२०॥**

कुर्वन्तं यः प्रयुङ्क्ते तद्व्यापारे वाच्ये धातोर्णिग् वा स्यात् । कारयति , भिक्षा वासयति , राजानमागमयति , कंसं घातयति , पुष्येण चन्द्रं योजयति , उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्यमुद्गमयति ॥२०॥

**तुमर्हादिच्छायां सन्नतत्सनः ।३।४।२१॥**

यो धातुरिषेः कर्म इषिणैव च समानकर्तृकः स तुमर्हः , तस्मादिच्छायामर्थे सन् वा स्यात् , न त्विच्छासन्नन्तात् । चिकीर्षति । तुमर्हादिति किम् ? यानेनेच्छति , भुक्तिमिच्छति मैत्रस्य । इच्छायामिति किम् ? भोक्तुं याति । अतत्सन इति किम् ? चिकीर्षितुमिच्छति । तदिति किम् ? जुगुप्सिषते ॥२१॥

**द्वितीयायाः काम्यः ।३।४।२२॥**

द्वितीयान्तादिच्छायां काम्यो वा स्यात् । इदंकाम्यति । द्वितीयाया इति किम् ? इष्टः पुत्रः ॥२२॥

**अमाव्ययात् क्यन् च ।३।४।२३॥**

मान्ता-ऽव्ययाभ्यामन्यस्माद् द्वितीयान्तादिच्छायां क्यन् काम्यश्च वा स्यात् । पुत्रीयति , पुत्रकाम्यति । अमाव्ययादिति किम् ? इदमिच्छति , स्वरिच्छति ॥२३॥

**आधाराच्चोपमानादाचारे ।३।४।२४॥**

अमाव्ययादुपमानाद् द्वितीयान्तादाधाराच्चाऽऽचारार्थे क्यन् वा स्यात् । पुत्रीयति च्छात्रम् , प्रासादीयति कुट्याम् ॥२४॥

**कर्तुः क्विप् , गल्भ-क्लीब-होडात्तु ङित् ।३।४।२५॥**

कर्तुरुपमानान्नाम्न आचारेऽर्थे क्विप् वा स्यात् , गल्भ-क्लीब-होडेभ्यस्तु स एव ङित् । अश्वति , गल्भते , क्लीबते , होडते ॥२५॥

**क्यङ् ।३।४।२६॥**

कर्तुरुपमानादाचारेऽर्थे क्यङ् वा स्यात् । हंसायते ॥२६॥

**सो वा लुक् च ।३।४।२७॥**

सन्तात् कर्तुरुपमानादाचारेऽर्थे क्यङ् वा स्यादन्तस्य च सो वा लुक् । पयायते , पयस्यते ॥२७॥

**ओजोऽप्सरसः ।३।४।२८॥**

आभ्यां कर्तुरुपमानाभ्यामाचारे क्यङ् वा स्यात् , सश्च लुक् । ओजायते , अप्सरायते ॥२८॥

**च्व्यर्थे भृशादेः स्तोः ।३।४।२९॥**

भृशादेः कर्तुश्च्व्यर्थे क्यङ् वा स्यात् , यथासम्भवं स्तोर्लुक् च । भृशायते , उन्मनायते[1] , वेहायते । कर्तुरित्येव-अभृशम्भृशं करोति । च्व्यर्थ इति किम् ? भृशो भवति ॥२९॥

**डाच्-लोहितादिभ्यः षित् ।३।४।३०॥**

डाजन्तेभ्यो लोहितादिभ्यश्च कर्तृभ्यश्च्व्यर्थे क्यङ् षित् स्यात् । पटपटायति , पटपटायते ; लोहितायति , लोहितायते । कर्तुरित्येव-अपटपटा पटपटा करोति । च्व्यर्थ इत्येव-लोहितो भवति ॥३०॥

**कष्ट-कक्ष-कृच्छ्र-सत्र-गहनाय पापे क्रमणे ।३।४।३१॥**

एभ्यश्चतुर्थ्यन्तेभ्यः पापवृत्तिभ्यः क्रमणेऽर्थे क्यङ् स्यात् । कष्टायते , कक्षायते , कृच्छ्रायते , सत्रायते , गहनायते । चतुर्थीति किम् ? रिपुः कष्टं क्रामति । पाप इति किम् ? कष्टाय तपसे क्रामति ॥३१॥

**रोमन्थाद् व्याप्यादुच्चर्वणे ।३।४।३२॥**

अभ्यवहृतं द्रव्यं **रोमन्थः** , उद्गीर्य चर्वणम् **उच्चर्वणम्** , अस्मिन्नर्थे रोमन्थात् कर्मणः क्यङ् वा स्यात् । रोमन्थायते गौः । उच्चर्वण इति किम् ? कीटो रोमन्थं वर्त्तयति ॥३२॥

---

१. उन्मनायते P2, P1 सं, पा४,५ J3 विना नास्ति ॥

**फेनोष्म-बाष्प-धूमादुद्वमने ।३।४।३३।।**

एभ्यः कर्मभ्य उद्वमनेऽर्थे क्यङ् वा स्यात् । फेनायते , ऊष्मायते , बाष्पायते , धूमायते ।।३३।।

**सुखादेरनुभवे ।३।४।३४।।**

साक्षात्कारेऽर्थे सुखादेः कर्मणः क्यङ् वा स्यात् । सुखायते , दुःखायते ।।३४।।

**शब्दादेः कृतौ वा ।३।४।३५।।**

एभ्यः कर्मभ्यः कृतावर्थे क्यङ् वा स्यात् । शब्दायते , वैरायते । पक्षे णिच्- शब्दयति , वैरयति ।।३५।।

**तपसः क्यन् ।३।४।३६।।**

अस्मात् कर्मणः कृतावर्थे क्यन् वा स्यात् । तपस्यति ।।३६।।

**नमो-वरिवश्चित्रङोऽर्चा-सेवा-ऽऽश्चर्ये ।३।४।३७।।**

एभ्यः कर्मभ्यो यथासंख्यमर्चादिष्वर्थेषु क्यन् वा स्यात् । नमस्यति , वरिवस्यति , चित्रीयते ।।३७।।

**अङ्गान्निरसने णिङ् ।३।४।३८।।**

अङ्गवाचिनः कर्मणो निरसनेऽर्थे णिङ् वा स्यात् । हस्तयते , पा[१]दयते ।।३८।।

**पुच्छादुत्-परि-व्यसने ।३।४।३९।।**

पुच्छात् कर्मण उदसने पर्यसने व्य[२]सनेऽसने चार्थे णिङ् वा स्यात् । उत्पुच्छयते , परिपुच्छयते , विपुच्छयते , पुच्छयते ।।३९।।

**भाण्डात् समाचितौ ।३।४।४०।।**

भाण्डात् कर्मणः समाचितावर्थे णिङ् वा स्यात । सम्भाण्डयते , परिभाण्डयते ।।४०।।

**चीवरात् परिधा-ऽर्जने ।३।४।४१।।**

अस्मात् कर्मणः परिधानेऽर्जने चार्थे णिङ् वा स्यात् । परिचीवरयते , चीवरयते ।।४१।।

१. **पादयते** P2 J3 पा३,५ विना नास्ति ।। २. **व्यसने** P3मू, पा२, J2 मध्ये नास्ति ।।

## णिज्बहुलं नाम्नः कृगादिषु ।३।४।४२।।

कृगादीनां धातूनामर्थे नाम्नो णिच् बहुलं स्यात् । मुण्डं करोति मुण्डयति च्छात्रम् , पटुमाचष्टे पटयति , वृक्षं रोपयति वृक्षयति , कृतं गृह्णाति कृतयति ।।४२।।

## व्रताद् भुजि-तन्निवृत्त्योः ।३।४।४३।।

**व्रतं** शास्त्रितो नियमः , व्रताद् भुज्यर्थात् तन्निवृत्त्यर्थाच्च कृगादिष्वर्थेषु णिज्बहुलम् स्यात् । पयो व्रतयति , सावद्याऽन्नं व्रतयति ।।४३।।

## सत्या-ऽर्थ-वेदस्याः ।३।४।४४।।

एषां णिच्सन्नियोगे आः स्यात् । सत्यापयति , अर्थापयति , वेदापयति ।।४४।।

## श्वेताश्वा-ऽश्वतर-गालोडिता-ऽऽह्वरकस्याऽश्व-तरेत-कलुक् ।३।४।४५।।

एषां णिज्योगे यथासंख्यमश्वादेः शब्दस्य लुक् स्यात् । श्वेतयति , अश्वयति , गालोडयति , आह्वरयति ।।४५।।

## धातोरनेकस्वरादाम् परोक्षायाः कृभ्वस्ति चानु तदन्तम् ।३।४।४६।।

अनेकस्वराद्धातोः परस्याः परोक्षायाः स्थाने आम् स्यात् , आमन्ताच्च परे कृभ्वस्तयः परोक्षान्ता **अनु** पश्चादनन्तरं प्रयुज्यन्ते । चकासाञ्चकार , चकासाम्बभूव , चकासामास । अनेकस्वरादिति किम् ? पपाच । अनुर्विपर्यास-व्यवहितनिवृत्त्यर्थः , तेन चकारचकासाम् , ईहांचैत्रश्चक्रे इत्यादि न स्यात् ।

## दया-ऽया-ऽऽस्-कासः ।३।४।४७।।

एभ्यो धातुभ्यः परस्याः परोक्षाया आम् स्यात् , आमन्ताच्च परे कृभ्वस्तयः परोक्षान्ता अनु प्रयुज्यन्ते । दयाञ्चक्रे , दयाम्बभूव , दयामास ; पलायाञ्चक्रे , आसाञ्चक्रे , कासाञ्चक्रे ।।४७।।

## गुरुनाम्यादेरनृच्छूर्णोः ।३।४।४८।।

गुरुर्नाम्यादिर्यस्य तस्माद्धातोः , ऋच्छूर्णुवर्जात् परस्याः परोक्षाया आम् स्यात् , आमन्ताच्च परे कृभ्वस्तयः परोक्षान्ता अनु प्रयुज्यन्ते । ईहाञ्चक्रे , ईहाम्बभूव , ईहामास । गुर्विति किम् ? इयेष । नामीति किम् ? आनर्च । आदीति किम्

? निनाय । अनृच्छूर्ण्णोरिति किम् ? आनर्च्छ , प्रोर्ण्णुनाव ॥४८॥

**जागृष-समिन्धेर्नवा ।३।४।४९॥**

एभ्यो धातुभ्यः परस्याः परोक्षाया आम् वा स्यात् , आमन्ताच्च परे कृभ्वस्तयः परोक्षान्ता अनु प्रयुज्यन्ते । जागराञ्चकार , जागराम्बभूव , जागरामास , जजागार ; ओषाञ्चकार , उवोष ; समिन्धाञ्चक्रे[1] , समीधे ॥४९॥

**भी-ह्री-भृ-होस्तिव्वत् ।३।४।५०॥**

एभ्यः परस्याः परोक्षाया आम् वा स्यात् , स च तिव्वत् , आमन्ताच्च परे कृभ्वस्तयः परोक्षान्ता अनु प्रयुज्यन्ते । बिभयाञ्चकार , बिभयाम्बभूव , बिभयामास , बिभाय ; जिह्रयाञ्चकार , जिह्राय ; बिभराञ्चकार , बभार ; जुहवाञ्चकार , जुहाव ॥५०॥

**वेत्तेः कित् ।३।४।५१॥**

वेत्तेः परस्याः परोक्षाया आम् किद् वा स्याद् , आमन्ताच्च कृभ्वस्तयः परोक्षान्ता अनु प्रयुज्यन्ते । विदाञ्चकार , विवेद ॥५१॥

**पञ्चम्याः कृग् ।३।४।५२॥**

वेत्तेः परस्याः पञ्चम्याः किदाम् वा स्यात् , आमन्ताच्च परः पञ्चम्यन्तः कृगनु प्रयुज्यते । विदाङ्करोतु , वेत्तु ॥५२।

**सिजद्यतन्याम् ।३।४।५३॥**

अद्यतन्यां परस्यां धातोः परः सिच् स्यान्नित्यम् । अनैषीत् ॥५३॥

**स्पृश-मृश-कृष-तृप-दृपो वा ।३।४।५४॥**

एभ्योऽद्यतन्यां सिज् वा स्यात् । अस्प्राक्षीत् , अस्पृक्षत् ; अम्राक्षीत् , अमृक्षत् ; अक्राक्षीत् , अकृक्षत् ; अत्राप्सीत् , अतृपत् ; अद्राप्सीत् , अदृपत् ॥५४॥

**ह-शिटो नाम्युपान्त्याददृशोऽनिटः सक् ।३।४।५५॥**

हशिडन्तान्नाम्युपान्त्याददृशोऽनिटोऽद्यतन्यां सक् स्यात् । अधुक्षत् , अविक्षत् । ह-शिट इति किम् ? अभैत्सीत् । नाम्युपान्त्यादिति किम् ? अधाक्षीत् । अदृश इति किम् ? अद्राक्षीत् । अनिट इति किम् ? अकोषीत् ॥५५॥

---

१. समिधांचक्रे पा२ J3 ॥

**श्लिषः ।३।४।५६।।**

श्लिषोऽनिटोऽद्यतन्यां सक् स्यात् । आश्लिक्षत् कन्यां मैत्रः । अनिट इत्येव-अश्लेषीत् ।।५६।।

**नाऽसत्त्वाऽऽश्लेषे ।३।४।५७।।**

श्लिषोऽप्राण्याश्लेषार्थात् सक् न स्यात् । उपाश्लिषत् जतु च काष्ठं च । असत्त्वाऽऽश्लेष इति किम् ? व्यत्यश्लिक्षन्त मिथुनानि ।।५७।।

**णि-श्रि-द्रु-स्रु-कमः कर्त्तरि ङः ।३।४।५८।।**

ण्यन्तात् श्र्यादेश्च कर्त्तर्यद्यतन्यां ङः स्यात् । अचीकरत् , अशिश्रियत् , अदुद्रुवत् , असुस्रुवत् , अचकमत । कर्त्तरीति किम् ? अकारयिषातां कटौ मैत्रेण ।।५८।।

**ट्धे-श्वेर्वा ।३।४।५९।।**

आभ्यां कर्त्तर्यद्यतन्यां ङो वा स्यात् । अदधत् , अधात् ; अशिश्वियत् , अश्वत् । कर्त्तरीत्येव-अधिषातां गावौ वत्सेन ।।५९।।

**शास्त्यसू-वक्ति-ख्यातेरङ् ।३।४।६०।।**

एभ्यः कर्त्तर्यद्यतन्यां अङ् स्यात् । अशिषत् , अपास्थत , अवोचत् , आख्यत् । कर्त्तरीत्येव-अशासिषातां शिष्यौ गुरुणा[1] ।।६०।।

**सर्त्यर्तेर्वा ।३।४।६१।।**

आभ्यां कर्त्तर्यद्यतन्याम् अङ् वा स्यात् । असरत् , असार्षीत् ; आरत् , आर्षीत् ।।६१।।

**ह्वा-लिप्-सिचः ।३।४।६२।।**

एभ्यः कर्त्तर्यद्यतन्याम् अङ् स्यात् । आह्वत् , अलिपत् , असिचत् ।।६२।।

**वाऽऽत्मने ।३।४।६३।।**

ह्वादेः कर्त्तर्यद्यतन्यामात्मनेपदे वाऽङ् स्यात् । आह्वत , आह्वास्त ; अलिपत , अलिप्त ; असिचत , असिक्त ।।६३।।

**लृदिद्-द्युतादि-पुष्यादेः परस्मै ।३।४।६४।।**

१. गुरुणा P2 J3 विना नास्ति ।।

ऌदितो द्युतादेः पुष्यादेश्च कर्त्तर्यद्यतन्यां परस्मैपदेऽङ् स्यात् । अगमत् ; अद्युतत् , अरुचत् ; अपुषत् , औचत् । परस्मैपद इति किम् ? समगंस्त ॥६४॥

**ॠदिच्छ्वि-स्तम्भू-म्रुचू-म्लुचू-ग्रुचू-ग्लुचू-ग्लुञ्चू-ज्रो वा ।३।४।६५॥**

ॠदितः श्व्यादेश्च कर्त्तर्यद्यतन्यां परस्मैपदेऽङ् वा स्यात् । अरुधत् , अरौत्सीत् ; अश्वत् , अश्वयीत् ; अस्तभत् , अस्तम्भीत् ; अम्रुचत् , अम्रोचीत् , अम्लुचत् , अम्लोचीत् ; अग्रुचत् , अग्रोचीत् ; अग्लुचत् , अग्लोचीत् ; अग्लुचत् , अग्लुञ्चीत् ; अजरत् , अजारीत् ॥६५॥

**ञिच् ते पदस्तलुक् च ।३।४।६६॥**

पद्यतेः कर्त्तर्यद्यतन्यास्ते परे ञिच् स्याद् , निमित्ततस्य च लुक् । उदपादि । त इति किम् ? उदपत्साताम् ॥६६॥

**दीप-जन-बुधि-पूरि-ताय-प्यायो वा ।३।४।६७॥**

एभ्यः कर्त्तर्यद्यतन्यास्ते परे ञिच् वा स्यात् , तलुक् च । अदीपि , अदीपिष्ट ; अजनि , अजनिष्ट ; अबोधि , अबुद्ध ; अपूरि , अपूरिष्ट ; अतायि , अतायिष्ट ; अप्यायि , अप्यायिष्ट ॥६७॥

**भाव-कर्मणोः ।३।४।६८॥**

सर्वस्माद् धातोर्भाव-कर्मविहितेऽद्यतन्यास्ते ञिच् स्यात् , तलुक् च । आसि त्वया , अकारि कटः ॥६८॥

**स्वर-ग्रह-दृश-हन्भ्यः स्य-सिजाशीः-श्वस्तन्यां ञिट् वा ।३।४।६९॥**

स्वरान्ताद् ग्रहादेश्च विहितासु भावकर्मजासु स्य-सिजाशीः-श्वस्तनीषु ञिट् वा स्यात् । दायिष्यते , दास्यते ; अदायिषाताम् , अदिषाताम् ; दायिषीष्ट , दासीष्ट ; दायिता , दाता । ग्राहिष्यते , ग्रहीष्यते ; अग्राहिषाताम् , अग्रहीषाताम् ; ग्राहिषीष्ट ग्रहीषीष्ट ; ग्राहिता , ग्रहीता । दर्शिष्यते , द्रक्ष्यते ; अदर्शिषाताम् , अदृक्षाताम् ; दर्शिषीष्ट , दृक्षीष्ट ; दर्शिता , द्रष्टा । घानिष्यते , हनिष्यते ; अघानिषाताम् , अवधिषाताम् ; घानिषीष्ट , वधिषीष्ट ; घानिता , हन्ता ॥६९॥

**क्यः शिति ।३।४।७०॥**

सर्वस्माद् धातोर्भाव-कर्मविहिते शिति क्यः स्यात् । शय्यते त्वया , क्रियते कटः । शितीति किम् ? बभूवे ।।७०।।

**कर्त्तर्यनद्भ्यः शव् ।३।४।७१।।**

अदादिवर्जाद् धातोः कर्त्तरि विहिते शिति शव् स्यात् । भवति । कर्त्तरीति किम् ? पच्यते । अनद्भ्य इति किम् ? अत्ति ।।७१।।

**दिवादेः श्यः ।३।४।७२।।**

दिवादेः कर्तृविहिते शिति श्यः स्यात् । दीव्यति , जीर्यति ।।७२।।

**भ्रास-भ्लास-भ्रम-क्रम-क्लम-त्रसि-त्रुटि-लषि-यसि-संयसेर्वा ।३।४।७३।।**

एभ्यः कर्तृविहिते शिति श्यो वा स्यात् । भ्रास्यते , भ्रासते ; भ्लास्यते , भ्लासते ; भ्राम्यति , भ्रमति ; क्राम्यति , क्रामति ; क्लाम्यति , क्लामति ; त्रस्यति , त्रसति ; त्रुट्यति , त्रुटति ; लष्यति , लषति ; यस्यति , यसति ; संयस्यति , संयसति ।।७३।।

**कुषि-रञ्जेर्व्याप्ये वा परस्मै च ।३।४।७४।।**

आभ्यां व्याप्ये कर्त्तरि शिद्विषये परस्मैपदं वा स्यात् , तद्योगे श्यश्च । कुष्यति कुष्यते वा पादः स्वयमेव ; रज्यति रज्यते वा वस्त्रं स्वयमेव । व्याप्ये कर्त्तरीति किम् ? कुष्णाति पादं रोगः । शितीत्येव-अकोषि ।।७४।।

**स्वादेः श्नुः ।३।४।७५।।**

स्वादेः कर्तृविहिते शिति श्नुः स्यात् । सुनोति , सिनोति ।।७५।।

**वाऽक्षः ।३।४।७६।।**

अक्षः कर्तृविहिते शिति श्नुर्वा स्यात् । अक्ष्णोति , अक्षति ।।७६।।

**तक्षः स्वार्थे वा ।३।४।७७।।**

**स्वार्थः** तनुत्वम् , तद्वृत्तेस्तक्षः कर्तृविहिते शिति श्नुर्वा स्यात् । तक्ष्णोति , तक्षति । स्वार्थ इति किम् ? संतक्षति शिष्यम् ।।७७।।

**स्तम्भू-स्तुम्भू-स्कम्भू-स्कुम्भू-स्कोः श्ना च ।३।४।७८।।**

स्तम्भ्वादेः सौत्राद् धातोः , स्कुगश्च कर्तृविहिते शिति श्नाः श्नुश्च स्यात्

। स्तभ्नाति , स्तभ्नोति ; स्तुभ्नाति , स्तुभ्नोति ; स्कभ्नाति , स्कभ्नोति ; स्कुभ्नाति , स्कुभ्नोति ; स्कुनाति , स्कुनोति ॥७८॥

**क्र्यादेः ।३।४।७९॥**

क्र्यादेः कर्त्तृविहिते शिति श्ना स्यात् । क्रीणाति , प्रीणाति ॥७९॥

**व्यञ्जनाच्छ्नाहेरानः ।३।४।८०॥**

व्यञ्जनात् परस्य श्नायुक्तस्य हेः आनः स्यात् । पुषाण , मुषाण । व्यञ्जनादिति किम् ? लुनीहि ॥८०॥

**तुदादेः शः ।३।४।८१॥**

एभ्यः कर्तृविहिते शिति शः स्यात् । तुदति , तुदते ॥८१॥

**रुधां स्वराच्श्नो नलुक् च ।३।४।८२॥**

रुधादिनां स्वरात् परः कर्तृविहिते शिति श्नः स्यात् , तद्योगे च प्रकृतेर्नो लुक् च । रुणद्धि , हिनस्ति ॥८२॥

**कृग्-तनादेरुः ।३।४।८३॥**

कृगस्तनादिभ्यश्च कर्तृविहिते शिति उः स्यात् । करोति , तनोति ॥८३॥

**सृजः श्राद्धे ञि-क्या-ऽऽत्मने तथा ।३।४।८४॥**

सृजः पराणि श्रद्धावति कर्त्तरि ञि-क्या-ऽऽत्मनेपदानि स्युस्तथा यथा विहितानि । असर्जि , सृज्यते , स्रक्ष्यते वा मालां धार्मिकः । श्राद्ध इति किम् ? व्यत्यसृष्ट माले मिथुनम् ॥८४॥

**तपेस्तपःकर्मकात् ।३।४।८५॥**

तपेस्तपःकर्मकात् कर्त्तरि ञिक्यात्मनेपदानि स्युस्तथा । तप्यते तपः साधुः । तप इति किम् ? उत्तपति स्वर्णं स्वर्णकारः । कर्मेति किम् ? तपः साधुं तपति ॥८५॥

**एकधातौ कर्मक्रिययैकाऽकर्मक्रिये ।३।४।८६॥**

एकस्मिन् धातौ कर्मस्थक्रियया पूर्वदृष्टया **एका** अभिन्ना सम्प्रत्यकर्मिका क्रिया यस्य तस्मिन् कर्त्तरि कर्मकर्तृरूपे धातोर्ञिक्यात्मनेपदानि स्युः । अकारि क्रियते करिष्यते वा कटः स्वयमेव । एकधाताविति किम् ? पचत्योदनं चैत्रः , सिध्यत्योदनः स्वयमेव । कर्मक्रिययेति किम् ? साध्वसिश्छिनत्ति । एकक्रिय इति किम् ?

स्रवत्युदकं कुण्डिका , स्रवत्युदकं कुण्डिकायाः । अकर्मक्रिय इति किम् ? भिद्यमानः कुशूलः पात्राणि भिनत्ति ॥८६॥

**पचि-दुहेः ।३।४।८७॥**

एकधातौ कर्मस्थक्रियया अकर्मिकया सकर्मिकया वा एकक्रिये कर्त्तरि , आभ्यां ञि-क्या-ऽऽत्मनेपदानि स्युः । अपाचि पच्यते पक्ष्यते वा ओदनः स्वयमेव , अदोहि दुग्धे अदुग्ध वा गौः स्वयमेव ॥८७॥

**न कर्मणा ञिच् ।३।४।८८॥**

पचि-दुहिभ्यां कर्मणा योगे अनन्तरोक्ते कर्त्तरि ञिच् न स्यात् । अपक्तोदुम्बरः फलं स्वयमेव , अदुग्ध गौः पयः स्वयमेव । कर्मणेति किम् ? अपाच्योदनः स्वयमेव । अनन्तरोक्ते कर्त्तरीत्येव-अपाचि उदुम्बरः फलं वायुना ॥८८॥

**रुधः ।३।४।८९॥**

रुधोऽनन्तरोक्ते कर्त्तरि ञिच् न स्यात् । अरुद्ध गौः स्वयमेव ॥८९॥

**स्वर-दुहो वा ।३।४।९०॥**

स्वरान्ताद् दुहेश्चानन्तरोक्ते कर्त्तरि ञिच् वा स्यात् । अकृत अकारि वा कटः स्वयमेव ; अदुंग्ध अदोहि वा गौः स्वयमेव ॥९०॥

**तपः कर्त्रनुतापे च ।३।४।९१॥**

तपेः कर्मकर्त्तरि , कर्त्तर्यनुतापे चार्थे ञिच् न स्यात् । अन्ववातप्त कितवः स्वयमेव , अतप्त तपांसि साधुः , अन्वतप्त चैत्रेण , अन्ववातप्त पापः स्वकर्मणा । कर्त्रनुतापे चेति किम् ? अतापि पृथिवी राज्ञा ॥९१॥

**णि-स्नु-श्र्यात्मनेपदाऽकर्मकात् ।३।४।९२॥**

ण्यन्तात् स्नुश्रिभ्यामात्मनेपदविधावकर्मकेभ्यश्च कर्मकर्त्तरि ञिच् न स्यात् । अपीपचदोदनं चैत्रेण मैत्रः , अपीपचतौदनः स्वयमेव ; प्रास्नोष्ट गौः स्वयमेव ; उदशिश्रियत दण्डः स्वयमेव ; व्यकृत सैन्धवः स्वयमेव ॥९२॥

**भूषार्थ-सन्-किरादिभ्यश्च ञि-क्यौ ।३।४।९३॥**

भूषार्थेभ्यः , सन्नन्तेभ्यः , किरादिभ्यो ण्यादिभ्यश्च कर्मकर्त्तरि ञि-क्यौ न स्याताम् । अलमकृत कन्या स्वयमेव , अलंकुरुते कन्या स्वयमेव ; सन्-अचिकीर्षिष्ट , चिकीर्षते वा कटः स्वयमेव ; किरादि -अकीर्ष्ट , किरते वा पांसुः स्वयमेव

, अगीर्ष्ट गिरते वा ग्रासः स्वयमेव ; णि- कारयते कटः स्वयमेव , चोरयते गौः स्वयमेव ; स्नु- प्रस्नुते गौः स्वयमेव ; श्रि -उच्छ्रयते दण्डः स्वयमेव ; आत्मनेपदाकर्मक -विकुर्वते सैन्धवाः स्वयमेव ॥९३॥

**करणक्रियया क्वचित् ।३।४।९४॥**

एकधातौ पूर्वदृष्टया करणस्थया क्रियया एकाकर्मक्रिये कर्त्तरि ञिक्यात्मनेपदानि क्वचित् स्युः । परिवारयन्ते कण्टका वृक्षं स्वयमेव । क्वचिदिति किम् ? साध्वसिश्छिनत्ति ॥९४॥

इत्याचार्यश्री**हेमचन्द्र**विरचितायां
**सिद्धहेमचन्द्रा**भिधानस्वोपज्ञशब्दानुशासनलघुवृत्तौ
तृतीयस्याध्यायस्य चतुर्थः पादः तृतीयोऽध्यायः समाप्तः ॥३।४।

प्रतापतपनः कोऽपि , **मौलराजे**र्नवोऽभवत् ।
रिपुस्त्रीमुखपद्मानां न सेहे यः किल श्रियम् ॥१२॥

## ॥ अथ चतुर्थोऽध्यायः ॥
## प्रथमः पादः

### द्विर्धातुः परोक्षा-ङे , प्राक् तु स्वरे स्वरविधेः ।४।१।१॥

परोक्षायां ङे च परे धातुर्द्विः स्यात् , स्वरादौ तु द्वित्वनिमित्ते स्वरस्य कार्यात् प्रागेव । पपाच , अचकमत । धातुरिति किम् ? प्राशिश्रियत् । प्रागिति किम् ? चक्रतुः । स्वर इति किम् ? जेघ्रीयते । स्वरविधेरिति किम् ? शुशाव । प्राक् तु स्वरे स्वरविधेरिति आद्विर्वचनमधिकारः ॥१॥

### आद्योऽश एकस्वरः ।४।१।२॥

अनेकस्वरस्य धातोराद्य एकस्वरोऽवयवः परोक्षा-ङेपरे द्विः स्यात् । जजागार , अचकाणत् ॥२॥

### सन्-यङश्च ।४।१।३॥

सन्नन्तस्य यङन्तस्य चाऽऽद्य एकस्वरोंऽशो द्विः स्यात् । तितिक्षते , पापच्यते ॥३॥

### स्वरादेर्द्वितीयः ।४।१।४॥

स्वरादेर्द्व्युक्तिभाजो द्वितीयोंऽश एकस्वरो द्विः स्यात् । अटिटिषति , अशाश्यते । प्राक् तु स्वरे स्वरविधेरित्येव-आटिटत् ॥४॥

### न ब-द-नं संयोगादिः ।४।१।५॥

स्वरादेर्धातोर्द्वितीयस्यांशस्यैकस्वरस्य ब-द-नाः संयोगस्याद्या न द्विः स्युः । उब्जिजिषति , अड्डिटिषते , उन्दिदिषति । संयोगादिरिति किम् ? प्राणिणिषति ॥५॥

### अयि रः ।४।१।६॥

स्वरादेर्धातोर्द्वितीयस्यांशस्यैकस्वरस्य संयोगादी रो द्विर्न स्यात् , न तु रादनन्तरे यि । अर्चिचिषति । अयीति किम् ? अरार्यते ॥६॥

### नाम्नो द्वितीयाद् यथेष्टम् ।४।१।७॥

स्वरादेर्नामधातोर्द्वित्वभाजो द्वितीयादारभ्यैकस्वरोंऽशो यथेष्टं द्विः स्यात् । अशिश्वीयिषति , अश्वीयियिषति , अश्वीयिषिषति ॥७॥

**अन्यस्य ।४।१।८॥**

स्वरादेरन्यस्य नामधातोर्द्वित्वभाज एकस्वरोंऽशो यथेष्टं प्रथमादिर्द्विः स्यात् । पुपुत्रीयिषति , पुतित्रीयिषति , पुत्रीयियिषति , पुत्रीयिषिषति ॥८॥

**कण्ड्वादेस्तृतीयः ।४।१।९॥**

कण्ड्वादेर्द्वित्वभाज एकस्वरस्तृतीय एव अंशो द्विः स्यात् । कण्डूयियिषति , असूयियिषति ॥९॥

**पुनरेकेषाम् ।४।१।१०॥**

एकेषां मते द्वित्वे कृते पुनर्द्वित्वं स्यात् । सुसोषुपिषते । एकेषामिति किम् ? सोषुपिषते ॥१०॥

**यिः सन् वेर्ष्यः ।४।१।११॥**

ईर्ष्यो द्वित्वभाजो यिः सन् वा द्विः स्यात् । ईर्ष्यियिषति , ईर्ष्यिषिषति ॥११॥

**ह्वः शिति ।४।१।१२॥**

जुहोत्यादयः शिति द्विः स्युः । जुहोति ॥१२॥

**चराचर-चलाचल-पतापत-वदावद-घनाघन-पाटूपटं वा ।४।१।१३॥**

एतेऽचि कृतद्वित्वादयो वा निपात्यन्ते । चराचरः , चलाचलः , पतापतः , वदावदः , घनाघनः , पाटूपटः । पक्षे -चरः , चलः , पतः , वदः , हनः , पाटः ॥१३॥

**चिक्लिद-चक्नसम् ।४।१।१४॥**

एतौ केऽचि कृतद्वित्वौ निपात्येते । चिक्लिदः , चक्नसः ॥१४॥

**दाश्वत्-साह्वत्-मीढ्वत् ।४।१।१५॥**

एते क्वसावद्वित्वादयो निपात्यन्ते । दाश्वांसौ , साह्वांसौ , मीढ्वांसौ ॥१५॥

**ज्ञप्यापो ज्ञीपीप् , न च द्विः , सि सनि ।४।१।१६॥**

ज्ञपेरापेश्च सादौ सनि परे यथासंख्यं ज्ञीपीपौ स्याताम् , नचाऽनयोरेकस्वरोंऽशो द्विः । ज्ञीप्सति , ईप्सति । सीति किम् ? जिज्ञपयिषति ॥१६॥

**ऋध ईर्त् ।४।१।१७॥**

ऋधः सादौ सनि परे ईर्त् स्यात् , न चाऽस्य द्विः । ईर्त्सति । सीत्येव

-अर्दिधिषति ॥१७॥

**दम्भो धिप्-धीप् ।४।१।१८॥**

दम्भेः सि सनि धिप्-धीपौ स्यातां न चाऽस्य द्विः । धिप्सति , धीप्सति । सीत्येव-दिदम्भिषति ॥१८॥

**अव्याप्यस्य मुचेर्मोग्वा ।४।१।१९॥**

मुचेरकर्मणः सि सनि मोक् वा स्यात् , न चाऽस्य द्विः । मोक्षति , मुमुक्षति चैत्रः । अव्याप्यस्येति किम् ? मुमुक्षति वत्सम् ॥१९॥

**मि-मी-मा-दामित् स्वरस्य ।४।१।२०॥**

मि-मी-मा-दासंज्ञानां स्वरस्य सि सनि इत् स्यात् , न च द्विः । मित्सति , मित्सते , मित्सति , दित्सति , धित्सति ॥२०॥

**रभ-लभ-शक-पत-पदामिः ।४।१।२१॥**

एषां स्वरस्य सि सनि इः स्यात् , न च द्विः । आरिप्सते , लिप्सते , शिक्षति , पित्सति , पित्सते । सीत्येव-पिपतिषति ॥२१॥

**राधेर्वधे ।४।१।२२॥**

राधेर्हिंसाऽर्थस्य सि सनि स्वरस्य इः स्यात् , न च द्विः । प्रतिरित्सति । वध इति किम् ? आरिरात्सति ॥२२॥

**अवित्परोक्षा-सेट्थवोरेः ।४।१।२३॥**

राधेर्हिंसार्थस्याऽविति परोक्षायां थवि च सेटि स्वरस्य एः स्यात् , न च द्विः । रेधुः , रेधिथ । अविदिति किम् ? अपरराध । वध इत्येव-आरराधतुः ॥२३॥

**अनादेशादेरकव्यञ्जनमध्येऽतः ।४।१।२४॥**

अवित्परोक्षा-सेट्थवोः परयोर्योऽनादेशादिस्तत्सम्बन्धिनः स्वरस्याऽतो-ऽसहायव्यञ्जनयोर्मध्यगतस्य एः स्यात् , न च द्विः । पेचुः , पेचिथ , नेमुः , नेमिथ । अनादेशादेरिति किम् ? बभणतुः । एकव्यञ्जनमध्य इति किम् ? ततक्षिथ । अत इति किम् ? दिदिवुः । सेट्थवीत्येव-पपक्थ ॥२४॥

**तॄ-त्रप-फल-भजाम् ।४।१।२५॥**

एषामवित्परोक्षा-सेट्थवोः स्वरस्य एः स्यात् , न च द्विः । तेरुः , तेरिथ

; त्रेपे ; फेलुः , फेलिथ ; भेजुः , भेजिथ ॥२५॥

**जॄ-भ्रम-वम-त्रस-फण-स्यम-स्वन-राज-भ्राज-भ्रास-भ्लासो वा ।४।१।२६॥**

एषां स्वरस्याऽवित्परोक्षा-सेट्थवोरेर्वा स्यात् , न च द्विः । जेरुः , जजरुः ; जेरिथ , जजरिथ । भ्रेमुः , बभ्रमुः ; भ्रेमिथ , बभ्रमिथ । वेमुः , ववमुः ; वेमिथ , ववमिथ । त्रेसुः , तत्रसुः ; त्रेसिथ , तत्रसिथ । फेणुः , पफणुः ; फेणिथ , पफणिथ । स्येमुः , सस्यमुः ; स्येमिथ , सस्यमिथ । स्वेनुः , सस्वनुः ; स्वेनिथ , सस्वनिथ । रेजुः , रराजुः ; रेजिथ , रराजिथ । भ्रेजे , बभ्राजे । भ्रेसे , बभ्रासे । भ्लेसे , बभ्लासे ॥२६॥

**वा श्रन्थ-ग्रन्थो नलुक् च ।४।१।२७॥**

अनयोः स्वरस्यावित्परोक्षा-सेट्थवोरेर्वा स्यात् , तद्योगे च नो लुक् , न च द्विः । श्रेथुः , शश्रन्थुः ; श्रेथिथ , शश्रन्थिथ । ग्रेथुः , जग्रन्थुः ; ग्रेथिथ , जग्रन्थिथ ॥२७॥

**दम्भः ।४।१।२८॥**

दम्भेः स्वरस्यावित्परोक्षायाम् एः स्यात् , न च द्विः , तद्योगे च नो लुक् । देभुः ॥२८॥

**थे वा ।४।१।२९॥**

दम्भेः स्वरस्य थवि एर्वा स्यात् , तद्योगे च नो लुक् , न च द्विः । देभिथ , ददम्भिथ ॥२९॥

**न शस-दद-वादि-गुणिनः ।४।१।३०॥**

शसि-दद्योर्वादिनां गुणिनां च स्वरस्य एर्न स्यात् । विशशसुः , विशशसिथ ; दददे ; ववले ; विशशरुः , विशशरिथ ॥३०॥

**हौ दः ।४।१।३१॥**

दासंज्ञस्य हौ परे एः स्यात् , न च द्विः । देहि , धेहि ॥३१॥

**देर्दिगिः परोक्षायाम् ।४।१।३२॥**

देङः परोक्षायां दिगिः स्यात् , न च द्विः । दिग्ये ॥३२॥

**ङे पिबः पीप्य् ।४।१।३३॥**

ण्यन्तस्य पिबतेर्ङे परे पीप्य् स्यात् , न च द्विः । अपीप्यत् ॥३३॥

**अङे हि-हनो हो घः पूर्वात् ।४।१।३४॥**

हि-हनोर्ङवर्जे प्रत्यये परे द्वित्वे सति पूर्वस्मात् परस्य हो घः स्यात् । प्रजिघाय , जंघन्यते । अङ इति किम् ? प्राजीहयत् ॥३४॥

**जेर्गिः सन्-परोक्षयोः ।४।१।३५॥**

सन्-परोक्षयोर्द्वित्वे सति पूर्वात् परस्य जेर्गिः स्यात् । जिगीषति , विजिग्ये ॥३५॥

**चेः किर्वा ।४।१।३६॥**

सन्-परोक्षयोर्द्वित्वे सति पूर्वात् परस्य चेः किर्वा स्यात् । चिकीषति , चिचीषति ; चिक्ये , चिच्ये ॥३६॥

**पूर्वस्याऽस्वे स्वरे योरियुव् ।४।१।३७॥**

द्वित्वे सति यः पूर्वस्तत्सम्बन्धिनोरि[१]वर्णोतोरस्वे स्वरे परे इयुवौ स्याताम् । इयेष , अरियर्त्ति उवोष । अस्व इति किम् ? ईषतुः । स्वर इति किम् ? इयाज ॥३७॥

**ऋतोऽत् ।४।१।३८॥**

द्वित्वे सति पूर्वस्य ऋतोऽत् स्यात् । चकार ॥३८॥

**ह्रस्वः ।४।१।३९॥**

द्वित्वे सति पूर्वस्य ह्रस्वः स्यात् । पपौ ॥३९॥

**ग-होर्जः ।४।१।४०॥**

द्वित्वे सति पूर्वयोर्ग-होर्जः स्यात् । जगाम , जहास ॥४०॥

**द्युतेरिः ।४।१।४१॥**

द्युतेर्द्वित्वे सति पूर्वस्य इः स्यात् । दिद्युते ॥४१॥

**द्वितीय-तुर्ययोः पूर्वौ ।४।१।४२॥**

द्वित्वे पूर्वस्य द्वितीय-तुर्ययोर्यथासङ्ख्यं पूर्वौ आद्य-तृतीयौ स्याताम् । चखान , जझाम ॥४२॥

---

१. °रिवर्णोवर्णयोरस्वे J3 P3 पा३,४ विना । °रिवर्णोतो[र]स्वे पा३ । "योः इकारस्य उकारस्य च" इति बृहद्वृत्तौ पाठः ॥

## तिर्वा ष्ठिवः ।४।१।४३।।

ष्ठिवेर्द्वित्वे सति पूर्वस्य तिर्वा स्यात् । तिष्ठेव , टिष्ठेव ।।४३।।

## व्यञ्जनस्याऽनादेर्लुक् ।४।१।४४।।

द्वित्वे पूर्वस्य व्यञ्जनस्याऽनादेर्लुक् स्यात् । जग्ले । अनादेरिति किम् ? आदेर्मा भूत् -पपाच ।।४४।।

## अघोषे शिटः ।४।१।४५।।

द्वित्वे पूर्वस्य शिटस्तत्सम्बन्धिन्येवाऽघोषे लुक् स्यात् । चुश्च्योत । अघोष इति किम् ? सस्नौ ।।४५।।

## क-ङश्च-ञ् ।४।१।४६।।

द्वित्वे पूर्वयोः क-ङोर्यथासंख्यं च-ञौ स्याताम् । चकार , ञुङ्वे ।।४६।।

## न कवतेर्यङः ।४।१।४७।।

यङन्तस्य कवतेर्द्वित्वे सति पूर्वस्य कश्चो न स्यात् । कोकूयते खरः । कवतेरिति किम् ? कौति-कुवत्योः[1] -चोकूयते । यङ इति किम् ? चुकुवे ।।४७।।

## आ-गुणावन्यादेः ।४।१।४८।।

यङन्तस्य द्वित्वे पूर्वस्य न्याद्यागमवर्जस्य आ-गुणौ स्याताम् । पापच्यते , लोलूयते । अन्यादेरिति किम् ? वनीवच्यते , यंयम्यते ।।४८।।

## न हाको लुपि ।४।१।४९।।

हाको द्वित्वे पूर्वस्य यङो लुपि आ न स्यात् । जहेति ।।४९।।

## वञ्च-स्रंस-ध्वंस-भ्रंश-कस-पत-पद-स्कन्दोऽन्तो नी ।४।१।५०।।

एषां यङन्तानां द्वित्वे पूर्वस्य नीरन्तः स्यात् । वनीवच्यते , सनीस्रस्यते , दनीध्वस्यते , बनीभ्रश्यते , चनीकस्यते , पनीपत्यते , पनीपद्यते , चनीस्कद्यते ।।५०।।

## मुरतोऽनुनासिकस्य ।४।१।५१।।

आत् परो योऽनुनासिकस्तदन्तस्य यङन्तस्य द्वित्वे पूर्वस्य मुरन्तः स्यात् । बम्भण्यते । अत इति किम् ? तेतिम्यते । अनुनासिकस्येति किम् ?

१. कुवत्योर्मा भूत् P2 J3 ।।

पापच्यते ॥५१॥

**जप-जभ-दह-दश-भञ्ज-पशः ।४।१।५२॥**

एषां यङन्तानां द्वित्वे पूर्वस्य मुरन्तः स्यात् । जञ्जप्यते , जञ्जभ्यते , दन्दह्यते , दन्दश्यते , बम्भज्यते , पम्पश्यते ॥५२॥

**चर-फलाम् ।४।१।५३॥**

एषां यङन्तानां द्वित्वे पूर्वस्य मुरन्तः स्यात् । चञ्चूर्यते , पम्फुल्यते ॥५३॥

**ति चोपान्त्याऽतोनोदुः ।४।१।५४॥**

यङन्तानां चर-फलां तादौ च प्रत्यये उपान्त्यस्याऽत उः स्यात् , न च तस्यौत् । चञ्चूर्यते , पम्फुल्यते , चूर्त्तिः , प्रफुल्तिः । अत इति किम् ? चञ्चार्यते , पम्फाल्यते । अनोदिति किम् ? चंचूर्त्ति , पम्फुल्ति ॥५४॥

**ऋमतां री ।४।१।५५॥**

ऋमतां यङन्तानां द्वित्वे पूर्वस्य रीरन्तः स्यात् । नरीनृत्यते ॥५५॥

**रि-रौ च लुपि ।४।१।५६॥**

ऋमतां यङो लुपि द्वित्वे पूर्वस्य रि-रौ रीश्चान्तः स्यात् । चरिकर्त्ति , चर्कर्त्ति , चरीकर्त्ति ॥५६॥

**निजां शित्येत् ।४।१।५७॥**

निजि-विजि-विषां शिति द्वित्वे पूर्वस्यैत् स्यात् । नेनेक्ति , वेवेक्ति , वेवेष्टि । शितीति किम् ? निनेज ॥५७॥

**पॄ-भृ-मा-हाङामिः ।४।१।५८॥**

एषां शिति द्वित्वे पूर्वस्य इः स्यात् । पिपर्त्ति , इयर्त्ति , बिभर्त्ति , मिमीते , जिहीते । हाङिति किम् ? जहाति । शितीत्येव-पपार ॥५८॥

**सन्यस्य ।४।१।५९॥**

द्वित्वे पूर्वस्यातः सनि परे इः स्यात् । पिपक्षति । अस्येति किम् ? पापचिषते ॥५९॥

**ओर्जा-ऽन्तस्था-पवर्गेऽवर्णे ।४।१।६०॥**

द्वित्वे पूर्वस्योतोऽवर्णान्ते जान्तस्थापवर्गे परे सनि इः स्यात् । जिजावयिषति

, यियविषति , यियावयिषति , रिरावयिषति , लिलावयिषति , पिपविषते , पिपावयिषति[1] , मिमावयिषति । जान्तस्थापवर्ग इति किम् ? जुहावयिषति । अवर्ण इति किम् ? बुभूषति ॥६०॥

**श्रु-स्रु-द्रु-प्रु-प्लु-च्योर्वा ।४।१।६१॥**

एषां सनि द्वित्वे पूर्वस्योतोऽवर्णान्तायामन्तस्थायां परस्याम् इर्वा स्यात् । शिश्रावयिषति , शुश्रावयिषति ; सिस्रावयिषति , सुस्रावयिषति ; दिद्रावयिषति , दुद्रावयिषति ; पिप्रावयिषति , पुप्रावयिषति ; पिप्लावयिषति , पुप्लावयिषति ; चिच्यावयिषति , चुच्यावयिषति ॥६१॥

**स्वपो णावुः ।४।१।६२॥**

स्वपेर्णौ सति द्वित्वे पूर्वस्योत् स्यात् । सुष्वापयिषति । * णाविति[2] किम् ? सिष्वापकीयिषति * । स्वपो णाविति किम् ? स्वापं चिकीर्षति सिष्वापयिषति । स्वपो णौ सति द्वित्व इति किम् ? सोषोपयिषति ॥६२॥

**असमानलोपे सन्वल्लघुनि ङे ।४।१।६३॥**

न विद्यते समानस्य लोपो यस्मिन् तस्मिन् ङपरे णौ द्वित्वे , पूर्वस्य लघुनि धात्वक्षरे परे सनीव कार्यं स्यात् । अचीकरत् , अजीजवत् , अशिश्रवत् । लघुनीति किम् ? अततक्षत् । णावित्येव-अचकमत । असमानलोप इति किम् ? अचकथत् ॥६३॥

**लघोर्दीर्घोऽस्वरादेः ।४।१।६४॥**

अस्वरादेर्ङपरेऽसमानलोपे णौ द्वित्वे पूर्वस्य लघोर्लघुनि धात्वक्षरे परे दीर्घः स्यात् । अचीकरत् । लघोरिति किम् ? अचिक्कणत् । अस्वरादेरिति किम् ? और्णुनवत् ॥६४॥

**स्मृ-दृ-त्वर-प्रथ-म्रद-स्तॄ-स्पशेरः ।४।१।६५॥**

एषामसमानलोपे ङपरे णौ द्वित्वे पूर्वस्याऽत् स्यात् । असस्मरत् , अददरत् , अतत्वरत् , अपप्रथत् , अमम्रदत् , अतस्तरत् , अपस्पशत् ॥६५॥

**वा वेष्ट-चेष्टः ।४।१।६६॥**

१. पिपावयिषति P1, P3, पा२,५ पामू३ मध्ये नास्ति ॥ २.* * P2, P3, पा३,४,५, J3 विना नास्ति ॥

अनयोरसमानलोपे ङपरे णौ द्वित्वे पूर्वस्याऽद् वा स्यात् । अववेष्टत् , अविवेष्टत् ; अचचेष्टत् , अचिचेष्टत् ॥६६॥

**ई च गणः ।४।१।६७॥**

गणेर्ङपरे णौ द्वित्वे पूर्वस्य ईः अश्च स्यात् । अजीगणत् , अजगणत् ॥६७॥

**अस्याऽऽदेराः परोक्षायाम् ।४।१।६८॥**

अस्यां द्वित्वे पूर्वस्याऽऽदेरत आः स्यात् । आदुः , आरतुः । अस्येति किम् ? ईयुः । आदेरिति किम् ? पपाच ॥६८॥

**अनातो नश्चान्त ऋदाद्यशौ-संयोगस्य ।४।१।६९॥**

ऋदादेरश्नोतेः संयोगान्तस्य च परोक्षायां द्वित्वे पूर्वस्याऽऽदेरात्स्थानादन्यस्याऽस्य आः स्यात् , कृताऽऽतो नोऽन्तश्च । आनृधुः , आनशे , आनञ्ज । ऋदादीति किम् ? आर ? अनात इति किम् ? आञ्छ ॥६९॥

**भू-स्वपोरदुतौ ।४।१।७०॥**

भू-स्वपोः परोक्षायां द्वित्वे पूर्वस्य यथासंख्यमदुतौ स्याताम् । बभूव , सुष्वाप ॥७०॥

**ज्या-व्ये-व्यधि-व्यचि-व्यथेरिः ।४।१।७१॥**

एषां परोक्षायां द्वित्वे पूर्वस्य इः स्यात् । जिज्यौ , संविव्याय , विव्याध , विव्याच , विव्यथे ॥७१॥

**यजादि-वश्-वचः सस्वरान्तस्था य्वृत् ।४।१।७२॥**

यजादेर्वश्-वचोश्च परोक्षायां द्वित्वे पूर्वस्य सस्वरान्तस्था इ-उ-ऋरूपा आ[1]सत्त्या स्यात् । इयाज , उवाय , उवाश , उवाच ॥७२॥

**न वयो य् ।४।१।७३॥**

वेगो वये[2]र्य् परोक्षायां य्वृत् न स्यात् । ऊयुः ॥७३॥

**वेरयः ।४।१।७४॥**

वेगोऽयन्तस्य पूर्वस्य परस्य च परोक्षायां य्वृन्न स्यात् । ववौ । अय इति किम् ? उवाय ॥७४॥

१. **आसन्ना** P3, पामू३,५ विना । **प्रत्यासत्त्या स्यात्** पा२ बृहद्वृत्तौ च ॥ २. **वयो य्** पा३, P1,2,3 विना । **वयेर्यो** J2 । **वयो यः** पा१ । **वयो य** पा२ J3 ॥

**अविति वा ।४।१।७५।।**

वेगोऽयन्तस्याऽविति परोक्षायां य्वृद्वा न स्यात् । ववुः , ऊवुः ।।७५।।

**ज्यश्च यपि ।४।१।७६।।**

ज्यो वेगश्च यपि य्वृन्न स्यात् । प्रज्याय , प्रवाय ।।७६।।

**व्यः ।४।१।७७।।**

व्यो यपि य्वृन्न स्यात् । प्रव्याय ।।७७।।

**संपरेर्वा ।४।१।७८।।**

आभ्यां परस्य व्यो यपि य्वृद्वा न स्यात् । संव्याय , संवीय ; परिव्याय , परिवीय ।।७८।।

**यजादि-वचेः किति ।४।१।७९।।**

यजादेर्वचेश्च सस्वरान्तस्था किति परे य्वृत् स्यात् । ईजुः , ऊयुः . ऊचुः । कितीति किम् ? यक्षीष्ट ।।७९।।

**स्वपेर्यङ्-डे च ।४।१।८०।।**

स्वपेर्यङि डे किति च परे सस्वरान्तस्था य्वृत् स्यात् । सोषुप्यते , असूषुपत् , सुषुप्सति ।।८०।।

**ज्या-व्यधः क्ङिति ।४।१।८१।।**

ज्या-व्यधोः सस्वरान्तस्था किति ङिति य्वृत् स्यात् । जीयात् , जिनाति , विध्यात् , विध्यति ।।८१।।

**व्यचोऽनसि ।४।१।८२।।**

व्यचेः सस्वरान्तस्था अस्वर्जे क्ङिति य्वृत् स्यात् । विचति । अनसीति किम् ? उरुव्यचाः ।।८२।।

**वशेरयङि ।४।१।८३।।**

वशेः सस्वरान्तस्था अयङि क्ङिति य्वृत् स्यात् । उष्टः , उशन्ति । अयङीति किम् ? वावश्यते ।।८३।।

**ग्रह-व्रस्च-भ्रस्ज-प्रच्छः ।४।१।८४।।**

एषां सस्वरान्तस्था क्ङिति य्वृत् स्यात् । जगृहुः , गृह्णाति ; वृक्णः ,

वृश्चति ; भृष्टः , भृज्जति ; पृष्टः , पृच्छा ॥८४॥

**व्ये-स्यमोर्यङि ।४।१।८५॥**

व्येग्-स्यमोः सस्वरान्तस्था यङि य्वृत् स्यात् । वेवीयते , सेसिमीति ॥८५॥

**चायः की ।४।१।८६॥**

चायो यङि कीः स्यात् । चेकीतः ॥८६॥

**द्वित्वे ह्वः ।४।१।८७॥**

ह्वेगो द्वित्वविषये सस्वरान्तस्था य्वृत् स्यात् । जुहूषति ॥८७॥

**णौ ङ-सनि ।४।१।८८॥**

ह्वेगः सस्वरान्तस्था ङपरे[1] सन्परे च णौ विषये य्वृत् स्यात् । अजूहवत् , जुहावयिषति ॥८८॥

**श्वेर्वा ।४।१।८९॥**

श्वेः सस्वरान्तस्था ङ-सन्परे णौ विषये य्वृद्वा स्यात् । अशूशवत् , अशिश्वयत् ; शुशावयिषति , शिश्वाययिषति ॥८९॥

**वा परोक्षा-यङि ।४।१।९०॥**

श्वेः सस्वरान्तस्था परोक्षायङोर्य्वृद्वा स्यात् । शुशाव , शिश्वाय । शोशूयते , शेश्वीयते ॥९०॥

**प्यायः पी ।४।१।९१॥**

प्यायेः परोक्षा-यङोः पीः स्यात् । आपिप्ये , आपेपीतः ॥९१॥

**क्तयोरनुपसर्गस्य ।४।१।९२॥**

अनुपसर्गस्य प्यायेः क्त-क्तवत्वोः पीः स्यात् । पीनम् , पीनवन् मुखम् । अनुपसर्गस्येति किम् ? प्रप्यानो मेघः ॥९२॥

**आङोऽन्धूधसोः ।४।१।९३॥**

आङः परस्य प्यायेरन्धावूधसि चार्थे क्तयोः परतः पीः स्यात् । आपीनोऽन्धुः , आपीनमूधः । अन्धूधसोरिति किम् ? आप्यानश्चन्द्रः । आङ एवेति नियमात् प्राप्यानमूधः ॥९३॥

१. ङसन्परे P2, P3, J3 पा३,४,५ विना ॥

**स्फायः स्फी वा ।४।१।९४।।**

स्फायतेः क्तयोः परयोः स्फीर्वा स्यात् । स्फीतः , स्फीतवान् ; स्फातः , स्फातवान् ।।९४।।

**प्रसमः स्त्यः स्ती ।४।१।९५।।**

प्रसम्समुदायपूर्वस्य स्त्यः क्तयोः परयोः स्तीः स्यात् । प्रसंस्तीतः , प्रसंस्तीतवान् । प्रसम इति किम् ? संप्रस्त्यानः ।।९५।।

**प्रात् तश्च मो वा ।४।१।९६।।**

प्रात् केवलात् परस्य स्त्यः क्तयोः परयोः स्तीः स्यात् , क्तयोस्तो म् च वा । प्रस्तीतः , प्रस्तीतवान् ; प्रस्तीमः , प्रस्तीमवान् ।।९६।।

**श्यः शी द्रवमूर्त्ति-स्पर्शे नश्चाऽस्पर्शे ।४।१।९७।।**

**मूर्त्तिः** काठिन्यम् , द्रवमूर्त्ति-स्पर्शार्थस्य श्यः क्तयोः परयोः शीः स्यात् , तद्योगे क्तयोस्तोऽस्पर्शविषये न् च । शीनम् , शीनवद् घृतम् , शीतं वर्त्तते , शीतो वायुः ।।९७।।

**प्रतेः ।४।१।९८।।**

प्रतेः परस्य श्यः क्तयोः परयोः शीः स्यात् , तद्योगे क्तयोः तो न् च । प्रतिशीनः , प्रतिशीनवान् ।।९८।।

**वाऽभ्यवाभ्याम् ।४।१।९९।।**

आभ्यां परस्य श्यः क्तयोः परयोः शीर्वा स्यात् , तद्योगे च क्तयोस्तोऽस्पर्शे नश्च । अभिशीनः , अभिशीनवान् ; अभिश्यानः , अभिश्यानवान् ; अवशीनम् , अवश्यानं हिमम् ; अवशीनवान् , अवश्यानवान् ।।९९।।

**श्रः शृतं हविः-क्षीरे ।४।१।१००।।**

श्रातेः श्रायतेश्च क्ते हविषि क्षीरे चार्थे शृर्निपात्यते । शृतं हविः , शृतं क्षीरं स्वयमेव । हविःक्षीर इति किम् ? श्राणा यवागूः ।।१००।।

**श्रपेः प्रयोक्त्रैक्ये ।४।१।१०१।।**

श्रातेः श्रायतेर्वा ण्यन्तस्यैकस्मिन् प्रयोक्तरि क्ते परे हविः-क्षीरयोः शृर्निपात्यते । शृतं हविः क्षीरं वा चैत्रेण । हविःक्षीर इत्येव-श्रपिता यवागूः । प्रयोक्त्रैक्य इति किम् ? श्रपितं हविश्चैत्रेण मैत्रेण ।।१०१।।

**य्वृत् सकृत् ।४।१।१०२॥**

अन्तस्थास्थानम् इ-उ-ऋत् सकृदेव स्यात् । संवीयते ॥१०२॥

**दीर्घमवोऽन्त्यम् ।४।१।१०३॥**

वेग्वर्जस्य य्वृदन्त्यं दीर्घं स्यात् । जीनः । अव इति किम् ? उतः । अन्त्यमिति किम् ? सुप्तः ॥१०३॥

**स्वर-हन-गमोः सनि धुटि ।४।१।१०४॥**

स्वरान्तस्य हन्-गमोश्च धुडादौ सनि दीर्घः स्यात् । चिचीषति , जिघांसति , जिगांस्यते । धुटीति किम् ? यियविषति ॥१०४॥

**तनो वा ।४।१।१०५॥**

तनेर्धुडादौ सनि दीर्घो वा स्यात् । तितांसति , तितंसति । धुटीत्येव — तितनिषति ॥१०५॥

**क्रमः क्त्वि वा ।४।१।१०६॥**

क्रमो धुडादौ क्त्वि दीर्घो वा स्यात् । क्रान्त्वा , क्रन्त्वा[१] ॥१०६॥

**अहन्-पञ्चमस्य क्वि-क्ङिति ।४।१।१०७॥**

हन्वर्जस्य पञ्चमान्तस्य क्वौ धुडादौ च क्ङिति दीर्घः स्यात् । प्रशान् , शान्तः , शंशान्तः । पञ्चमस्येति किम् ? पक्त्वा । अहन्निति किम् ? वृत्रहणि । धुटीत्येव-यम्यते ॥१०७॥

**अनुनासिके च च्छ्-वः शूट् ।४।१।१०८॥**

अनुनासिकादौ क्वौ धुडादौ च धातोः च्छ्वोर्यथासंख्यं श्-ऊटौ स्याताम् । प्रश्नः , शब्दप्राशौ , पृष्टः , स्योमा , अक्षद्यूः , द्यूतः ॥१०८॥

**मव्यवि-श्रिवि-ज्वरि-त्वरेरुपान्त्येन ।४।१।१०९॥**

एषामनुनासिकादौ क्वौ धुडादौ च प्रत्यये उपान्त्येन सह ऊट् स्यात् । मोमा , मूः , मूतिः ; ओम् , ऊः , ऊतिः ; श्रोमा , श्रूः , श्रूतः[२] ; जूर्मा , जूः , जूर्त्तिः ; तूर्मा , तूः , तूर्णः ॥१०९॥

**राल्लुक् ।४।१।११०॥**

१. इतः परं **धुटीत्येव क्रमित्वा** इत्यधिकम् J3 मध्ये ॥ २. **श्रूतिः** P2 ॥

रात् परयोः छ्वोरनुनासिकादौ क्वौ धुडादौ च प्रत्यये लुक् स्यात् । मोर्मा , मूः , मूर्त्तः: ; तोर्मा , तूः , तूर्णः ॥११०॥

**क्तेऽनिटश्च-जोः क-गौ घिति ।४।१।१११॥**

क्तेऽनिटो धातोश्च-जोर्घिति यथासंख्यं क-गौ स्याताम् । पाकः , भोग्यम् । क्तेऽनिट इति किम् ? सङ्कोचः , कूजः ॥१११॥

**न्यङ्कूद्ग-मेघाऽऽदयः ।४।१।११२॥**

न्यङ्कादयः कत्वे , उद्गादयो गत्वे , मेघादयो घत्वे कृते निपात्यन्ते । न्यङ्कुः , शोकः ; उद्गः , न्युद्गः ; मेघः , ओघः ॥११२॥

**न वञ्चेर्गतौ ।४।१।११३॥**

गत्यर्थस्य वञ्चेः कत्वं न स्यात् । वञ्चं वञ्चन्ति । गताविति किम् ? वङ्कं काष्ठम् ॥११३॥

**यजेर्यज्ञाङ्गे ।४।१।११४॥**

यज्ञाङ्गवृत्तेर्यजेर्गत्वं न स्यात् । पञ्च प्रयाजाः । यज्ञाङ्ग इति किम् ? प्रयागः ॥११४॥

**घ्यण्यावश्यके ।४।१।११५॥**

आवश्यकोपाधिके घ्यणि च-जोः क-गौ न स्याताम् । अवश्यपाच्यम् , अवश्यरञ्ज्यम् । आवश्यक इति किम् ? पाक्यम् ॥११५॥

**नि-प्राद् युजः शक्ये ।४।१।११६॥**

आभ्यां युजः शक्ये गम्ये घ्यणि गो न स्यात् । नियोज्यः , प्रयोज्यः । शक्य इति किम् ? नियोग्यः ॥११६॥

**भुजो भक्ष्ये ।४।१।११७॥**

भुजो भक्ष्यार्थे घ्यणि गो न स्यात् । भोज्यं पयः । भक्ष्य इति किम् ? भोग्या भूः ॥११७॥

**त्यज-यज-प्रवचः ।४।१।११८॥**

एषां घ्यणि क-गौ न स्याताम् । त्याज्यम् , याज्यम् , प्रवाच्यः ॥११८॥

**वचोऽशब्दनाम्नि ।४।१।११९॥**

अशब्दसंज्ञायां वचेर्घ्यणि को न स्यात् । वाच्यम् । अशब्दनाम्नीति किम् ? वाक्यम् ॥११९॥

**भुज-न्युब्जं पाणि-रोगे ।४।१।१२०॥**

भुजेर्न्युब्जेश्च घञन्तस्य पाणौ रोगे चार्थे यथासंख्यं भुजन्युब्जौ निपात्येते । भुजः पाणिः , न्युब्जो रोगः ॥१२०॥

**वीरुन्-न्यग्रोधौ ।४।१।१२१॥**

विपूर्वस्य रुहेः क्विपि , न्यक्पूर्वस्य चाऽचि वीरुन्न्यग्रोधौ एतौ धान्तौ निपात्येते । वीरुत् , न्यग्रोधः ॥१२१॥

*[1]इत्याचार्यश्री**हेमचन्द्र**विरचितायां

**सिद्धहेमचन्द्रा**भिधानस्वोपज्ञशब्दानुशासनलघुवृत्तौ*

चतुर्थस्याध्यायस्य प्रथमः पादः स[2]माप्तः ॥४।१॥

कुर्वन् **कुन्तल**शैथिल्यं **मध्य**देशं निपीडयन् ।
**अङ्गे**षु विलसन् भूमेर्भर्ताऽभूद् **भीम**पार्थिवः ॥१३॥

---

१. ★ ★ P2, P3, पा१,३, J2 मध्ये नास्ति ॥ २. **समाप्तः** J2, P2,3, पा३,५ मध्ये एव ॥

## [द्वितीयः पादः]

### आत् सन्ध्यक्षरस्य ।४।२।१।।

धातोः सन्ध्यक्षरान्तस्याऽऽत् स्यात् । संव्याता , सुग्लः । धातोरित्येव-गोभ्याम् ।।१।।

### न शिति ।४।२।२।।

सन्ध्यक्षरान्तस्य शिति विषयभूते आत् न स्यात् । संव्ययति ।।२।।

### व्यस्थव्-णवि ।४।२।३।।

व्यः थवि णवि च विषये आन्न स्यात् । संविव्याय , संविव्ययिथ ।।३।।

### स्फुर-स्फुलोर्घञि ।४।२।४।।

अनयोः सन्ध्यक्षरस्य घञि आत् स्यात् । विस्फारः , विस्फालः ।।४।।

### वाऽपगुरो णमि ।४।२।५।।

अपपूर्वस्य गुरेः सन्ध्यक्षरस्य णम्याद्वा स्यात् । अपगारमपगारम् , अपगोरमपगोरम् ।।५।।

### दीङः सनि वा ।४।२।६।।

दीङः सन्याद्वा स्यात् । दिदासते , दिदीषते ।।६।।

### यबक्ङिति ।४।२।७।।

दीङो यपि , अक्ङिति च विषये आत् स्यात् । उपदाय , उपदायो वर्त्तते ।।७।।

### मिग्-मीगोऽखलचलि ।४।२।८।।

अनयोर्यपि खल्-अच्-अल्वर्जेऽक्ङिति च विषये आत् स्यात् ।निमाय , निमाता ; प्रमाय , प्रमाता । अखलचलीति किम् ? ईषन्निमयः , दुष्प्रमयः , मयः , आमयः ; निमयः ; प्रमयः ।।८।।

### लीङ्-लिनोर्वा ।४।२।९।।

अनयोर्यपि खल्-अच्-अल्वर्जेऽक्ङिति च विषये आद्वा स्यात् । विलाय , विलीय ; विलाता , विलेता । अखलचलीत्येव-ईषद्विलयः , विलयः , विलयोऽस्ति ।।९।।

**णौ क्री-जीङः ।४।२।१०॥**

एषां णौ आत् स्यात् । क्रापयति , जापयति , अध्यापयति ॥१०॥

**सिध्यतेरज्ञाने ।४।२।११॥**

अज्ञानार्थस्य सिध्यतेर्णौ स्वरस्याऽऽत् स्यात् । मन्त्रं साधयति । अज्ञान इति किम् ? तपस्तापसं सेधयति ॥११॥

**चि-स्फुरोर्नवा ।४।२।१२॥**

चिस्फुरोर्णौ स्वरस्याऽऽद्वा स्यात् । चापयति , चाययति ; स्फारयति , स्फोरयति ॥१२॥

**वियः प्रजने ।४।२।१३॥**

गर्भाऽऽधानार्थस्य वियो णौ वा आत् स्यात् । पुरो वातो गाः प्रवापयति , प्रवाययति ॥१३॥

**रुहः पः ।४।२।१४॥**

रुहेर्णौ प् वा स्यात् । रोपयति रोहयति वा तरुम् ॥१४॥

**लियो नोऽन्तः स्नेहद्रवे ।४।२।१५॥**

लियः स्नेहद्रवे गम्ये णौ न् अन्तो वा स्यात् । घृतं[1] विलीनयति वि[2]लाययति वा । स्नेहद्रव इति किम् ? अयो विलाययति ॥१५॥

**लो लः ।४।२।१६॥**

लारूपस्य णौ स्नेहद्रवे गम्ये ल् अन्तो वा स्यात् । घृतं विलालयति विलापयति वा । स्नेहद्रव इत्येव-जटाभिरालापयते ॥१६॥

**पातेः ।४।२।१७॥**

पातेर्णौ ल् अन्तः स्यात् । पालयति ॥१७॥

**धूग्-प्रीगोर्नः ।४।२।१८॥**

धूग्-प्रीगोर्णौ न् अन्तः स्यात् । धूनयति , प्रीणयति ॥१८॥

**वो विधूनने जः ।४।२।१९॥**

वा इत्यस्य विधूननेऽर्थे णौ ज्[3] अन्तः स्यात् । पक्षेण उपवाजयति । विधूनन

१. विलीनयति घृतं पा२,४,५, P2 ॥ २. विलालयति पा१,५ ॥ ३. जोन्तः पा२,४ ॥

इति किम् ? उच्चैः केशानावापयति ॥१९॥

**पा-शा-छा-सा-वे-व्या-ह्वो यः ।४।२।२०॥**

एषां णौ य् अन्तः स्यात् । पाययति , शाययति , अवच्छाययति , अवसाययति , वाययति , व्याययति , ह्वाययति ॥२०॥

**अर्त्ति-री-व्ली-ह्री-क्नूयि-क्ष्माय्यातां पुः ।४।२।२१॥**

एषामादन्तानां च णौ पुरन्तः स्यात् ।अर्पयति , रेपयति , व्लेपयति , ह्रेपयति , क्नोपयति , क्ष्मापयति , दापयति , सत्यापयति ॥२१॥

**स्फाय् स्फाव् ।४।२।२२॥**

णौ स्फायः स्फाव् स्यात् । स्फावयति ॥२२॥

**शदिरगतौ शात् ।४।२।२३॥**

शदिरगत्यर्थो णौ शात् स्यात् । पुष्पाणि शातयति । अगताविति किम् ? गाः शादयति ॥२३॥

**घटादेर्ह्रस्वो दीर्घस्तु वा ञि-णम्परे ।४।२।२४॥**

घटादीनां णौ ह्रस्वः स्यात् , ञि-णम्परे तु णौ वा दीर्घः । घटयति ; अघाटि , अघटि ; घाटंघाटम् , घटंघटम् । व्यथयति ; अव्याथि , अव्यथि ; व्याथंव्याथम् , व्यथंव्यथम् ॥२४॥

**कगे-वनू-जनै-जॄष्-क्नस्-रञ्जः ।४।२।२५॥**

एषां णौ ह्रस्वः स्यात् , ञि-णम्परे तु णौ वा दीर्घः । कगयति ; अकागि , अकगि ; कागंकागम् , कगंकगम् । उपवनयति ; उपावानि , उपावनि ; उपवानमुपवानम् , उपवनमुपवनम् । जनयति ; अजानि , अजनि ; जानंजानम् , जनंजनम् । जरयति ; अजारि , अजरि ; जारंजारम् , जरंजरम् । क्नसयति ; अक्नासि , अक्नसि ; क्नासंक्नासम् , क्नसंक्नसम् । रजयति ; अराजि , अरजि ; राजंराजम् , रजंरजम् ॥२५॥

**अमोऽकम्यमि-चमः ।४।२।२६॥**

कम्यमि-चमिवर्जस्याऽमन्तस्य णौ ह्रस्वः स्यात् , ञिणम्परे तु णौ वा दीर्घः । रमयति ; अरामि , अरमि ; रामंरामम् , रमंरमम् । अकम्यमिचम इति किम् ? कामयते , अकामि , कामंकामम् ; आमयति , आचामयति ॥२६॥

## पर्यपात् स्खदः ।४।२।२७॥

आभ्यामेव परस्य स्खदेर्णौ ह्रस्वः स्यात् , ञिणम्परे तु वा दीर्घः । परिस्खदयति ; पर्यस्खादि , पर्यस्खदि ; परिस्खादंपरिस्खादम् , परिस्खदंपरिस्खदम् । अपस्खदयति ; अपास्खादि , अपास्खदि ; अपस्खादमपस्खादम् , अपस्खदमपस्खदम् । पर्यपादिति किम् ? प्रस्खादयति ॥२७॥

## शमोऽदर्शने ।४।२।२८॥

अदर्शनार्थस्य शमेर्णौ ह्रस्वः स्यात् , ञिणम्परे तु वा दीर्घः । शमयति रोगम् ; अशामि , अशमि ; शामंशामम् , शमंशमम् । अदर्शन इति किम् ? निशामयति रूपम् ॥२८॥

## यमोऽपरिवेषणे णिचि च ।४।२।२९॥

अपरिवेषणार्थस्य यमो णिचि अणिचि च णौ ह्रस्वः स्यात् , ञिणम्परे तु वा दीर्घः । यमयति ; अयामि , अयमि ; यामंयामम् , यमंयमम् । अपरिवेषण इति किम् ? यामयत्यतिथिम् ॥२९॥

## मारण-तोषण-निशाने ज्ञश्च ।४।२।३०॥

एष्वर्थेषु ज्ञो णिचि अणिचि च णौ ह्रस्वः स्यात् , ञिणम्परे तु वा दीर्घः । संज्ञपयति पशुम् , विज्ञपयति राजानम् , प्रज्ञपयति शस्त्रम् । अज्ञापि , अज्ञपि ; ज्ञापंज्ञापम् , ज्ञपंज्ञपम् ॥३०॥

## चहणः शाठ्ये ।४।२।३१॥

चहेश्चुरादेः शाठ्यार्थस्य णिचि णौ ह्रस्वः स्यात् , ञिणम्परे तु वा दीर्घः । चहयति ; अचाहि , अचहि ; चाहंचाहम् , चहंचहम् । शाठ्य इति किम् ? अचहि[1] ॥३१॥

## ज्वल-ह्वल-ह्मल-ग्ला-स्ना-वनू-वम-नमोऽनुपसर्गस्य वा ।४।२।३२॥

एषामनुपसर्गाणां णौ ह्रस्वो वा स्यात् । ज्वलयति , ज्वालयति ; ह्वलयति , ह्वालयति , ह्मलयति , ह्मालयति ; ग्लपयति , ग्लापयति ; स्नपयति , स्नापयति ; वनयति , वानयति ; वमयति , वामयति ; नमयति , नामयति । अनुपसर्गस्येति किम् ? प्रज्वलयति , प्रह्वलयति , प्रह्मलयति , प्रग्लापयति

१. **अचाहि** पा२,३,५, P2, P1सं, J3 ॥

, प्रस्नापयति ,प्रवनयति , प्रवमयति , प्रणमयति ॥३२॥

**छदेरिस्-मन्-त्रट्-क्वौ ।४।२।३३॥**

छदेरिस्-मन्-त्रट्-क्विप्परे णौ ह्रस्वः स्यात् । छदिः , छद्म , छत्री , उपच्छत् ॥३३॥

**एकोपसर्गस्य च घे ।४।२।३४॥**

एकोपसर्गस्यानुपसर्गस्य च छदेर्घपरे णौ ह्रस्वः स्यात् । प्रच्छदः , छदः । एकोपसर्गस्य चेति किम् ? समुपच्छादः ॥३४॥

**उपान्त्यस्याऽसमानलोपि-शास्वृदितो ङे ।४।२।३५॥**

समानलोपि-शास्वृदिद्वर्जस्य धातोरुपान्त्यस्य ङपरे णौ ह्रस्वः स्यात् । अपीपचत् , मा भवान् अटिटत् । असमानलोपि-शास्वृदित इति किम् ? अत्यरराजत् , अशशासत् , मा भवान् ओणिणत् ॥३५॥

**भ्राज-भास-भाष-दीप-पीड-जीव-मील-कण-रण-वण-भण-श्रण-ह्वे-हेठ-लुट-लुप-लपां नवा ।४।२।३६॥**

एषां ङपरे णावुपान्त्यस्य ह्रस्वो वा स्यात् । अबिभ्रजत् , अबभ्राजत् ; अबीभसत् , अबभासत् ; अबीभषत् , अबभाषत् ; अदीदिपत् , अदिदीपत् ; अपीपिडत् , अपिपीडत् ; अजीजिवत् , अजिजीवत् ; अमीमिलत् , अमिमीलत् ; अचीकणत् , अचकाणत् ; अरिरणत् , अरराणत् ; अवीवणत् , अववाणत् ; अबीभणत् , अबभाणत् ; अशिश्रणत् , अशश्राणत् ; अजूहवत् , अजुहावत् ; अजीहिठत् , अजिहेठत् ; अलूलुटत् , अलुलोटत् ; अलूलुपत् , अलुलोपत् ; अलीलपत् , अललापत् ॥३६॥

**ऋद्वर्णस्य ।४।२।३७॥**

उपान्त्यस्य ऋवर्णस्य ङपरे णौ वा ऋः स्यात् । अवीवृतत् , अववर्त्तत् ; अचीकृतत् , अचिकीर्त्तत् ॥३७॥

**जिघ्रतेरिः ।४।२।३८॥**

घ्र उपान्त्यस्य ङपरे णौ इर्वा स्यात् । अजिघ्रिपत् , अजिघ्रपत् ॥३८॥

**तिष्ठतेः ।४।२।३९॥**

स्थ उपान्त्यस्य ङपरे णौ इः स्यात् । अतिष्ठिपत् ॥३९॥

## ऊद् दुषो णौ ।४।२।४०॥

दुषेरुपान्त्यस्य णौ ऊत् स्यात् । दूषयति ॥४०॥

## चित्ते वा ।४।२।४१॥

चित्तकर्त्तृकस्य दुषेरुपान्त्यस्य णौ परे ऊद् वा स्यात् । मनो दूषयति , मनो दोषयति मैत्रः ॥४१॥

## गोहः स्वरे ।४।२।४२॥

कृतगुणस्य गुहेः स्वरादावुपान्त्यस्योत् स्यात् । निगूहति । गोह इति किम् ? निजुगुहुः ॥४२॥

## भुवो वः परोक्षा-ऽद्यतन्योः ।४।२।४३॥

भुवो वन्तस्योपान्त्यस्य परोक्षा-ऽद्यतन्योरूत् स्यात् । बभूव , अभूवम्[1] । व इति किम् ? बभूवान् , अभूत् ॥४३॥

## गम-हन-जन-खन-घसः स्वरेऽनङि क्ङिति लुक् ।४।२।४४॥

एषामुपान्त्यस्याङ्वर्जे स्वरादौ क्ङिति परे लुक् स्यात् । जग्मुः , जघ्नुः , जज्ञे , चख्नुः , जक्षुः । स्वर इति किम् ? गम्यते । अनङीति किम् ? अगमत् । क्ङिति किम् ? गमनम् ॥४४॥

## नो व्यञ्जनस्याऽनुदितः ।४।२।४५॥

व्यञ्जनान्तस्याऽनुदितो धातोरुपान्त्यस्य नः क्ङिति परे लुक् स्यात् । स्रस्तः , सनीस्रस्यते । व्यञ्जनस्येति किम् ? नीयते । अनुदित इति किम् ? नानन्द्यते ॥४५॥

## अञ्चोऽनर्चायाम् ।४।२।४६॥

अनर्चार्थस्यैवाञ्चेरुपान्त्यनो लुक् स्यात् । उदक्तमुदकं कूपात् । अनर्चायामिति किम् ? अञ्चिता गुरवः ॥४६॥

## लङ्गि-कम्प्योरुपतापा-ऽङ्गविकृत्योः ।४।२।४७॥

अनयोरुपान्त्यनो यथासङ्ख्यमुपतापेऽङ्गविकारे चार्थे क्ङिति परे लुक् स्यात् । विलगितः , विकपितः । उपतापाङ्गविकृत्योरिति किम् ? विलङ्गितः , विकम्पितः ॥४७॥

---

१. अभूवन् पा२ ॥

**भञ्जेर्णौ वा ।४।२।४८।।**

भञ्जेरुपान्त्यनो ञौ लुग् वा स्यात् । अभाजि , अभञ्जि ।।४८।।

**दंश-सञ्जः शवि ।४।२।४९।।**

अनयोरुपान्त्यनः शवि लुक् स्यात् । दशति , सजति ।।४९।।

**अकट्-घिनोश्च रञ्जेः ।४।२।५०।।**

रञ्जेरकटि घिनणि शवि चोपान्त्यनो लुक् स्यात् । रजकः , रागी , रजति ।।५०।।

**णौ मृगरमणे ।४।२।५१।।**

रञ्जेरुपान्त्यनो णौ मृगाणां रमणेऽर्थे लुक् स्यात् । रजयति मृगं व्याधः । मृगरमण इति किम् ? रञ्जयति रजको वस्त्रम् ।।५१।।

**घञि भाव-करणे ।४।२।५२।।**

रञ्जेरुपान्त्यनो भावकरणार्थे घञि लुक् स्यात् । रागः । भाव-करण इति किम् ? आधारे -रङ्गः ।।५२।।

**स्यदो जवे ।४।२।५३।।**

स्यन्देर्घञि नलुग्-वृद्धयभावौ निपात्येते वेगेऽर्थे । गोस्यदः । जव इति किम् ? घृतस्यन्दः ।।५३।।

**दशना-ऽवोदैधौद्म-प्रश्रथ-हिमश्रथम् ।४।२।५४।।**

एते नलुगादौ कृते निपात्यन्ते । दशनम् , अवोदः , एधः , ओद्मं[1] , प्रश्रथः , हिमश्रथः ।।५४।।

**यमि-रमि-नमि-गमि-हनि-मनि-वनति-तनादेर्धुटि क्ङिति ।४।२।५५।।**

एषां तनादीनां च धुडादौ क्ङिति लुक् स्यात् । यतः , रत्वा , नतिः , गतः , हतः , मतः , वतिः , ततः , क्षतः । धुटीति किम् ? यम्यते । क्ङितीति किम् ? यन्ता ।।५५।।

**यपि ।४।२।५६।।**

यम्यादीनां यपि लुक् स्यात् । प्रहत्य , प्रमत्य , प्रवत्य , प्रतत्य , प्रसत्य ।।५६।।

---

१. **ओद्मः** P3मू०, पा३, पासं४ ।।

## वा मः ।४।२।५७।।

यम्यादीनां मन्तानां यपि लुग् वा स्यात् । प्रयत्य , प्रयम्य ; विरत्य , विरम्य ; प्रणत्य , प्रणम्य ; आगत्य , आगम्य ।।५७।।

## गमां क्वौ ।४।२।५८।।

एषां गमादीनां यथादर्शनं क्वौ क्ङिति लुक् स्यात् । जनगत् , संयत् , परीतत् , सुमत् , सुवत् ।।५८।।

## न तिकि दीर्घश्च ।४।२।५९।।

एषां तिकि लुग् दीर्घश्च न स्यात् । यन्तिः , रन्तिः , नन्तिः , गन्तिः , हन्तिः , मन्तिः , वन्तिः , तन्तिः ।।५९।।

## आः खनि-सनि-जनः ।४।२।६०।।

एषां धुडादौ क्ङिति आः स्यात् । खातः , सातः , जातः , जातिः । क्ङितीत्येव-चङ्खन्ति । धुटीत्येव-जनित्वा ।।६०।।

## सनि ।४।२।६१।।

एषां धुडादौ सनि आः स्यात् । सिषासति । धुटीत्येव-सिसनिषति ।।६१।।

## ये नवा ।४।२।६२।।

एषां ये क्ङिति आ वा स्यात् । खायते , खन्यते ; चाखायते , चङ्खन्यते ; सायते , सन्यते ; प्रजाय , प्रजन्य । क्ङितीत्येव-सान्यम् ।।६२।।

## तनः क्ये ।४।२।६३।।

तनः क्ये आ वा स्यात् । तायते , तन्यते ।।६३।।

## तौ सनस्तिकि ।४।२।६४।।

सनस्तिकि तौ लुगातौ वा स्याताम् । सतिः , सातिः , सन्तिः ।।६४।।

## वन्याङ् पञ्चमस्य ।४।२।६५।।

पञ्चमस्य वनि आङ् स्यात् । विजावा , घ्वावा ।।६५।।

## अपाच्चायश्चिः क्तौ ।४।२।६६।।

अपपूर्वस्य चायतेः क्तौ चिः स्यात् । अपचितिः ।।६६।।

## ह्लादो ह्लद् क्तयोश्च ।४।२।६७।।

ह्लादेः क्त-क्तवतोः क्तौ च ह्लद् स्यात् । ह्लन्नः , ह्लन्नवान् , ह्लत्तिः ॥६७॥

**ॠ-ल्वादेरेषां तो नोऽप्रः ।४।२।६८॥**

पूवर्जाद् ॠदन्ताद् ल्वादिभ्यश्च परेषां क्ति-क्त-क्तवतूनां तो नः स्यात् । तीर्णिः तीर्णः , तीर्णवान् ; लूनिः , लूनः , लूनवान् ; धूनिः , धूनः , धूनवान् । अप्र इति किम् ? पूर्त्तिः , पूर्त्तः , पूर्त्तवान् ॥६८॥

**रदादमूर्च्छ-मदः क्तयोर्दस्य च ।४।२।६९॥**

मूर्च्छि-मदिवर्जाद्[1] रदन्तात्[2] परस्य क्तयोस्तः तद्योगे धातुदश्च न् स्यात् । पूर्णः ; पूर्णवान् ; भिन्नः , भिन्नवान् । अमूर्च्छमद इति किम् ? मूर्त्तः , मत्तः । रदात्तस्येति[3] किम् ? चरितम् , मुदितम् ॥६९॥

**सूयत्याद्योदितः ।४।२।७०॥**

सूयत्यादिभ्यो नवभ्य ओदिद्भ्यश्च परस्य क्तयोस्तो न् स्यात् । सूनः , सूनवान् ; दूनः , दूनवान् ; लग्नः , लग्नवान् ॥७०॥

**व्यञ्जनान्तस्थाऽऽतोख्या-ध्यः ।४।२।७१॥**

ख्या-ध्यावर्जस्य धातोर्यद् व्यञ्जनं तस्मात् परा याऽन्तस्था , तस्याः परो य आः , तस्मात् परस्य क्तयोस्तो न् स्यात् । स्त्यानः , स्त्यानवान् । व्यञ्जनेति किम् ? यातः । अन्तस्थेति किम् ? स्नातः । आत इति किम् ? च्युतः । धातोर्व्यञ्जनेति किम् ? निर्यातः । अख्याध्य इति किम् ? ख्यातः , ध्यातः । आतः परस्येति किम् ? दरिद्रितः ॥७१॥

**पू-दिव्यञ्चेर्नाशा-ऽद्यूता-ऽनपादाने ।४।२।७२॥**

एभ्यो यथासङ्ख्यं नाशाद्यर्थेभ्यः परस्य क्तयोस्तो न् स्यात् । पूना यवाः , आद्यूनः , समक्नौ पक्षौ । नाशा-ऽद्यूता-ऽनपादान इति किम् ? पूतम् , द्यूतम् , उदक्तं जलम् ॥७२॥

**सेर्ग्रासे कर्म्मकर्त्तरि ।४।२।७३॥**

सेः परस्य क्तयोस्तो ग्रासे कर्मकर्त्तरि नः स्यात् । सिनो ग्रासः स्वयमेव । कर्म्मकर्त्तरीति किम् ? सितो ग्रासो मैत्रेण ॥७३॥

**क्षेः क्षी चाऽध्यार्थे ।४।२।७४॥**

१. °मद° पा३ पामू.२ पामू.४ ॥२ रदन्तात् P2 पा२, ५, पामू.४ ॥३ रदांत° पा१ J. ॥

घ्यणोऽर्थौ भावकर्म्मणी , ततोऽन्यस्मिन्नर्थे क्तयोस्तः क्षेः परस्य न् स्यात् , तद्योगे क्षेः क्षीश्च । क्षीणः , क्षीणवान् मैत्रः । अघ्यार्थे इति किम् ? क्षितमस्य ॥७४॥

**वाऽऽक्रोश-दैन्ये ।४।२।७५॥**

आक्रोशे दैन्ये च गम्ये क्षेः परस्याऽघ्यार्थे क्तयोस्तो न् वा स्यात् , तद्योगे क्षेः[1] क्षीश्च । क्षीणाऽऽयुः क्षिताऽऽयुर्जाल्मः । क्षीणकः , क्षितकस्तपस्वी ॥७५॥

**ऋ-ह्री-घ्रा-ध्रा-त्रोन्द-नुद-विन्तेर्वा ।४।२।७६॥**

एभ्यः परस्य क्तयोस्तो न् वा स्यात् । ऋणम् , ऋतम् ; ह्रीणः , ह्रीणवान् , ह्रीतः ; ह्रीतवान् ; घ्राणः , घ्रातः ; ध्राणः , ध्रातः ; त्राणः , त्रातः ; समुन्नः , समुत्तः ; नुन्नः , नुत्तः ; विन्नः , वित्तः ॥७६॥

**दु-गोरू[2] च ।४।२।७७॥**

दु-गुभ्यां परस्य क्तयोस्तो न् स्यात् , तद्योगे दुग्वोरूश्च । दूनः , दूनवान् ; गूनः , गूनवान् ॥७७॥

**क्षै-शुषि-पचो म-क-वम् ।४।२।७८॥**

एभ्यः परस्य क्तयोस्तो यथासङ्ख्यं म-क-वाः स्युः । क्षामः , क्षामवान् ; शुष्कः , शुष्कवान् ; पक्वः , पक्ववान् ॥७८॥

**निर्वाणमवाते ।४।२।७९॥**

अवाते कर्त्तरि निर्पूर्वाद् वातेः परस्य क्ततो न् निपात्यते । निर्वाणो मुनिः । अवात इति किम् ? निर्वातो वातः ॥७९॥

**अनुपसर्गाः क्षीबोल्लाघ-कृश-परिकृश-फुल्लोत्फुल्ल-संफुल्लाः ।४।२।८०॥**

अनुपसर्गाः क्तान्ता एते निपात्यन्ते । क्षीबः , उल्लाघः , कृशः , परिकृशः , फुल्लः , उत्फुल्लः , संफुल्लः । अनुपसर्गा इति किम् ? प्रक्षीबितः ॥८०॥

**भित्तं शकलम् ।४।२।८१॥**

भिदेः परस्य क्तस्य नत्वाभावो निपात्यते , शकलपर्यायश्चेत् । भित्तं शकलमित्यर्थः । शकलमिति किम् ? भिन्नं भित्तम् ॥८१॥

**वित्तं धन-प्रतीतम् ।४।२।८२॥**

---

१. क्षेः पासं२ विना नास्ति ॥ २. रूञ्च पा२,५ । रूत् पामू० १ ॥

विन्दतेः परस्य क्तस्य नत्वाभावो निपात्यते , धन-प्रतीतयोः पर्यायश्चेत् । वित्तं धनम् , वित्तः प्रतीतः । धन-प्रतीतमिति किम् ? विन्नः ॥८२॥

**हु-धुटो हेर्धिः ।४।२।८३॥**

होर्धुडन्ताच्च परस्य हेर्धिः स्यात् । जुहुधि , विद्धि ॥८३॥

**शासस्-हनः शाध्येधि-जहि ।४।२।८४॥**

शास्-अस्-हनां ह्यन्तानां यथासंख्यं शाध्येधि-जहयः स्युः । शाधि , एधि , जहि ॥८४॥

**अतः प्रत्ययाल्लुक् ।४।२।८५॥**

धातोः परो योऽदन्तः प्रत्ययस्ततः परस्य हेर्लुक् स्यात् । दीव्य । अत इति किम् ? राध्नुहि । प्रत्ययादिति किम् ? पापहि ॥८५॥

**असंयोगादोः ।४।२।८६॥**

असंयोगात् परो य उस्तदन्तात् प्रत्ययात् परस्य हेर्लुक् स्यात् । सुनु । असंयोगादिति किम् ? अक्ष्णुहि । ओरिति किम् ? क्रीणीहि ॥८६॥

**वम्यविति वा ।४।२।८७॥**

असंयोगात् परो य उस्तदन्तस्य प्रत्ययस्य लुग् वा स्यात् , वमादौ अविति परे । सुन्वः , सुनुवः ; सुन्मः , सुनुमः । अवितीति किम् ? सुनोमि । असंयोगादित्येव-तक्ष्णुवः ॥८७॥

**कृगो यि च ।४।२।८८॥**

कृगः परस्योतो यादौ वमि चाऽविति लुक् स्यात् । कुर्युः , कुर्वः , कुर्मः ॥८८॥

**अतः शित्युत् ।४।२।८९॥**

शित्यविति य उस्तन्निमित्तस्य कृगोऽस्य उः स्यात् । कुरु । अवितीत्येव-करोति ॥८९॥

**श्ना-ऽस्त्योर्लुक् ।४।२।९०॥**

श्नस्य अस्तेश्चाऽस्य शित्यविति लुक् स्यात् । रुन्धः , स्तः । अत इत्येव-आस्ताम् ॥९०॥

**वा द्विषातोऽनः पुस् ।४।२।९१॥**

द्विष आदन्ताच्च परस्य शितोऽवितोऽनः स्थाने वा पुस् स्यात् । अद्विषुः , अद्विषन् ; अयुः , अयान् ॥९१॥

**सिज्-विदोऽभुवः ।४।२।९२॥**

सिच्प्रत्ययाद् विदश्च धातोः परस्य अनः पुस् स्यात् , न चेद् भुवः परः सिच् स्यात् । अकार्षुः , अविदुः । अभुव इति किम् ? अभूवन् ॥९२॥

**द्व्युक्त-जक्षपञ्चतः ।४।२।९३॥**

कृतद्वित्वाद् जक्षपञ्चकाच्च परस्य शितोऽवितोऽनः पुस् स्यात् । अजुहवुः , अजक्षुः , अदरिद्रुः , अजागरुः , अचकासुः , अशासुः ॥९३॥

**अन्तो नो लुक् ।४।२।९४॥**

द्व्युक्त-जक्षपञ्चकात् परस्य शितोऽवितोऽन्तो नो लुक् स्यात् । जुह्वति , जुह्वत्[१] ; जक्षति , जक्षत्[२] ; दरिद्रति , दरिद्रत्[३] ॥९४॥

**शौ वा ।४।२।९५॥**

द्व्युक्त-जक्षपञ्चकात् परस्याऽन्तो नः शिविषये लुग् वा स्यात् । ददति ददन्ति कुलानि ; जक्षति , जक्षन्ति ; दरिद्रति , दरिद्रन्ति ॥९५॥

**श्नश्चाऽऽतः ।४।२।९६॥**

द्व्युक्त-जक्षपञ्चतः श्नश्च शित्यवित्यातो लुक् स्यात् । मिमते , दरिद्रति , क्रीणन्ति । अवितीत्येव-अजहाम् , अक्रीणाम् ॥९६॥

**एषामी व्यञ्जनेऽदः ।४।२।९७॥**

द्व्युक्त-जक्षपञ्चच्छ्नामातः शित्यविति व्यञ्जनादावी स्यात् , न तु दासंज्ञस्य । मिमीते , लुनीतः । व्यञ्जन इति किम् ? मिमते । अद इति किम् ? दत्तः , धत्तः ॥९७॥

**इर्दरिद्रः ।४।२।९८॥**

दरिद्रो व्यञ्जनादौ शित्यवित्यात इः स्यात् । दरिद्रितः । व्यञ्जन इत्येव-दरिद्रति ॥९८॥

**भियो नवा ।४।२।९९॥**

१. जुह्वतु पा२ पासं१ P1 J3सं ॥ २. जक्षतु पा२ पासं१ J3सं ॥ ३. दरिद्रतु पा२ पा१ J3सं ॥

भियो व्यञ्जनादौ शित्यविति इर्वा स्यात् । बिभितः , बिभीतः ॥९९॥

**हाकः ।४।२।१००॥**

हाको व्यञ्जनादौ शित्यविति आत इर्वा स्यात् । जहितः , जहीतः ॥१००॥

**आ च हौ ।४।२।१०१॥**

हाको हौ आत् इश्च वा स्यात् । जहाहि , जहिहि , जहीहि ॥१०१॥

**यि लुक् ।४।२।१०२॥**

यादौ शिति हाक आ लुक् स्यात् । जह्यात् ॥१०२॥

**ओतः श्ये ।४।२।१०३॥**

धातोरोतः श्ये लुक् स्यात् । अवद्यति । श्य इति किम् ? गवति ॥१०३॥

**जा ज्ञा-जनोऽत्यादौ ।४।२।१०४॥**

ज्ञा-जनोः शिति जाः स्यात् , न त्वनन्तरे तिवादौ । जानाति , जायते । अत्यादाविति किम् ? जाज्ञाति । जज्ञन्ति ॥१०४॥

**प्वादेर्ह्रस्वः ।४।२।१०५॥**

प्वादेः शिति अत्यादौ ह्रस्वः स्यात् । पुनाति , लुनाति । प्वादेरिति किम् ? व्रीणाति ॥१०५॥

**गमिषद्यमश्छः ।४।२।१०६॥**

एषां शित्यत्यादौ छः स्यात् । गच्छति , इच्छति , आयच्छते । अत्यादाविति किम् ? जङ्गन्ति ॥१०६॥

**वेगे सर्त्तेर्धाव् ।४।२।१०७॥**

सर्त्तेर्वेगे गम्ये शिति धाव् स्यात् , अत्यादौ । धावति । वेग इति किम् ? धर्ममनुसरति ॥१०७॥

**श्रौति-कृवु-धिवु-पा-घ्रा-ध्मा-स्था-म्ना-दाम्-दृश्यर्त्ति-शद-सदः शृ-कृ-धि-पिब-जिघ्र-धम-तिष्ठ-मन-यच्छ-पश्यर्च्छ-शीय-सीदम् ।४।२।१०८॥**

एषां शित्यत्यादौ यथासंख्यम् श्रादयः स्युः । शृणु , कृणु , धिनु , पिब

, जिघ्र , धम , तिष्ठ , मन[1] , प्रयच्छ , पश्य , ऋच्छ , शीयते , सीद ॥१०८॥

**क्रमो दीर्घः परस्मै ।४।२।१०९॥**

क्रमेः परस्मैपदनिमित्ते शिति दीर्घः स्यात् , अत्यादौ । क्राम , क्राम्यति । परस्मैपद इति किम् ? आक्रमते सूर्यः ॥१०९॥

**ष्ठिवू-क्लम्वाऽऽचमः ।४।२।११०॥**

एषां शित्यत्यादौ दीर्घः स्यात् । ष्ठीव , क्लाम , आचाम । आङिति किम् ? चम ॥११०॥

**शमूसप्तकस्य श्ये ।४।२।१११॥**

शमादीनां सप्तानां श्ये दीर्घः स्यात् । शाम्य , दाम्य , ताम्य , श्राम्य , भ्राम्य , क्षाम्य , माद्य । श्ये इति किम् ? शंशन्ति ॥१११॥

**ष्ठिव्-सिवोऽनटि वा ।४।२।११२॥**

ष्ठिव्-सिवोरनटि दीर्घो वा स्यात् । निष्ठीवनम् , निष्ठेवनम् ; सीवनम् , सेवनम् ॥११२॥

**म-व्यस्याः ।४।२।११३॥**

धातोर्विहिते मादौ वादौ चाऽत आ दीर्घः स्यात् । पचामि , पचावः ॥११३॥

**अनतोऽन्तोऽदात्मने ।४।२।११४॥**

अनतः परस्याऽऽत्मनेपदस्थस्याऽन्तोऽत् स्यात् । चिन्वते । आत्मनेपद इति किम् ? चिन्वन्ति । अनत इति किम् ? पचन्ते ॥११४॥

**शीङो रत् ।४।२।११५॥**

शीङः परस्याऽऽत्मनेपदस्थस्याऽन्तो रत् स्यात् । शेरते ॥११५॥

**वेत्तेर्नवा ।४।२।११६॥**

वेत्तेः परस्यात्मनेपदस्थस्याऽन्तो रद् वा स्यात् । संविद्रते , संविदते ॥११६॥

**तिवां णवः परस्मै ।४।२।११७॥**

वेत्तेः परेषां परस्मैपदानां तिवादीनां परस्मैपदान्येव णवादयो नव यथासंख्यं

१. मन यच्छ J3 ॥

वा स्युः । वेद , विदतुः , विदुः ; वेत्थ , विदथुः , विद ; वेद , विद्व , विद्म । पक्षे -वेत्तीत्यादि ॥११७॥

**ब्रूगः पञ्चानां पञ्चाऽऽहश्च ।४।२।११८॥**

ब्रूगः परेषां तिवादीनां पञ्चानां यथासंख्यं पञ्च णवादयो वा स्युः , तद्योगे ब्रूग आह् च । आह , आहतुः , आहुः , आत्थ , आहथुः । पक्षे -ब्रवीतीत्यादि ॥११८॥

**आशिषि तु-ह्योस्तातङ् ।४।२।११९॥**

आशीरर्थयोस्तुह्योस्तातङ् वा स्यात् । जीवतात् , जीवतु ; जीवतात् , जीव त्वम्[१] । आशिषीति किम् ? जीवतु ॥११९॥

**आतो णव औः ।४।२।१२०॥**

आतः परस्य णव औः स्यात् । पपौ ॥१२०॥

**आतामाते-आथामाथे आदिः ।४।२।१२१॥**

आत् परेषामेषाम् आत इः स्यात् । पचेताम् , पचेते , पचेथाम् , पचेथे । आदिति किम् ? मिमाताम् ॥१२१॥

**यः सप्तम्याः ।४।२।१२२॥**

आत् परस्य सप्तम्या याशब्दस्येः स्यात् । पचेत् , पचेः ॥१२२॥

**याम्-युसोरियमियुसौ ।४।२।१२३॥**

आत् परयोर्याम्-युसोर्यथासंख्यमियमियुसौ स्याताम् । पचेयम् , पचेयुः ॥१२३॥

[इत्याचार्यश्री**हेमचन्द्र**विरचितायां **सिद्धहेमचन्द्रा**भिधानस्वोपज्ञशब्दानुशासन-लघुवृत्तौ] चतुर्थस्याध्यायस्य द्वितीयः पादः समाप्तः[२] ॥४।२॥

श्री**भीम**पृतनोत्खातरजोभिर्वैरिभूभुजाम् ।
अहो! चित्रमवर्धन्त ललाटे जलबिन्दवः ॥१४॥

---

१. J3 मध्ये इतः परं **'नन्दतात् नन्द त्वम्'** इत्यधिकः पाठः ॥ २. **समाप्तः** पा२,३,४,५, J2,3, P3 विना नास्ति ॥

## [तृतीयः पादः ]

### नामिनो गुणोऽक्ङिति ।४।३।१।।

नाम्यन्तस्य धातोः क्ङिद्वर्जे प्रत्यये गुणः स्यात् । चेता । अक्ङितीति किम् ? युतः ।।१।।

### उ-श्नोः ।४।३।२।।

धातोरुश्नोः प्रत्यययोरक्ङिति गुणः स्यात् । तनोति , सुनोति ।।२।।

### पुस्-पौ ।४।३।३।।

नाम्यन्तस्य धातोः पुसि पौ च गुणः स्यात् । ऐयरुः , अर्पयति ।।३।।

### लघोरुपान्त्यस्य ।४।३।४।।

धातोरुपान्त्यस्य नामिनो लघोरक्ङिति गुणः स्यात् । भेत्ता । लघोरिति किम् ? ईहते । उपान्त्यस्येति किम् ? भिनत्ति ।।४।।

### मिदः श्ये ।४।३।५।।

मिदेरुपान्त्यस्य श्ये गुणः स्यात् । मेद्यति ।।५।।

### जागुः किति ।४।३।६।।

जागुः किति गुणः स्यात् । जागरितः ।।६।।

### ऋवर्ण-दृशोऽङि ।४।३।७।।

ऋवर्णान्तानां दृशेश्चाऽङि परे गुणः स्यात् । असरत् , अजरत् , अदर्शत् ।।७।।

### स्कृच्छृतोऽकि परोक्षायाम् ।४।३।८।।

स्कृच्छोःऋृदन्तानां च नामिनः परोक्षायां गुणः स्यात् , न तु कोपलक्षितायां क्वसु-काने । सञ्चस्करुः , आनर्च्छुः , तेरुः । अकीति किम् ? सञ्चस्कृवान् ।।८।।

### संयोगादृदर्त्तेः ।४।३।९।।

संयोगात् परो य ऋत् , तदन्तस्याऽर्त्तेश्च परोक्षायामकि गुणः स्यात् । सस्मरुः , आरुः । संयोगादिति किम् ? चक्रुः ।।९।।

### क्य-यङाऽऽशीर्ये ।४।३।१०।।

संयोगाद् य ऋत् तदन्तस्याऽर्त्तेश्च क्ये यङि आशीर्ये च गुणः स्यात् । स्मर्यते , स्वर्यते[1] , अर्यते ; सास्वर्यते[2] , अरार्यते ; स्मर्यात् , अर्यात् ॥१०॥

## न वृद्धिश्चाऽविति क्ङिल्लोपे ।४।३।११॥

अविति प्रत्यये यः कितो ङितश्च लोपस्तस्मिन् सति गुणो वृद्धिश्च न स्यात् । चेच्यः[3] ॥११॥

## भवतेः सिज्लुपि ।४।३।१२॥

भुवः सिज्लुपि गुणो न स्यात् । अभूत् । सिज्लुपीति किम् ? व्यत्यभविष्ट ॥१२॥

## सूतेः पञ्चम्याम् ।४।३।१३॥

सूतेः पञ्चम्यां गुणो न स्यात् । सुवै ॥१३॥

## द्व्युक्तोपान्त्यस्य शिति स्वरे ।४।३।१४॥

द्व्युक्तस्य धातोरुपान्त्यस्य नामिनः स्वरादौ शिति गुणो न स्यात् । नेनिजानि । उपान्त्यस्येति किम् ? जुहवानि । शितीति किम् ? निनेज ॥१४॥

## ह्विणोरप्विति व्-यौ ।४।३।१५॥

ह्वो[4] रिणश्च नामिनः स्वरादावपिति अविति शिति यथासंख्यं व्यौ स्याताम् । जुह्वति , यन्तु । अप्वितीति किम् ? अजुहवुः , अयानि ॥१५॥

## इको वा ।४।३।१६॥

इकः स्वरादावविति शिति य् वा स्यात् । अधियन्ति , अधीयन्ति ॥१६॥

## कुटादेर्ङिद्वदञ्णित् ।४।३।१७॥

कुटादेः परो ञ्णिद्वर्जप्रत्ययो ङिद्वत् स्यात् । कुटिता , गुता । अञ्णिदिति किम् ? उत्कोटः , उच्चुकोट ॥१७॥

## विजेरिट् ।४।३।१८॥

विजेरिट् ङिद्वत् स्यात् । उद्विजिता । इडिति किम् ? उद्वेजनम् ॥१८॥

## वोर्णोः ।४।३।१९॥

ऊर्णोरिड् वा ङिद्वत् स्यात् । प्रोर्णुविता , प्रोर्णविता ॥१९॥

---

१. स्वर्यते J3 मध्ये नास्ति ॥ २. सास्वर्यते सास्मर्यते अरार्यते J3 ॥ ३. चेच्यः मरीमृजः पा१ मध्ये एव ॥ ४. ह्विणोर्नामिनः J3 ॥

## शिदवित् ।४।३।२०॥

धातोर्विद्वर्जः शित् प्रत्ययो ङिद्वत् स्यात् । इतः , क्रीणाति । अविदिति किम् ? एति । शिदिति किम् ? चेषीष्ट ॥२०॥

## इन्ध्यसंयोगात् परोक्षा किद्वत् ।४।३।२१॥

इन्धेरसंयोगान्ताच्च परा अवित्परोक्षा किद्वत् स्यात् । समीधे , निन्युः । इन्ध्यसंयोगादिति किम् ? सस्रंसे ॥२१॥

## स्वञ्जेर्नवा ।४।३।२२॥

स्वञ्जेः परोक्षा वा किद्वत् स्यात् । सस्वजे , सस्वञ्जे ॥२२॥

## ज-नशो न्युपान्त्ये तादिः क्त्वा ।४।३।२३॥

जन्तात् नशेश्च न्युपान्त्ये सति तादिः क्त्वा किद्वद्वा स्यात् । रक्त्वा , रङ्क्त्वा ; नष्ट्वा , नंष्ट्वा । नीति किम् ? भुक्त्वा । उपान्त्य इति किम् ? निक्त्वा । तादिरिति किम् ? विभज्य ॥२३॥

## ऋत्-तृष-मृष-कृश-वञ्च-लुञ्च-थ-फः सेट् ।४।३।२४॥

न्युपान्त्ये सत्येभ्यो वा क्त्वा सेट् किद्वत् स्यात् । ऋतित्वा , अर्त्तित्वा ; तृषित्वा , तर्षित्वा ; मृषित्वा , मर्षित्वा ; कृशित्वा , कर्शित्वा ; वचित्वा , वञ्चित्वा ; लुचित्वा , लुञ्चित्वा ; श्रथित्वा , श्रन्थित्वा ; गुफित्वा , गुम्फित्वा । न्युपान्त्य इत्येव-कोथित्वा , रेफित्वा । सेडिति किम् ? वक्त्वा ॥२४॥

## वौ व्यञ्जनाऽऽदेः सन् चाऽय्-वः ।४।३।२५॥

वौ उदित्युपान्त्ये सति व्यञ्जनादेर्धातोः परः क्त्वा सन् च सेटौ किद्वद्वा स्यातां न तु य्वन्तात् । द्युतित्वा , द्योतित्वा ; दिद्युतिषते , दिद्योतिषते ; लिखित्वा , लेखित्वा ; लिलिखिषति , लिलेखिषति । वाविति किम् ? वर्त्तित्वा । व्यञ्जनादेरिति किम् । ओषित्वा । अय्व इति किम् ? देवित्वा ॥२५॥

## उति शवर्हाऽऽद्यः क्तौ भावाऽऽरम्भे ।४।३।२६॥

उति उपान्त्ये सति शवर्हेभ्योऽदादिभ्यश्च परौ भावाऽऽरम्भयोः क्त-क्तवतू सेटौ वा किद्वत् स्याताम् । कुचितम् , कोचितमनेन ; प्रकुचितः , प्रकोचितः ; प्रकुचितवान् , प्रकोचितवान् । रुदितम् , रोदितमेभिः ; प्ररुदितः , प्ररोदितः ; प्ररुदितवान् , प्ररोदितवान् । उतीति किम् ? श्वितितमेभिः । शवर्हाद्य इति

किम् ? प्रगुधितः । भावाऽरम्भ इति किम् ? रुचिता ॥२६॥

**न-डीङ्-शीङ्-पूङ्-धृषि-क्ष्विदि-स्विदि-मिदः ।४।३।२७॥**

एभ्यः परौ सेटौ क्त-क्तवतू किद्वन्न स्याताम् । डयितः , डयितवान् ; शयितः , शयितवान् , पवितः , पवितवान् ; प्रधर्षितः , प्रधर्षितवान् ; प्रक्ष्वेदितः , प्रक्ष्वेदितवान् ; प्रस्वेदितः , प्रस्वेदितवान् ; प्रमेदितः , प्रमेदितवान् । सेटावित्येव-डीनः , डीनवान् ॥२७॥

**मृषः क्षान्तौ ।४।३।२८॥**

क्षमाऽर्थान्मृषः सेटौ क्त-क्तवतू किद्वन्न स्याताम् । मर्षितः , मर्षितवान् । क्षान्ताविति किम् ? अपमृषितं वाक्यम् ॥२८॥

**क्त्वा ।४।३।२९॥**

धातोः क्त्वा सेट् किद्वन्न स्यात् । देवित्वा । सेडित्येव-कृत्वा ॥२९॥

**स्कन्द-स्यन्दः ।४।३।३०॥**

आभ्यां क्त्वा किद्वन्न स्यात् । स्कन्त्वा , स्यन्त्वा ॥३०॥

**क्षुध-क्लिश-कुष-गुध-मृद-वद-वसः ।४।३।३१॥**

एभ्यः क्त्वा सेट् किद्वत् स्यात् । क्षुधित्वा , क्लिशित्वा , कुषित्वा , गुधित्वा , मृडित्वा , मृदित्वा , उदित्वा , उषित्वा ॥३१॥

**रुद-विद-मुष-ग्रह-स्वप-प्रच्छः सन् च ।४।३।३२॥**

एभ्यः सन् क्त्वा च किद्वत् स्यात् । रुदित्वा , रुरुदिषति ; विदित्वा , विविदिषति ; मुषित्वा , मुमुषिषति ; गृहीत्वा , जिघृक्षति , सुप्त्वा , सुषुप्सति ; पृष्ट्वा , पिपृच्छिषति ॥३२॥

**नामिनोऽनिट् ।४।३।३३॥**

नाम्यन्ताद्धातोरनिट् सन् किद्वत् स्यात् । चिचीषति । अनिडिति किम् ? शिशयिषते ॥३३॥

**उपान्त्ये ।४।३।३४॥**

नामिन्युपान्त्ये सति धातोः सन् अनिट् किद्वत् स्यात् । बिभित्सति ॥३४॥

**सिजाशिषावात्मने ।४।३।३५॥**

नामिन्युपान्त्ये सति धातोरात्मनेपदविषयावनिटौ[1] सिजाशिषौ किद्वत् स्याताम् । अभित्त , भित्सीष्ट । आत्मने इति किम् ? अस्राक्षीत् ॥३५॥

**ऋवर्णात् ।४।३।३६॥**

ऋवर्णान्ताद् धातोरनिटावात्मनेपदविषयौ[2] सिजाशिषौ किद्वत् स्याताम् । अकृत , कृषीष्ट ; अतीर्ष्ट , तीर्षीष्ट ॥३६॥

**गमो वा ।४।३।३७॥**

गमेरात्मनेपदविषयौ[3] सिजाशिषौ किद्वद्वा स्याताम् । समगत , समगंस्त ; संगसीष्ट , संगंसीष्ट ॥३७॥

**हनः सिच् ।४।३।३८॥**

हनेरात्मनेपदविषयः सिच् किद्वत् स्यात् । आहत ॥३८॥

**यमः सूचने ।४।३।३९॥**

सूचनार्थाद् यमेरात्मनेपदविषयः सिच् किद्वत् स्यात् । उदायत । सूचन इति किम् ? आयंस्त रज्जुम् ॥३९॥

**वा स्वीकृतौ ।४।३।४०॥**

स्वीकारार्थाद् यमेरात्मनेपदविषयः सिच् किद्वद्वा स्यात् । उपायत , उपायंस्त अस्त्राणि । स्वीकृताविति किम् ? आयंस्त पाणिम् ॥४०॥

**इश्च स्था-दः ।४।३।४१॥**

स्थो दासंज्ञाच्चाऽऽत्मनेपदविषयः सिच् किद्वत् स्यात् , तद्योगे स्थादोरिश्च । उपास्थित , आदित , व्यधित ॥४१॥

**मृजोऽस्य वृद्धिः ।४।३।४२॥**

मृजेर्गुणे सति अस्य वृद्धिः स्यात् । मार्ष्टि । अत इति किम् ? मृष्टः ॥४२॥

**ऋतः स्वरे वा ।४।३।४३॥**

मृजेः ऋतः स्वरादौ प्रत्यये वृद्धिर्वा स्यात् । परिमार्जन्ति , परिमृजन्ति । ऋत इति किम् ? ममार्ज । स्वर इति किम् ? मृज्वः ॥४३॥

**सिचि परस्मै समानस्याऽङिति ।४।३।४४॥**

१. °षयेऽनिटौ P1मू, P2, P3, J2मू, पा१ विना ॥ २. °षये सिजा° P1मू, P2,3, पा१,३,४ विना ॥ ३. °षये पा१,३,४, P1,2,3, J2 विना ॥

समानान्तस्य धातोः परस्मैपदविषये सिच्यङितीति वृद्धिः स्यात् । अचैषीत् । परस्मै इति किम् ? अच्योष्ट । समानस्येति किम् ? अगवीत् । अङितीति किम् ? न्यनुवीत् ॥४४॥

**व्यञ्जनानामनिटि ।४।३।४५॥**

व्यञ्जनान्तस्य धातोः परस्मैपदविषये अनिटि सिचि समानस्य वृद्धिः स्यात् । अराङ्क्षीत् । समानस्येत्येव-उदवोढाम् । अनिटीति किम् ? अतक्षीत् ॥४५॥

**वोर्णुगः सेटि ।४।३।४६॥**

ऊर्णोः सेटि सिचि परस्मैपदे वृद्धिर्वा स्यात् । प्रौर्णावीत् , प्रौर्णवीत् , प्रौर्णुवीत्[1] ॥४६॥

**व्यञ्जनादेर्वोपान्त्यस्याऽतः ।४।३।४७॥**

व्यञ्जनादेर्धातोरुपान्त्यस्याऽतः सेटि सिचि परस्मैपदे वृद्धिर्वा स्यात् । अकाणीत् , अकणीत् । व्यञ्जनादेरिति किम् ? मा भवान् अटीत् । उपान्त्यस्येति किम् ? अवधीत् । अत इति किम् ? अदेवीत् । सेटीत्येव-अधाक्षीत् ॥४७॥

**वद-व्रज-लः ।४।३।४८॥**

वद-व्रजोर्लन्त-रन्तयोश्चोपान्त्यस्याऽस्य परस्मैपदे सेटि सिचि वृद्धिः स्यात् । अवादीत् , अव्राजीत् , अज्वालीत् , अक्षारीत् ॥४८॥

**न श्वि-जागृ-शस-क्षण-हृम्येदितः ।४।३।४९॥**

एषां हृम्यन्तानाम् एदितां च परस्मैपदे सेटि सिचि वृद्धिर्न स्यात् । अश्वयीत् , अजागरीत् , अशसीत् , अक्षणीत् , अग्रहीत् , अवमीत् , अहयीत् , अकगीत् ॥४९॥

**ञ्णिति ।४।३।५०॥**

ञिति णिति च परे धातोरुपान्त्यातो[2] वृद्धिः स्यात् । पाकः , पपाच ॥५०॥

**नामिनोऽकलि-हलेः ।४।३।५१॥**

नाम्यन्तस्य धातोर्नाम्नो वा कलि-हलिवर्जस्य ञ्णिति वृद्धिः स्यात् । अचायि , कारकः , अपीपटत् । कलि-हलिवर्जनं किम् ? अचकलत् , अजहलत् ॥५१॥

**जागुर्ञि-णवि ।४।३।५२॥**

---

१. प्रौर्णुवीत् पा१,४, P3सं, J3 विना नास्ति ॥ २. °न्त्यस्यातो पा२ ॥

जागुर्ञौ णव्येव च ञ्णिति वृद्धिः स्यात् । अजागारि , जजागार । ञिणवीति किम् ? जागरयति ॥५२॥

**आत ऐः कृञ्जौ ।४।३।५३॥**

आदन्तस्य धातोर्ञ्णिति कृति ञौ च ऐः स्यात् । दायः , दायकः , अदायि । कृदिति किम् ? ददौ ॥५३॥

**न जन-बधः ।४।३।५४॥**

अनयोः कृति ञ्णिति ञौ च वृद्धिर्न स्यात् । प्रजनः , जन्यः , अजनि ; बधः , बध्यः , अबधि ॥५४॥

**मोऽकमि-यमि-रमि-नमि-गमि-वमा-ऽऽचमः ।४।३।५५॥**

मन्तस्य धातोः कम्यादिवर्जस्य ञ्णिति कृति ञौ च वृद्धिर्न स्यात् । शमः , शमकः , अशमि । कम्यादिवर्जनं किम् ? कामः , कामुकः अकामि ; यामः , रामः , नामः , अगामि , वामः , आचामकः ॥५५॥

**विश्रमेर्वा ।४।३।५६॥**

विश्रमेर्ञ्णिति कृति ञौ च वृद्धिर्वा स्यात् । विश्रामः , विश्रमः ; विश्रामकः , विश्रमकः ; व्यश्रामि , व्यश्रमि ॥५६॥

**उद्यमोपरमौ ।४।३।५७॥**

उदुपाभ्यां यमि-रम्योर्घञि वृद्ध्यभावो निपात्यते । उद्यमः , उपरमः ॥५७॥

**णिद्वाऽन्त्यो णव् ।४।३।५८॥**

परोक्षाया अन्त्यो णव् णिद्वा न स्यात् । अहं चिचय , चिचाय ; चुकुट , चुकोट । अन्त्य इति किम् ? स पपाच ॥५८॥

**उत और्विति व्यञ्जनेऽद्वेः ।४।३।५९॥**

अद्व्युक्तस्योदन्तस्य धातोर्व्यञ्जनादौ विति औः स्यात् । यौति । उत इति किम् ? एति । धातोरित्येव-सुनोति । वितीति किम् ? रुतः । व्यञ्जन इति किम् ? स्तवानि । अद्वेरिति किम् ? जुहोति ॥५९॥

**वोर्णोः ।४।३।६०॥**

ऊर्णोरद्व्युक्तस्य व्यञ्जनादौ विति और्वा स्यात् । प्रोर्णौति , प्रोर्णोति । अद्वेरित्येव-प्रोर्णोनोति ॥६०॥

**न दि-स्योः ।४।३।६१॥**

ऊर्णोर्दि-स्योः परयोरौर्न स्यात् । प्रौर्णोत् , प्रौर्णोः ॥६१॥

**तृहः श्नादीत् ।४।३।६२॥**

तृहेः श्नात् परो व्यञ्जनादौ विति परे ईत् स्यात् । तृणेढि ॥६२॥

**ब्रूतः परादिः ।४।३।६३॥**

ब्रुव ऊतः परो व्यञ्जनादौ विति परादिरीत् स्यात् । ब्रवीति । ऊत इति किम् ? आत्थ ॥६३॥

**यङ्-तु-रु-स्तोर्बहुलम् ।४।३।६४॥**

यङ्लुबन्तात् तु-रु-स्तुभ्यश्च परो व्यञ्जनादौ विति ईद् बहुलं परादिः स्यात् । कचिद्वा -बोभवीति , बोभोति ; कचिन्न -वर्वर्त्ति ; तवीति , तौति ; रवीति , रौति ; स्तवीति , स्तौति । अद्वेरित्येव-तुतोथ , तुष्टोथ ॥६४॥

**सः सिजस्तेर्दि-स्योः ।४।३।६५॥**

सिजन्ताद् धातोरस्तेश्च सन्तात् परो दि-स्योः परयोः परादिरीत् स्यात् । अकार्षीत् , अकार्षीः ; आसीत् , आसीः । स इति किम् ? अदात् ॥६५॥

**पिबैति-दा-भू-स्थः सिचो लुप् परस्मै न चेट् ।४।३।६६॥**

एभ्यः परस्य सिचः परस्मैपदे लुप् स्यात् , लुब्योगे च नेट् । अपात् , अगात् , अध्यगात् , अदात् , अधात् , अभूत् , अस्थात् । परस्मै इति किम् ? अपासत पयांसि तैः ॥६६॥

**ट्धे-घ्रा-शा-छा[1]-सो वा ।४।३।६७॥**

एभ्यः परस्य सिचः परस्मैपदे लुब् वा स्यात् , लुब्योगे च नेट् । अधात् , अधासीत् , अघ्रात् , अघ्रासीत् ; अशात् ; अशासीत् ; अच्छात् , अच्छासीत् , असात् , असासीत् ॥६७॥

**तन्भ्यो वा त-थासि न्-णोश्च ।४।३।६८॥**

तनादिभ्यः परस्य सिचस्ते थासि च लुब् वा स्यात् , तद्योगे न्-णोश्च लुप् , न चेट् । अतत , अतनिष्ठ ; अतथाः , अतनिष्ठाः ; असत , असनिष्ट ; असथाः , असनिष्ठाः ॥६८॥

---

१. °च्छा° P1, P3, पा३,५ ॥

**सनस्तत्रा वा ।४।३।६९॥**

सनो लुपि सत्याम् आ वा स्यात् । असात , असत ; असाथाः , असथाः । तत्रेति किम् ? असनिष्ट ॥६९॥

**धुड्-ह्रस्वाल्लुगनिटस्त-थोः ।४।३।७०॥**

धुडन्तात् ह्रस्वान्ताच्च धातोः परस्याऽनिटः सिचस्तादौ थादौ च लुक् स्यात् । अभित्त , अभित्थाः , अकृत , अकृथाः । अनिट इति किम् ? व्यद्योतिष्ट ॥७०॥

**इट ईति ।४।३।७१॥**

इटः परस्य सिच ईति लुक् स्यात् । अलावीत् । इट इति किम् ? अकार्षीत् । ईतीति किम् ? अभणिषम् ॥७१॥

**सो धि वा ।४।३।७२॥**

धातोर्धादौ प्रत्यये सो लुग् वा स्यात् । चकाधि , चकाद्धि ; अलविध्वम् , अलविड्ढ्वम् ॥७२॥

**अस्तेः सि हस्त्वेति ।४।३।७३॥**

अस्तेः [ सः ] सि सादौ प्रत्यये लुक् स्यात् , एति तु सो हः । असि , व्यतिसे , व्यतिहे , भावयामाहे ॥७३॥

**दुह-दिह-लिह-गुहो दन्त्यात्मने वा सकः ।४।३।७४॥**

एभ्यः परस्य सको दन्त्यादौ आत्मनेपदे लुग् वा स्यात् । अदुग्ध , अधुक्षत ; अदिग्ध , अधिक्षत ; अलीढाः , अलिक्षथाः ; न्यगुह्वहि , न्यघुक्षावहि । दन्त्येति किम् ? अधुक्षामहि ॥७४॥

**स्वरेऽतः ।४।३।७५॥**

सकोऽस्य स्वरादौ प्रत्यये लुक् स्यात् । अधुक्षाताम् ॥७५॥

**दरिद्रोऽद्यतन्यां वा ।४।३।७६॥**

दरिद्रोऽद्यतन्यां विषये लुग् वा स्यात् । अदरिद्रीत् , अदरिद्रासीत् ॥७६॥

**अशित्यस्सन्-णकज्-णका-ऽनटि ।४।३।७७॥**

सादिसन्नादिवर्जे अशिति विषये दरिद्रो लुक् स्यात् । दुर्दरिद्रम् । अशितीति

किम् ? दरिद्राति । सन्नादिवर्जनं किम् ? दिदरिद्रासति , दरिद्रायको याति , दरिद्रायकः , दरिद्राणम् ।।७७।।

**व्यञ्जनाद् देः सश्च दः ।४।३।७८।।**

धातोर्व्यञ्जनान्तात् परस्य देर्लुक् स्याद् , यथासम्भवं धातोः सो द् च । सो[1]ऽचकात् , अजागः , अबिभः , अन्वशात् । व्यञ्जनादिति किम् ? अयात् ।।७८।।

**सेः स्-द्-धां च रुर्वा ।४।३।७९।।**

व्यञ्जनान्ताद् धातोः परस्य सेर्लुक् स्यात् , यथासंम्भवं स्-द्-धां वा रुश्च । अचकास्त्वम् , अचकात् त्वम् ; अभिनस्त्वम् , अभिनत् त्वम् ; अरुणस्त्वम् , अरुणत् त्वम् ।।७९।।

**योऽशिति ।४।३।८०।।**

धातोर्व्यञ्जनान्तात् परस्य योऽशिति प्रत्यये लुक् स्यात् । जङ्गमिता । व्यञ्जनादित्येव-लोलूयिता । अशितीति किम् ? बेभिद्यते ।।८०।।

**क्यो वा ।४।३।८१।।**

धातोर्व्यञ्जनान्तात् परस्य क्योऽशिति प्रत्यये लुग् वा स्यात् । समिधिष्यति , समिध्यिष्यति ; दृषदिष्यते , दृषद्यिष्यते ।।८१।।

**अतः ।४।३।८२।।**

अदन्ताद् धातोर्विहितेऽशिति प्रत्यये धातोरतो लुक् स्यात् । कथयति । विहितविशेषणं किम् ? गतः ।।८२।।

**णेरनिटि ।४।३।८३।।**

अनिट्यशिति प्रत्यये णेर्लुक् स्यात् । अततक्षत् , चेतनः । अनिटीति किम् ? कारयिता ।।८३।।

**सेट्क्तयोः ।४।३।८४।।**

सेटोः क्तयोः परयोः णेर्लुक् स्यात् । कारितः , गणितवान् ।।८४।।

**आमन्ताऽऽल्वाऽऽय्येत्न्वावय् ।४।३।८५।।**

एषु परेषु णेरय् स्यात् । कारयाञ्चकार , गण्डयन्तः , स्पृहयालुः , महयाय्यः

१. सो P2 पा१,३,४,५, P3 विना नास्ति । अचकात् इत्येव तत्र पाठः ।।

, स्तनयित्नुः ॥८५॥

**लघोर्यपि ।४।३।८६॥**

लघोः परस्य णेर्यपि अय् स्यात् । प्रशमय्य । लघोरिति किम् ? प्रतिपाद्य ॥८६॥

**वाऽऽप्नोः ।४।३।८७॥**

आप्नोः परस्य णेर्यप्यय् वा स्यात् । प्रापय्य , प्राप्य । आप्नोरिति किम् ? अध्याप्य ॥८७॥

**मेङो वा मित् ।४।३।८८॥**

मेङो यपि मिद् वा स्यात् । अपमित्य , अपमाय ॥८८॥

**क्षेः क्षीं ।४।३।८९॥**

क्षेर्यपि क्षीः स्यात् । प्रक्षीय ॥८९।[1]॥

**क्षय्य-जय्यौ शक्तौ ।४।३।९०॥**

क्षि-ज्योरन्तस्य शक्तौ गम्यायां ये प्रत्ययेऽय् निपात्यते । क्षय्यो व्याधिः , जय्यः शत्रुः । शक्ताविति किम् ? क्षेयम् , जेयम्[2] ॥९०॥

**क्रय्यः क्रयार्थे ।४।३।९१॥**

क्रियोऽन्तस्य ये प्रत्ययेऽय् निपात्यते , क्रयाय चेत् प्रसारितोऽर्थः । क्रय्यो गौः । क्रयार्थ इति किम् ? क्रेयं ते धान्यं न चास्ति प्रसारितम् ॥९१॥

**सस्तः सि ।४।३।९२॥**

धातोः सन्तस्याऽशिति सादौ प्रत्यये विषयभूते त् स्यात् । वत्स्यति । स इति किम् ? यक्षीष्ट । सीति किम् ? वसिषीष्ट ॥९२॥

**दीय् दीङः क्ङिति स्वरे ।४।३।९३॥**

दीङः क्ङिति अशिति स्वरे दीय् स्यात् । उपदिदीये । क्ङितीति किम् ? उपदानम् । स्वर इति किम् ? उपदेदीयते ॥९३॥

**इडेत्-पुसि चाऽऽतो लुक् ।४।३।९४॥**

क्ङित्यशिति स्वरे , इटि , एति , पुसि च परे आदन्तस्य धातोर्लुक् स्यात्

---

१. क्षीः पा२,३ ॥ २. जेयम् P2, पासं४ विना नास्ति ॥

। पपुः , अदधत् , पपिथ , व्यतिरे , अदुः ॥९४॥

**संयोगाऽऽदेर्वाऽऽशिष्येः ।४।३।९५॥**

धातोः संयोगादेरादन्तस्य क्ङित्याशिषि एर्वा स्यात् । ग्लेयात् , ग्लायात् । संयोगादेरिति किम् ? यायात् । क्ङितीत्येव-ग्लासीष्ट ॥९५॥

**गा-पा-स्था-सा-दा-मा-हाकः ।४।३।९६॥**

एषां क्ङित्याशिष्येः स्यात् । गेयात् , पेयात् , स्थेयात् , अवसेयात् , देयात् , धेयात् , मेयात् , हेयात् ॥९६॥

**ई व्यञ्जनेऽयपि ।४।३।९७॥**

गादेर्यब्वर्जे क्ङित्यशिति व्यञ्जनादौ ईः स्यात् । गीयते , जेगीयते , पीयते , स्थीयते , सीयते , दीयते , धीयते , मीयते , हीनः । व्यञ्जन इति किम् ? तस्थुः । अयपीति किम् ? प्रगाय ॥९७॥

**घ्रा-ध्मोर्यङि ।४।३।९८॥**

घ्रा-ध्मोर्यङि ईः स्यात् । जेघ्रीयते , देध्मीयते ॥९८॥

**हनो घ्नी वधे ।४।३।९९॥**

हन्तेर्वधार्थस्य यङि घ्नीः स्यात् । जेघ्नीयते । वध इति किम् ? गतौ-जङ्घन्यते ॥९९॥

**ञ्णिति घात् ।४।३।१००॥**

ञिति णिति च परे हन्तेर्घात् स्यात् । घातः , घातयति ॥१००॥

**ञि-णवि घन् ।४।३।१०१॥**

ञौ णवि च परे हन्तेर्घन् स्यात् । अघानि , जघान ॥१०१॥

**नशेर्नेश् वाऽङि ।४।३।१०२॥**

नशेरङि नेश् वा स्यात् । अनेशत् , अनशत् ॥१०२॥

**श्वयत्यसू-वच-पतः श्वा-ऽऽस्थ-वोच-पप्तम् ।४।३।१०३॥**

एषामङि यथासङ्ख्यं श्वादयः स्युः । अश्वत् , आस्थत् , अवोचत् , अपप्तत् ॥१०३॥

**शीङ एः शिति ।४।३।१०४॥**

शीङः शित्येः स्यात् । शेते ॥१०४॥

**क्ङिति यि शय् ।४।३।१०५॥**

शीङः क्ङिति यादौ शय् स्यात् । शय्यते , शाशय्यते । क्ङितीति किम् ? शेयम् ॥१०५॥

**उपसर्गादूहो ह्रस्वः ।४।३।१०६॥**

उपसर्गात् परस्योहतेरूतः क्ङिति यादौ परे ह्रस्वः स्यात् । समुह्यते । उपसर्गादिति किम् ? ऊह्यते । यीत्येव-समूहितम् । ऊ ऊह इति प्रश्लेषः किम् ? आ ऊह्यते=ओह्यते , समोह्यते ॥१०६॥

**आशिषीणः ।४।३।१०७॥**

उपसर्गात् परस्येण ईतः क्ङिति यादावाशिषि ह्रस्वः स्यात् । उदियात् । ई इण इति प्रश्लेषः किम् ? आ ईयात्=एयात् , समेयात् ॥१०७॥

**दीर्घश्च्वि-यङ्-यक्-क्येषु च ।४।३।१०८॥**

एषु यादावाशिषि च दीर्घः स्यात् । शुचीकरोति ; तोष्टूयते ; मन्तूयति ; दधीयति , भृशायते , लोहितायति , स्तूयते ; ईयात् ॥१०८॥

**ऋतो री ।४।३।१०९॥**

च्व्यादौ परे ऋदन्तस्य ऋतः स्थाने रीः स्यात् । पित्रीस्यात् , चेक्रीयते , मात्रीयते , पित्रीयते । ऋत इति किम् ? चेकीर्यते ॥१०९॥

**रिः श-क्या-ऽऽशीर्ये ।४।३।११०॥**

ऋदन्तस्य धातोः ऋतः शे क्ये आशीर्ये च परे रिः स्यात् । व्याप्रियते , क्रियते , ह्रियात् ॥११०॥

**ईश्च्वाववर्णस्याऽनव्ययस्य ।४।३।१११॥**

अनव्ययस्याऽवर्णान्तस्य च्वौ ईः स्यात् । शुक्लीस्यात् , मालीस्यात् । अनव्ययस्येति किम् ? दिवाभूता रात्रिः ॥१११॥

**क्यनि ।४।३।११२॥**

अवर्णान्तस्य क्यनि ईः स्यात् । पुत्रीयति , मालीयति ॥११२॥

**क्षुत्-तृड्-गर्धेऽशनायोदन्य-धनायम् ।४।३।११३॥**

एष्वर्थेषु यथासंख्यमशनायादयः क्यन्नन्ता निपात्यन्ते । अशनायति , उदन्यति , धनायति । क्षुदादाविति किम् ? अशनीयति , उदकीयति , धनीयति दातुम् ॥११३॥

**वृषाऽश्वान् मैथुने स्सोऽन्तः ।४।३।११४॥**

आभ्यां मैथुनार्थाभ्यां क्यनि स्सन्तः स्यात् । वृषस्यति गौः , अश्वस्यति वडवा । मैथुने इति किम् ? वृषीयति , अश्वीयति , ब्राह्मणी ॥११४॥

**असू च लौल्ये ।४।३।११५॥**

भोगेच्छातिरेको लौल्यम् , तत्र गम्ये क्यनि परे नाम्नः स् असू चान्तः स्यात् । दधिस्यति , दध्यस्यति । लौल्य इति किम् ? क्षीरीयति दातुम् ॥११५॥

[इत्याचार्यश्री**हेमचन्द्र**विरचितायां
**सिद्धहेमचन्द्रा**भिधानस्वोपज्ञशब्दानुशासनलघुवृत्तौ]
चतुर्थस्याध्यायस्य तृतीयः पादः समाप्तः[1] ॥४।३॥

**कर्णं** च **सिन्धुराजं** च , निर्जित्य युधि दुर्जयम् ।
श्री**भीमेना**धुना चक्रे , **महाभारत**मन्यथा ॥१५॥

१. **समाप्तः** पा१,४,५, J3 विना नास्ति ॥

## [ चतुर्थः पादः ]

### अस्ति-ब्रुवोर्भू-वचावशिति ।४।४।१॥

अस्ति-ब्रुवोर्यथासंख्यं भू-वचौ स्याताम् अशिति विषये । भव्यम् , अवोचत् । अशितीति किम् ? स्यात् , ब्रूते ॥१॥

### अघञ्क्यबलच्च्यजेर्वी ।४।४।२॥

अघञादावशिति विषये अजेर्वी स्यात् । प्रवेयम् । अघञ्क्यबलचीति किम् ? समाजः , समज्या , उदजः पशोः , अजः ॥२॥

### त्रने वा ।४।४।३॥

त्रनयोर्विषयभूतयोरजेर्वी वा स्यात् । प्रवेता , प्राजिता ; प्रवयणः , प्राजनो दण्डः ॥३॥

### चक्षो वाचि क्शांग्-ख्यांग् ।४।४।४॥

चक्षो वागर्थस्याऽशिति विषये क्शांग्-ख्यांगौ स्याताम् । आक्शास्यति , आक्शास्यते ; आख्यास्यति , आख्यास्यते ; आक्शेयम्[1] , आख्येयम् । वाचीति किम् ? बोधे-विचक्षणः ॥४॥

### नवा परोक्षायाम् ।४।४।५॥

चक्षो वाचि क्शांग्-ख्यांगौ परोक्षायां वा स्याताम् । आचक्शौ , आचख्यौ , आचचक्षे ॥५॥

### भृज्जो भर्ज् ।४।४।६॥

भृज्जतेरशिति भर्ज् वा स्यात् । भर्ष्टा , भ्रष्टा ॥६॥

### प्राद् दागस्त्त आरम्भे क्ते ।४।४।७॥

आरम्भार्थस्य प्रपूर्वस्य दागः क्ते परे त्त् वा स्यात् । प्रत्तः , प्रदत्तः । प्रादिति किम् ? परीत्तम् ॥७॥

### नि-वि-स्वन्ववात् ।४।४।८॥

एभ्यः परस्य दागः क्ते त्त् वा स्यात् । नीत्तम् , निदत्तम् ; वीत्तम् , विदत्तम् ; सूत्तम् , सुदत्तम् ; अनूत्तम् , अनुदत्तम् ; अवत्तम् ,

१. आक्शेयम् J3 विना नास्ति ॥

अवदत्तम् ॥८॥

**स्वरादुपसर्गाद् दस्ति कित्यधः ।४।४।९॥**

स्वरान्तादुपसर्गात् परस्य धावर्जस्य दासंज्ञस्य तादौ किति त्त् नित्यं स्यात् । प्रत्तः , परीत्त्रिमम् । उपसर्गादिति किम् ? दधि दत्तम् । स्वरादिति किम् ? निर्दत्तम् । द इति किम् ? प्रदाता व्रीहयः । तीति किम् ? प्रदाय । अध इति किम् ? निधीतः ॥९॥

**दत् ।४।४।१०॥**

अधो दासंज्ञस्य तादौ किति दत् स्यात् । दत्तः , दत्तिः । अध इत्येव , धीतः ॥१०॥

**दो-सो-मा-स्थ इः ।४।४।११॥**

एषां तादौ किति इः स्यात् । निर्दितः , सित्वा , मितिः , स्थितवान् ॥११॥

**छा-शोर्वा ।४।४।१२॥**

छा-शोस्तादौ किति इर्वा स्यात् । अवच्छितः , अवच्छातः ; निशितः , निशातः ॥१२॥

**शो व्रते ।४।४।१३॥**

श्यतेः क्ते व्रतविषये प्रयोगे नित्यम् इः स्यात् । संशितं व्रतम् , संशितः साधुः ॥१३॥

**हाको हिः क्त्वि ।४।४।१४॥**

हाकस्तादौ किति क्त्वायां हिः स्यात् । हित्वा । क्त्वीति किम् ? हीनः । तीत्येव-प्रहाय ॥१४॥

**धागः ।४।४।१५॥**

धागस्तादौ किति हिः स्यात् । विहितः , हित्वा ॥१५॥

**यपि चाऽदो जग्ध् ।४।४।१६॥**

तादौ किति यपि चाऽदेर्जग्ध् स्यात् । जग्धिः , प्रजग्ध्य ॥१६॥

**घस्लृ सनद्यतनी-घञचलि ।४।४।१७॥**

एष्वदेर्घस्लृः स्यात् । जिघत्सति, अघसत्, घासः, प्रघसः[1], प्रादनम्=प्रघसः ॥१७॥

**परोक्षायां नवा ।४।४।१८॥**

अदेः परोक्षायां घस्लृर्वा स्यात् । जक्षुः, आदुः ॥१८॥

**वेर्वय् ।४।४।१९॥**

वेगः परोक्षायां वय् वा स्यात् । ऊयुः, ववुः ॥१९॥

**ऋः शॄ-दॄ-प्रः ।४।४।२०॥**

एषां परोक्षायाम् ऋर्वा स्यात् । विशश्रतुः ; विशशरतुः, विदद्रतुः, विददरतुः ; निपप्रतुः, निपपरतुः ॥२०॥

**हनो वध आशिष्यञौ ।४।४।२१॥**

आशीर्विषये हन्तेर्वधः स्यात्, न तु ञिटि । वध्यात् । अञाविति किम् ? घानिषीष्ट ॥२१॥

**अद्यतन्यां वा त्वात्मने ।४।४।२२॥**

अद्यतन्यां विषये हनो वधः स्याद् आत्मनेपदे तु वा । अवधीत् ; आवधिष्ट, आहत ॥२२॥

**इणिकोर्गा ।४।४।२३॥**

इणिकोरद्यतन्यां गाः स्यात् । अगात्, अध्यगात् ॥२३॥

**णावज्ञाने गमुः ।४।४।२४॥**

इणिकोरज्ञानार्थयोर्णौ गमुः स्यात् । गमयति, अधिगमयति गाम् । अज्ञान इति किम् ? अर्थान् प्रत्याययति ॥२४॥

**सनीङश्च ।४।४।२५॥**

इङ इणिकोश्चाऽज्ञानार्थयोः सनि गमुः स्यात् । अधिजिगांसते, जिगमिषति ग्रामम्, मातुरधिजिगमिषति ॥२५॥

**गा परोक्षायाम् ।४।४।२६॥**

इङः परोक्षाविषये गाः स्यात् । अधिजगे ॥२६॥

१. "अच्, प्रात्तीति प्रघसः" इति बृहद्वृत्तौ ॥

**णौ सन्-ङे वा ।४।४।२७।।**

सन्-ङपरे णौ इङो गा वा स्यात् । अधिजिगापयिषति , अध्यापिपयिषति ; अध्यजीगपत् , अध्यापिपत् । णाविति किम् ? अधिजिगांसते । सनूङ इति किम् ? अध्यापयति ।।२७।।

**वाऽद्यतनी-क्रियातिपत्त्योर्गीङ् ।४।४।२८।।**

अनयोरिङो गीङ् वा स्यात् । अध्यगीष्ट , अध्यैष्ट ; अध्यगीष्यत , अध्यैष्यत ।।२८।।

**अड् धातोरादिर्ह्यस्तन्यां चाऽमाङा ।४।४।२९।।**

ह्यस्तन्यामद्यतनी-क्रियातिपत्त्योश्च विषये धातोरादिरट् स्यात् , न तु माङ्योगे । अयात् , अयासीत् , अयास्यत् । अमाङेति किम् ? मा स्म कार्षीत् । धातोरिति किम् ? प्रायाः ।।२९।।

**एत्यस्तेर्वृद्धिः ।४।४।३०।।**

इणिकोरस्तेश्चाऽऽदेर्ह्यस्तन्यां विषये वृद्धिः स्यात् , न तु माङा । आयन् , अध्यायन् , आस्ताम् । अमाङेत्येव-मा स्म ते यन् ।।३०।।

**स्वरादेस्तासु ।४।४।३१।।**

स्वरादेर्धातोरादेरद्यतनी-क्रियातिपत्ति-ह्यस्तनीषु विषये वृद्धिः स्यात् , अमाङा । आटीत् , ऐषिष्यत् , औज्झत् । अमाङेत्येव-मा सोऽटीत् ।।३१।।

**स्ताद्यशितोऽत्रोणादेरिट् ।४।४।३२।।**

धातोः परस्य सादेस्तादेश्चाऽशित आदिरिट् स्यात् , न तु त्रोणाद्योः । लविष्यति , लविता । स्तादीति किम् ? भूयात् । अशित इति किम् ? आस्से । अत्रोणादेरिति किम् ? शस्त्रम् , वत्सः , हस्तः ।।३२।।

**तेर्ग्रहादिभ्यः ।४।४।३३।।**

एभ्य एव परस्य स्ताद्यशितः तेरादिरिट् स्यात् । निगृहीतिः , अपस्निहितिः । ग्रहादिभ्य इति किम् ? शान्तिः ।।३३।।

**गृह्णोऽपरोक्षायां दीर्घः ।४।४।३४।।**

ग्रहेर्यो विहित इट् तस्य दीर्घः स्यात् , न तु परोक्षायाम् । ग्रहीता । अपरोक्षायामिति किम् ? जगृहिव ।।३४।।

## वृतो नवाऽनाशीः-सिच्परस्मै च ।४।४।३५।।

वृभ्यामृदन्तेभ्यश्च परस्येटो दीर्घो वा स्यात् , न तु परोक्षा-ऽऽशिषोः सिचि च परस्मैपदे । प्रावरीता , प्रावरिता ; वरीता , वरिता ; तितरीषति , तितरिषति । परोक्षादिवर्जनं किम् ? ववरिथ , तेरिथ , प्रावरिषीष्ट , आस्तरिषीष्ट , प्रावारिषुः , आस्तारिषुः ।।३५।।

## इट् सिजाशिषोरात्मने ।४।४।३६।।

वृद्भ्यां परयोरात्मनेपदविषये सिजाशिषोरादिरिट् वा स्यात् । प्रावृत , प्रावरिष्ट ; अवृत , अवरीष्ट ; आस्तीर्ष्ट , आस्तरिष्ट ; प्रावृषीष्ट , प्रावरिषीष्ट ; वृषीष्ट , वरिषीष्ट ; आस्तीर्षीष्ट , आस्तरिषीष्ट । आत्मने इति किम् ? प्रावारीत् ।।३६।।

## संयोगाद् ऋतः ।४।४।३७।।

धातोः संयोगात् परो य ऋत् तदन्तात् परयोरात्मनेपदविषयसिजाशिषोरादिरिट् वा स्यात् । अस्मरिषाताम् , अस्मृषाताम् ; स्मरिषीष्ट , स्मृषीष्ट । संयोगादिति किम् ? अकृत ।।३७।।

## धूगौदितः ।४।४।३८।।

धूग औदितश्च परस्य स्ताद्यशित आदिरिट् वा स्यात् । धोता , धविता ; रद्धा , रधिता ।।३८।।

## निष्कुषः ।४।४।३९।।

निष्पूर्वात्[1] कुषः परस्य स्ताद्यशित आदिरिट् वा स्यात् । निष्कोष्टा , निष्कोषिता ।।३९।।

## क्तयोः ।४।४।४०।।

निष्कुषः परयोः क्तयोरादिरिट् नित्यं स्यात् । निष्कुषितः , निष्कुषितवान् ।।४०।।

## जॄ-व्रश्चः क्त्वः ।४।४।४१।।

आभ्यां परस्य क्त्व आदिरिट् स्यात् । जरीत्वा , व्रश्चित्वा ।।४१।।

## ऊदितो वा ।४।४।४२।।

ऊदितः परस्य क्त्व आदिरिट् वा स्यात् । दान्त्वा , दमित्वा ।।४२।।

१. निःपूर्वात् इति सर्वत्र हस्तलिखितादर्शेषु पाठः ।।

**क्षुध-वसस्तेषाम् ।४।४।४३।।**

आभ्यां परेषां क्त-क्तवतु-क्त्वामादिरिट् स्यात् । क्षुधितः , क्षुधितवान् , क्षुधित्वा ; उषितः , उषितवान् , उषित्वा ।।४३।।

**लुभ्यञ्चेर्विमोहार्चे ।४।४।४४।।**

आभ्यां यथासंख्यं विमोहन-पूजार्थाभ्यां परेषां क्त-क्तवतु-क्त्वामादिरिट् स्यात् । विलुभितः , विलुभितवान् , लुभित्वा ; अञ्चितः अञ्चितवान् , अञ्चित्वा । विमोहार्च इति किम् ? लुब्धो जाल्मः , उदक्तं जलम् ।।४४।।

**पूङ्-क्लिशिभ्यो नवा ।४।४।४५।।**

पूङः क्लिशिभ्यां च परेषां क्त-क्तवतु-क्त्वामादिरिड् वा स्यात् । पूतः पूतवान् , पूत्वा ; पवितः , पवितवान् , पवित्वा । क्लिष्टः , क्लिष्टवान् , क्लिष्ट्वा ; क्लिशितः , क्लिशितवान् , क्लिशित्वा ।।४५।।

**सह-लुभेच्छ-रुष-रिषस्तादेः ।४।४।४६।।**

एभ्यः परस्य स्ताद्यशितस्तादेरिट् वा स्यात् । सोढा , सहिता ; लोब्धा , लोभिता ; एष्टा , एषिता ; रोष्टा , रोषिता ; रेष्टुम् , रेषितुम् ।।४६।।

**इवृध-भ्रस्ज-दम्भ-श्रि-यूर्णु-भर-ज्ञपि-सनि-तनि-पति-वृद्-दरिद्रः सनः ।४।४।४७।।**

इवन्ताद् ऋधादिभ्य ऋदन्तेभ्यो दरिद्रश्च परस्य सन आदिरिट् वा स्यात् । दुद्यूषति , दिदेविषति ; ईर्त्सति , अर्दिधिषति ; बिभर्क्षति , बिभर्जिषति ; धिप्सति , दिदम्भिषति ; शिश्रीषति , शिश्रयिषति ; युयूषति , यियविषति ; प्रोर्ण्णुनूषति , प्रोर्ण्णुनविषति ; बुभूर्षति , बिभरिषति ; ज्ञीप्सति , जिज्ञपयिषति ; सिषासति , सिसनिषति ; तितंसति , तितनिषति ; पित्सति , पिपतिषति ; प्रावुवूर्षति , प्राविवरिषति ; वुवूर्षते , विवरीषते ; तितीर्षति , तितरीषति ; दिदरिद्रासति दिदरिद्रिषति ।।४७।।

**ऋ-स्मि-पूङञ्जशौ-कॄ-गॄ-दृ-धृ-प्रच्छः ।४।४।४८।।**

एभ्यः परस्य सन आदिरिट् स्यात् । अरिरिषति , सिस्मयिषते , पिपविषते , अञ्जिजिषति , अशिशिषते , चिकरीषति , जिगरीषति , आदिदरिषते , आदिधरिषते , पिपृच्छिषति ।।४८।।

## हनृतः स्यस्य ।४।४।४९।।

हन्तेः ऋदन्ताच्च परस्य स्यस्याऽऽदिरिट् स्यात् । हनिष्यति , करिष्यति ।।४९।।

## कृत-चृत-नृत-च्छृद-तृदोऽसिचः सादेर्वा ।४।४।५०।।

एभ्यः परस्याऽसिचः सादेः स्ताद्यशित आदिरिट् वा स्यात् । कर्त्स्यति , कर्तिष्यति ; चिचृत्सति , चिचर्त्तिषति ; नर्त्स्यति , नर्त्तिष्यति ; अच्छर्त्स्यत् , अच्छर्दिष्यत् ; तितृत्सति , तितर्दिषति । असिच इति किम् ? अकर्तीत् ।।५०।।

## गमोऽनात्मने ।४।४।५१।।

गमः परस्य स्ताद्यशितः सादेरादिरिट् स्यात् , न त्वात्मनेपदे । गमिष्यति । अधिजिगमिषिता शास्त्रस्य । अनात्मने इति किम् ? संगंसीष्ट ।।५१।।

## स्नोः ।४।४।५२।।

स्नोः परस्य स्ताद्यशितोऽनात्मनेपदे आदिरिट् स्यात् । प्रस्नविष्यति । अनात्मन इत्येव-प्रास्नोष्ट ।।५२।।

## क्रमः ।४।४।५३।।

क्रमः परस्य स्ताद्यशित आदिरिट् स्यात् , अनात्मनेपदे । क्रमिष्यति , प्रकमितुम् । अनात्मन इत्येव-प्रक्रंस्यते ।।५३।।

## तुः ।४।४।५४।।

अनात्मनेपदविषयात् क्रमः परस्य तुः स्ताद्यशित आदिरिट् स्यात् । क्रमिता । अनात्मन इत्येव-प्रक्रन्ता ।।५४।।

## न वृद्भ्यः ।४।४।५५।।

वृदादिपञ्चकात् परस्य स्ताद्यशित आदिरिट् न स्यात् , नचेदसावात्मनेपद-निमित्तम् । वर्त्स्यति , विवृत्सति ; स्यन्त्स्यति , सिस्यन्त्सति ।।५५।।

## एकस्वरादनुस्वारेतः ।४।४।५६।।

एकस्वरादनुस्वारेतो धातोर्विहितस्य स्ताद्यशित आदिरिट् न स्यात् । पाता । एकस्वरादिति किम् ? अवधीत् ।।५६।।

## ऋवर्ण्ण-श्र्यूर्ण्णुगः कितः ।४।४।५७।।

ऋवर्ण्णान्ताद् धातोः श्रेरूर्ण्णोश्च एकस्वराद् विहितस्य कित आदिरिट् न स्यात् । वृतः , तीर्त्वा , श्रितः , ऊर्ण्णुत्वा । एकस्वरादित्येव-जागरितः । कित इति किम् ? वरिता ॥५७॥

**उवर्णात् ।४।४।५८॥**

उवर्णान्तादेकस्वराद् विहितस्य कित आदिरिट् न स्यात् । युतः , लूनः ॥५८॥

**ग्रह-गुहश्च सनः ।४।४।५९॥**

आभ्यामुवर्णान्ताच्च विहितस्य सन आदिरिट् न स्यात् । जिघृक्षति , जुघुक्षति , रुरूषति ॥५९॥

**स्वार्थे ।४।४।६०॥**

स्वार्थार्थस्य सन आदिरिट् न स्यात् । जुगुप्सते ॥६०॥

**डीय-श्व्यैदितः क्तयोः ।४।४।६१॥**

डीयतेः श्वेरैदिद्भ्यश्च धातुभ्यः परयोः क्त-क्तवत्वोरादिरिट् न स्यात् । डीनः , डीनवान् ; शूनः , शूनवान् ; त्रस्तः , त्रस्तवान् ॥६१॥

**वेटोऽपतः ।४।४।६२॥**

अपतो विकल्पितेटो धातोरेकस्वरात् परयोः क्तयोरादिरिट् न स्यात् । रद्धः , रद्धवान् । अपत इति किम् ? पतितः ॥६२॥

**सं-नि-वेरर्दः ।४।४।६३॥**

एभ्यः पराद् अर्देः परयोः क्तयोरादिरिट् न स्यात् । समर्ण्णः , समर्ण्णवान् ; न्यर्ण्णः , न्यर्ण्णवान् ; व्यर्ण्णः , व्यर्ण्णवान् । संनिवेरिति किम् ? अर्दितः ॥६३॥

**अविदूरेऽभेः ।४।४।६४॥**

अभेः पराद् अर्देः परयोः क्तयोरविदूरेऽर्थे आदिरिट् न स्यात् । अभ्यर्ण्णम् । अविदूर इति किम् ? अभ्यर्दितो दीनः शीतेन ॥६४॥

**वर्त्तेर्वृत्तं ग्रन्थे ।४।४।६५॥**

वृतेर्ण्यन्तात् क्ते वृत्तं ग्रन्थविषये निपात्यते । वृत्तो गुणश्छात्रेण । ग्रन्थ इति किम् ? वर्त्तितं कुङ्कुमम् ॥६५॥

**धृष-शसः प्रगल्भे ।४।४।६६॥**

आभ्यां परयोः क्तयोरादिः प्रगल्भ एवार्थ इट् न स्यात् । धृष्टः , विशस्तः । प्रगल्भ इति किम् ? धर्षितः , विशसितः ॥६६॥

**कषः कृच्छ्र-गहने ।४।४।६७॥**

अनयोरर्थयोः कषेः परयोः क्तयोरादिरिट् न स्यात् । कष्टं दुःखम् , कष्टोऽग्निः , कष्टं वनं दुरवगाहम् । कृच्छ्रगहन[१] इति किम् ? कषितं स्वर्णम् ॥६७॥

**घुषेरविशब्दे ।४।४।६८॥**

अविशब्दार्थाद् घुषेः परयोः क्तयोरादिरिट् न स्यात् । घुष्टा रज्जुः , घुष्टवान् । अविशब्द इति किम् ? अवघुषितं वाक्यम् ॥६८॥

**बलि-स्थूले दृढः ।४।४।६९॥**

बलिनि स्थूले चार्थे दृहेर्दृंहेर्वा क्तान्तस्य दृढो निपात्यते । दृढः । बलिस्थूल इति किम् ? दृहितम् , दृंहितम् ॥६९॥

**क्षुब्ध-विरिब्ध-स्वान्त-ध्वान्त-लग्न-म्लिष्ट-फाण्ट-बाढ-परिवृढं मन्थ-स्वर-मनस्-तमस्-सक्ता-ऽस्पष्टा-ऽनायास-भृश-प्रभौ ।४।४।७०॥**

एते क्तान्ता मन्थादिष्वर्थेषु यथासङ्ख्यमनिटो निपात्यन्ते । क्षुब्धः समुद्रः , क्षुब्धं वल्लवैः , विरिब्धः स्वरः , स्वान्तं मनः , ध्वान्तं तमः , लग्नं सक्तम् , म्लिष्टमस्पष्टम् , फाण्टमनायाससाध्यम् , बाढं भृशम् , परिवृढः प्रभुः ॥७०॥

**आदितः ।४।४।७१॥**

आदितो धातोः परयोः क्तयोरादिरिट् न स्यात् । मिन्नः , मिन्नवान् ॥७१॥

**नवा भावा-ऽऽरम्भे ।४।४।७२॥**

आ[२]दितो भावा-ऽऽरम्भार्थयोः क्तयोरादिरिट् वा न स्यात् । मिन्नम् , मेदितम् ; प्रमिन्नः , प्रमिन्नवान् ; प्रमेदितः , प्रमेदितवान् ॥७२॥

**शकः कर्म्मणि ।४।४।७३॥**

शकेः कर्म्मणि क्तयोरादिरिट् वा न स्यात् । शक्तः , शकितो वा घटः कर्तुम् ॥७३॥

---

१. पा४ विना– **कृच्छ्र इति** P3 पा१,३,J. । **कृच्छ्रादाविति पा२,५,P1,2,J3** ॥ २. **आदितो धातोर्भावा** पा३,४, J3 ॥

**णौ दान्त-शान्त-पूर्ण-दस्त-स्पष्ट-च्छन्न-ज्ञप्तम् ।४।४।७४।।**

दमादीनां णौ क्तान्तानामेते वा निपात्यन्ते । दान्तः , दमितः , शान्तः , शमितः ; पूर्णः , पूरितः ; दस्तः दासितः ; स्पष्टः , स्पाशितः ; छन्नः , छादितः ; ज्ञप्तः , ज्ञापितः ।।७४।।

**श्वस-जप-वम-रुष-त्वर-संघुषा-ऽऽस्वना-ऽमः ।४।४।७५।।**

एभ्यः क्तयोरादिरिट् वा न स्यात् । श्वस्तः , श्वसितः ; विश्वस्तवान् , विश्वसितवान् । जप्तः , जप्तवान् ; जपितः , जपितवान् । वान्तः , वान्तवान् ; वमितः , वमितवान् । रुष्टः , रुष्टवान् ; रुषितः , रुषितवान् । तूर्णः , तूर्णवान् ; त्वरितः , त्वरितवान् । संघुष्टौ , संघुषितौ दम्यौ ; संघुष्टवान् , संघुषितवान् । आस्वान्तः , आस्वनितः ; आस्वान्तवान् , आस्वनितवान् । अभ्यान्तः , अभ्यान्तवान् ; अभ्यमितः , अभ्यमितवान् ।।७५।।

**हृषेः केश-लोम-विस्मय-प्रतिघाते ।४।४।७६।।**

हृषेः केशाद्यर्थात् क्तयोरादिरिट् वा न स्यात् । हृष्टाः हृषिताः केशाः ; हृष्टं हृषितं लोमभिः ; हृष्टो हृषितश्चैत्रः ; हृष्टाः हृषिताः दन्ताः ।।७६।।

**अपचितः ।४।४।७७।।**

अपात् चायेः[1] क्तान्तस्य इडभावः , चिश्च वा निपात्यते । अपचितः , अपचायितः ।।७७।।

**सृजि-दृशि-स्कृ-स्वराऽत्वतस्तृजूनित्यानिटस्थवः ।४।४।७८।।**

सृजि-दृशिभ्यां स्कृगः स्वरान्तादत्वतश्च तृचि नित्याऽनिटो विहितस्य थव आदिरिट् वा न स्यात् । सस्रष्ठ , ससर्जिथ ; दद्रष्ठ , ददर्शिथ ; सञ्चस्कर्थ , सञ्चस्करिथ ; ययाथ , ययिथ ; पपक्थ , पेचिथ । तृजूनित्यानिट इति किम् ? ररन्धिथ , शिश्रयिथ । विहितविशेषणं किम् ? चकर्षिथ ।।७८।।

**ऋतः ।४।४।७९।।**

ऋदन्तात् तृजूनित्यानिटो विहितस्य थव आदिरिट् न स्यात् । जहर्थ । तृजूनित्यानिट इत्येव-सस्वरिथ ।।७९।।

**ऋ-वृ-व्ये-ऽद इट् ।४।४।८०।।**

१. चायः पार J3 ।।

एभ्यः परस्य थव आदिरिट् स्यात् । आरिथ , ववरिथ , संविव्ययिथ , आदिथ ॥८०॥

**स्क्रसृ-वृ-भृ-स्तु-द्रु-श्रु-स्त्रोर्व्यञ्जनादेः परोक्षायाः ।४।४।८१॥**

स्कृगः स्रादिवर्जेभ्यश्च सर्वधातुभ्यः परस्याः परोक्षायाः व्यञ्जनादेरादिरिट् स्यात् । संचस्करिव , ददिव , चिच्यिवहे । स्क्रिति किम् ? चकृव । स्रादिवर्जनं किम् ? ससृव ; ववृव , ववृवहे ; बभर्थ , तुष्टोथ , दुद्रोथ , शुश्रोथ , सुस्रोथ ॥८१॥

**घसेकस्वराऽऽतः क्वसोः ।४।४।८२॥**

घसेरेकस्वराद् आदन्ताच्च धातोः परस्य क्वसोः परोक्षाया आदिरिट् स्यात् । जक्षिवान् , आदिवान् , ययिवान् । परोक्षाया इत्येव-विद्वान् ॥८२॥

**गम-हन-विद्ऌ-विश-दृशो वा ।४।४।८३॥**

एभ्यः परस्य क्वसोरादिरिट् वा स्यात् । जग्मिवान् , जगन्वान् ; जघ्निवान् , जघन्वान् ; विविदिवान् ; विविद्वान् , विविशिवान् , विविश्वान् ; ददृशिवान् , ददृश्वान् ॥८३॥

**सिचोऽञ्जेः ।४।४।८४॥**

अञ्जेः सिच आदिरिट् स्यात् । आञ्जीत् ॥८४॥

**धूग्-सु-स्तोः परस्मै ।४।४।८५॥**

एभ्यः परस्मैपदे सिच आदिरिट् स्यात् । अधावीत् , असावीत् , अस्तावीत् । परस्मै इति किम् ? अधोष्ट ॥८५॥

**यमि-रमि-नम्यातः सोऽन्तश्च ।४।४।८६॥**

एभ्य आदन्तेभ्यश्च परस्मैपदे सिच आदिरिट् स्यात् , एषां च सन्तः । अयंसीत् , व्यरंसीत् , अनंसीत् , अयासिष्टाम् ॥८६॥

**ईशीडः से-ध्वे-स्व-ध्वमोः ।४।४।८७॥**

आभ्यां वर्त्तमानासे-ध्वयोः पञ्चमीस्व-ध्वमोश्चादिरिट् स्यात् । ईशिषे , ईशिध्वे , ईशिष्व , ईशिध्वम् ; ईडिषे , ईडिध्वे , ईडिष्व , ईडिध्वम् ॥८७॥

**रुत्पञ्चकाच्छिदयः ।४।४।८८॥**

रुदादेः पञ्चतः परस्य व्यञ्जनादेः शितोऽयादेरादिरिट् स्यात् । रोदिति , स्वपिति , प्राणिति , श्वसिति , जक्षिति । अय इति किम् ? रुद्यात् । * शित इति किम् ? रोत्स्यति * ॥८८॥

**दि-स्योरीट् ।४।४।८९॥**

रुत्पञ्चकात् दिस्योः शितोरादिरीट् स्यात् । अरोदीत् , अरोदीः ॥८९॥

**अदश्चाऽट् ।४।४।९०॥**

अत्ते रुत्पञ्चकाच्च दिस्योरादिरट् स्यात् । आदत् , आदः ; अरोदत् , अरोदः ॥९०॥

**संपरेः कृगः स्सट् ।४।४।९१॥**

आभ्यां परस्य कृग आदिः स्सट् स्यात् । संस्करोति कन्याम् , परिष्करोति ॥९१॥

**उपाद् भूषा-समवाय-प्रतियत्न-विकार-वाक्याध्याहारे ।४।४।९२॥**

उपात् परस्य कृगो भूषादिष्वर्थेष्वादिः स्सट् स्यात् । कन्यामुपस्करोति , तत्र न उपस्कृतम् , एधोदकमुपस्कुरुते , उपस्कृतं भुङ्क्ते , सोपस्कारं सूत्रम् ॥९२॥

**किरो लवने ।४।४।९३॥**

उपात् किरतेः स्सडादिः स्यात् , लवनविषयार्थश्चेत् । उपस्कीर्य मद्रका लुनन्ति । लवन इति किम् ? उपकिरति पुष्पम् ॥९३॥

**प्रतेश्च वधे ।४।४।९४॥**

प्रतेरुपाच्च किरतेर्हिंसायां विषयेऽर्थे वा स्सडादिः स्यात् । प्रतिस्कीर्णम् उपस्कीर्णं वा ह ते वृषल भूयात् , प्रतिचस्करे नखैः । वध इति किम् ? प्रतिकीर्णं बीजम् ॥९४॥

**अपाच्चतुष्पात्-पक्षि-शुनि हृष्टा-ऽन्ना-ऽऽश्रयाऽर्थे ।४।४।९५॥**

अपात् किरतेः चतुष्पदि पक्षिणि शुनि च कर्तरि यथासङ्ख्यं हृष्टेऽन्नार्थिनि आश्रयार्थिनि स्सडादिः स्यात् । अपस्किरते गौर्हृष्टः , कुक्कुटो भक्ष्यार्थी , आश्रयार्थी

१. यकारादेरादि P3 पासं१ विना ॥ २. प्राणिति श्वसिति जक्षिति J3 विना नास्ति ॥ ३. अयिति पा१,४ विना । अयीति पा२ J3 ॥ * * पा१, P2, P3 सं, J3 विना नास्ति ॥ ४. शित इति किम् ? स्वप्ता P3सं । शित इति किम् ? स्वप्स्यति पा१ ॥

वा श्वा ।।९५।।

## वौ विष्किरो वा ।४।४।९६।।

पक्षिणि वाच्ये विकिरतेः स्सड् वा निपात्यते । विष्किरः , विकिरो वा पक्षी ।।९६।।

## प्रात् तुम्पतेर्गवि ।४।४।९७।।

प्रात् तुम्पतेर्गवि कर्त्तरि स्सडादिः स्यात् । प्रस्तुम्पति गौः । गवीति किम् ? प्रतुम्पति तरुः ।।९७।।

## उदितः स्वरान्नोऽन्तः ।४।४।९८।।

उदितो धातोः स्वरात् परो न् अन्तः स्यात् । नन्दति , कुण्डा ।।९८।।

## मुचादि-तृफ-दृफ-गुफ-शुभोभः शे ।४।४।९९।।

एषां शे परे स्वरान्न् अन्तः स्यात् । मुञ्चति , पिंशति , तृम्फति , दृम्फति , गुम्फति , शुम्भति , उम्भति ।।९९।।

## जभः स्वरे ।४।४।१००।।

जभः स्वरात् परः स्वरे परे न् अन्तः स्यात् । जम्भः ।।१००।।

## रध इटि तु परोक्षायामेव ।४।४।१०१।।

रधः स्वरात् परः स्वरादौ प्रत्यये न् अन्तः स्यात् , इडादौ तु परोक्षायामेव । रन्धः , ररन्धिव । परोक्षायामेवेति किम् ? रधिता ।।१०१।।

## रभोऽपरोक्षा-शवि ।४।४।१०२।।

रभः[1] स्वरात् परः परोक्षा-शव्वर्जे स्वरादौ प्रत्यये न् अन्तः स्यात् । आरम्भः । अपरोक्षाशवीति किम् ? आरेभे , आरभते ।।१०२।।

## लभः ।४।४।१०३।।

लभः स्वरात् परः परोक्षा-शव्वर्जे स्वरादौ प्रत्यये न् अन्तः स्यात् । लम्भकः ।।१०३।।

## आङो यि ।४।४।१०४।।

आङः परस्य लभः स्वरात् परो यादौ प्रत्यये न् अन्तः स्यात् । आलम्भ्या

१. रभेः J2 पा१,३ ।।

गौः । यीति किम् ? आलब्धाः ॥१०४॥

**उपात् स्तुतौ ।४।४।१०५॥**

उपात् परस्य लभः स्वरात् परो यादौ प्रत्यये स्तुतौ गम्यायां न् अन्तः स्यात् । उपलम्भ्या विद्या । स्तुताविति किम् ? उपलभ्या वार्त्ता ॥१०५॥

**ञि-ख्णमोर्वा ।४।४।१०६॥**

ञौ ख्णमि च लभः स्वरात् परो न् अन्तो वा स्यात् । अलाभि , अलम्भि । लाभंलाभम् , लम्भंलम्भम् ॥१०६॥

**उपसर्गात् खल्घञोश्च ।४।४।१०७॥**

उपसर्गाद् लभः स्वरात् परः खल्-घञोर्ञि-ख्णमोश्च परयोर्न् अन्तः स्यात् । दुष्प्रलम्भम् , प्रलम्भः , प्रालम्भि , प्रलम्भंप्रलम्भम् । उपसर्गादिति किम् ? लाभः ॥१०७॥

**सु-दुर्भ्यः ।४।४।१०८॥**

आभ्यां व्यस्त-समस्ताभ्याम् उपसर्गात् पराभ्यां परस्य लभः , स्वरात् परः खल्घञोर्न् अन्तः स्यात् । अतिसुलम्भम् , अतिदुर्लम्भम् ; अतिसुदुर्लम्भम् , अतिसुलम्भः , अतिदुर्लम्भः ; अतिसुदुर्लम्भः । उपसर्गादित्येव-सुलभम् ॥१०८॥

**नशो धुटि ।४।४।१०९॥**

नशेः स्वरात् परो धुडादौ प्रत्यये न् अन्तः स्यात् । नंष्टा । धुटीति किम् ? नशिता[1] ॥१०९॥

**मस्जेः सः ।४।४।११०॥**

मस्जेः स्वरात् परस्य सो धुडादौ प्रत्यये न् अन्तः स्यात् । मङ्क्ता ॥११०॥

**अः सृजि-दृशोऽकिति ।४।४।१११॥**

अनयोः स्वरात् परो धुडादौ प्रत्यये अदन्तः स्यात् , न तु किति । स्रष्टा , द्रष्टुम् । अकितीति किम् ? सृष्टः ॥१११॥

**स्पृशादि-सृपो वा ।४।४।११२॥**

स्पृश-मृश-कृष-तृप-दृपां सृपश्च स्वरात् परो धुडादौ प्रत्यये अदन्तो वा स्यात् , अकिति । स्प्रष्टा , स्पर्ष्टा ; म्रष्टा , मर्ष्टा ; क्रष्टा , कर्ष्टा ; त्रप्ता , तर्प्ता

१. नश्यति पा२, P1मू ॥

; द्रप्ता , दर्प्ता ; स्रप्ता , सर्प्ता ॥११२॥

**ह्रस्वस्य तः पित्कृति ।४।४।११३॥**

ह्रस्वान्तस्य धातोः पिति कृति त् अन्तः स्यात् । जगत् । ह्रस्वस्येति किम् ? ग्रामणीः । कृतीति किम् ? अजुहवुः ॥११३॥

**अतो म आने ।४।४।११४॥**

धातोर्विहिते आने अतो म् अन्तः स्यात् । पचमानः । अत इति किम् ? शयानः ॥११४॥

**आसीनः ।४।४।११५॥**

आस्तेः परस्य आनस्याऽऽदेरीर्निपात्यते । उदासीनः ॥११५॥

**ऋतां क्ङितीर् ।४।४।११६॥**

ऋदन्तस्य धातोः क्ङिति प्रत्यये ऋत इर् स्यात् । तीर्णम् , किरति ॥११६॥

**ओष्ठ्यादुर् ।४।४।११७॥**

धातोरोष्ठ्यात् परस्य ॠतः क्ङित्युर् स्यात् । पूः , बुभूर्षति , वुवूर्षते ॥११७॥

**इसासः शासोऽङ्-व्यञ्जने ।४।४।११८॥**

शास्तेरंशस्याऽऽसोऽङि क्ङिति व्यञ्जनादौ च परे इस् स्यात् । अशिषत् , शिष्टः । अङ्व्यञ्जन इति किम् ? शासति ॥११८॥

**कौ ।४।४।११९॥**

शास आसः कौ इस् स्यात् । मित्रशीः ॥११९॥

**आङः ।४।४।१२०॥**

आङः परस्य शास आसः कावेव इस् स्यात् । आशीः । कावित्येव - आशास्ते ॥१२०॥

**य्वोः प्वय्व्यञ्जने लुक् ।४।४।१२१॥**

पौ युवर्जव्यञ्जनादौ च परे य्वोर्लुक् स्यात् । क्नोपयति , क्ष्मातम् , देदिवः , कण्डूः । य्वर्जनं किम् ? क्नूय्यते ॥१२१॥

**कॄतः कीर्त्तिः ।४।४।१२२॥**

कॄतणः कीर्त्तिः स्यात् । कीर्त्तयति ॥१२२॥

इत्याचार्यश्री**हेमचन्द्र**विरचितायां
**सिद्धहेमचन्द्रा**भिधानस्वोपज्ञशब्दानुशासनलघुवृत्तौ
चतुर्थस्याध्यायस्य चतुर्थः पादः समाप्तः[1] ॥४।४॥

॥ चतुर्थोऽध्यायः समाप्तः ॥

**दुर्योधनो**र्वीपतिजैत्रबाहुर्गृहीतचेदीशकरोऽवतीर्णः ।
अनुग्रहीतुं पुनरिन्दुवंशं श्री**भीमदेवः** किल **भीम** एव ॥१६॥

१. **समाप्तः** P2, P3 मध्ये नास्ति ॥

# [ अथ पञ्चमाध्यायः][1]

## [प्रथमः पादः]

### आ तुमोऽत्यादिः कृत् ।५।१।१।।

धातोर्विधीयमानस्त्यादिवर्जो वक्ष्यमाणः प्रत्ययस्तुमभिव्याप्य कृत् स्यात् । घनघात्यः । अत्यादिरिति किम् ? प्रणिंस्ते ।।१।।

### बहुलम् ।५।१।२।।

कृद्[2] यथानिर्दिष्टादर्थादन्यत्रापि बहुलं स्यात् । पादहारकः , मोहनीयं कर्म , संप्रदानम् ।।२।।

### कर्त्तरि ।५।१।३।।

कृत् अर्थविशेषोक्तिं विना कर्त्तरि स्यात् । कर्त्ता ।।३।।

### व्याप्ये घुर-केलिम-कृष्टपच्यम् ।५।१।४।।

घुर-केलिमौ प्रत्ययौ कृष्टपच्यश्च व्याप्ये कर्त्तरि स्युः । भङ्गुरं काष्ठम् , पचेलिमा माषाः , कृष्टपच्याः शालयः ।।४।।

### संगतेऽजर्यम् ।५।१।५।।

संगमनं संगतम् , तस्मिन् कर्त्तरि नञ्पूर्वात् जॄषो यो निपात्यते । अजर्यम् आर्यसंगतम् । संगत इति किम् ? अजरः पटः ।।५।।

### रुच्या-ऽव्यथ्य-वास्तव्यम् ।५।१।६।।

एते कर्त्तरि निपात्यन्ते । रुच्यः , अव्यथ्यः , वास्तव्यः ।।६।।

### भव्य-गेय-जन्य-रम्या-ऽऽपात्या-ऽऽप्लाव्यं नवा ।५।१।७।।

एते कर्त्तरि वा निपात्यन्ते । भव्यः , गेयः साम्नाम् , जन्यः , रम्यः , आपात्यः , आप्लाव्यः ; पक्षे -भव्यम् , गेयानि सामानि , जन्यम् , रम्यः , आपात्यम् , आप्लाव्यं तैः ।।७।।

### प्रवचनीयादयः ।५।१।८।।

---

१. पञ्चमाध्यायस्य लघुवृत्तिः इमान् हस्तलिखितादर्शानवलम्ब्य संशोधिता — J1. J2. J3. पा१. पा२. पा३. पा४. पा५. P1. P2. P3. । एषामादर्शानां स्वरूपं ग्रन्थस्यादावेव दर्शितमस्माभिः ।। २. कृन्निर्देक्ष्यमाणादर्था° पा१ ।।

एते अनीयप्रत्ययान्ताः कर्त्तरि वा निपात्यन्ते । प्रवचनीयो गुरुः शास्त्रस्य , प्रवचनीयं गुरुणा शास्त्रम् ; उपस्थानीयः शिष्यो गुरोः , उपस्थानीयः शिष्येण गुरुः ॥८॥

**श्लिष-शीङ्-स्था-ऽऽस-वस-जन-रुह-जॄ-भजेः क्तः ।५।१।९॥**

एभ्यः क्तो यो विहितः स कर्त्तरि वा स्यात् । आश्लिष्टः कान्तां चैत्रः , आश्लिष्टा कान्ता तैः ; अतिशयितो गुरुं शिष्यः , अतिशयितो गुरुः शिष्यैः ; उपस्थितो गुरुं शिष्यः , उपस्थितो गुरुः शिष्यैः ; उपासिता गुरुं ते , उपासितो गुरुस्तैः , अनूषिता गुरुं ते , अनूषितो गुरुस्तैः ; अनुजातास्तां ते , अनुजाता सा तैः ; आरूढोऽश्वं सः , आरूढोऽश्वस्तैः ; अनुजीर्णास्तां ते , अनुजीर्णा सा तैः , विभक्ताः स्वं ते , विभक्तं स्वं तैः ॥९॥

**आरम्भे ।५।१।१०॥**

भूते[1] यः क्तो विहितः स आरम्भार्थाद् धातोः कर्त्तरि वा स्यात् । प्रकृताः कटं ते , प्रकृतः कटस्तैः ॥१०॥

**गत्यर्था-ऽकर्मक-पिब-भुजेः ।५।१।११॥**

भूते[1] यः क्तो विहितः स एभ्यः कर्त्तरि वा स्यात् । गतोऽसौ ग्रामम् , गतोऽसौ तैः ; आसितोऽसौ , आसितं तैः ; पीताः पयः , पीतं पयः ; भुक्तास्ते , इदं तैर्भुक्तम् ॥११॥

**अद्यर्थाच्चाऽऽधारे ।५।१।१२॥**

आहारार्थात् धातोर्गत्यर्थादेश्च भूते[2] यः क्तः स आधारे वा स्यात् । इदमेषां जग्धम् , तैर्जग्धम् ; इदं तेषां यातम् , तैर्यातम् ; इदमेषां शयितम् , तैः शयितम् ; इदं गवां पीतम् , गोभिः पीतम् ; इदं तेषां भुक्तम् , तैर्भुक्तम् ॥१२॥

**क्त्वा-तुमम् भावे ।५।१।१३॥**

१. **भूतादौ यः** J1,2, पा१,३, P3 विना । "भूतादित्वेन विवक्षिते" इति बृहद्वृत्तेः J प्रतौ, "भूतत्वेन विवक्षिते" इति तु K प्रतौ P प्रतौ च । "भूतादित्वेन विवक्षिते" इति **आदिशब्दाद्** वर्तमानत्व-भविष्यत्त्वोरपि परिग्रहः, यथा ज्ञातुमारभते प्रज्ञातः, कषितुं प्रारप्स्यत इति प्रकष्टः" इति बृहद्वृत्तेर्लघुन्यासे ॥ २. **भूतादौ यः** पा१,३, P2,3, J1,3, बृहद्वृत्तेः K प्रतिं च विना । J2, पा४,५ मध्ये बृहद्वृत्तेः J प्रतौ च **'भूते'** इति **'भूतादौ'** इति वा किमपि नास्ति ॥

एते धात्वर्थमात्रे स्युः । कृत्वा , कर्त्तुम् , कारं कारं याति ॥१३॥

**भीमादयोऽपादाने ।५।१।१४॥**

एतेऽपादाने स्युः । भीमः , भयानकः ॥१४॥

**संप्रदानाच्चान्यत्रोणादयः ।५।१।१५॥**

संप्रदानापादानादन्यत्रार्थे उणादयः स्युः । कारुः , कृषिः ॥१५॥

**असरूपोऽपवादे वोत्सर्गः प्राक् क्तेः ।५।१।१६॥**

इतः सूत्रादारभ्य *स्त्रियां क्तिः* [५।३।९१] इत्यतः प्राग् योऽपवादस्तद्विषयेऽपवादेनासमानरूप औत्सर्गिकः प्रत्ययो वा स्यात् । अवश्यलाव्यम् , अवश्यलवितव्यम् । असरूप इति किम् ? घ्यणि यो न, कार्यम् । प्राक् क्तेरिति किम् ? कृतिः , चिकीर्षा ॥१६॥

**ऋवर्ण-व्यञ्जनाद् घ्यण् ।५।१।१७॥**

ऋवर्णान्ताद् व्यञ्जनान्ताच्च धातोर्घ्यण् स्यात् । कार्यम् , पाक्यम् ॥१७॥

**पाणि-समवाभ्यां सृजः ।५।१।१८॥**

आभ्यां सृजेर्घ्यण् स्यात् । पाणिसर्ग्या , समवसर्ग्या रज्जुः ॥१८॥

**उवर्णादावश्यके ।५।१।१९॥**

अवश्यम्भावे द्योत्ये धातोरुवर्णान्ताद् घ्यण् स्यात् । लाव्यम् , अवश्यपाव्यम् ॥१९॥

**आसु-यु-वपि-रपि-लपि-त्रपि-डिपि-दभि-चम्यानमः ।५।१।२०॥**

आङ्पूर्वाभ्यां सुग्-नम्भ्यां यौत्यादेश्च घ्यण् स्यात् । आसाव्यम् , याव्यम् , वाप्यम् , राप्यम् , लाप्यम् , अपत्राप्यम् , डेप्यम् , दाभ्यम् , आचाम्यम् , आनाम्यम् ॥२०॥

**वाऽऽधारेऽमावस्या ।५।१।२१॥**

अमापूर्वाद् वसतेराधारे घ्यण् धातोर्वा ह्रस्वश्च निपात्यते । अमावस्या , अमावास्या ॥२१॥

**संचाय्य-कुण्डपाय्य-राजसूयं क्रतौ ।५।१।२२॥**

एते क्रतावर्थे घ्यणन्ता निपात्यन्ते । संचाय्यः , कुण्डपाय्यः , राजसूयः

क्रतुः ॥२२॥

**प्रणाय्यो निष्कामा-ऽसंमते ।५।१।२३॥**

प्राद् नियो घ्यणायादेशौ स्यातां निष्कामेऽसंमते चार्थे । प्रणाय्यः शिष्यश्चौरो वा ॥२३॥

**धाय्या-पाय्य-सान्नाय्य-निकाय्यमृङ्-मान-हवि-र्निवासे ।५।१।२४॥**

एते ऋगादिषु यथासङ्ख्यं घ्यणन्ता निपात्यन्ते । धाय्या ऋक् , पाय्यं मानम् , सान्नाय्यं हविः , निकाय्यो निवासः ॥२४॥

**परिचाय्योपचाय्या-ऽऽनाय्य-समूह्य-चित्यमग्नौ ।५।१।२५॥**

एतेऽग्नौ निपात्यन्ते । परिचाय्यः , उपचाय्यः , आनाय्यः , समूह्यः , चित्यो वाऽग्निः ॥२५॥

**याज्या दानर्चि ।५।१।२६॥**

यजेः करणे दानर्चि घ्यण् स्यात् । याज्या ॥।२६॥

**तव्या-ऽनीयौ ।५।१।२७॥**

एतौ धातोः स्याताम् । कर्त्तव्यः , करणीयः ॥२७॥

**य एच्चाऽऽतः ।५।१।२८॥**

स्वरान्ताद् धातोर्यः स्यात् , आत एच्च । चेयम् , देयम् ॥२८॥

**शकि-तकि-चति-यति-शसि-सहि-यजि-भजि-पवर्गात् ।५।१।२९॥**

एभ्यः पवर्गान्ताच्च यः स्यात् । शक्यम् , तक्यम् , चत्यम् , यत्यम् , शस्यम् , सह्यम् , यज्यम् , भज्यम् , तप्यम् , गम्यम् ॥२९॥

**यम-मद-गदोऽनुपसर्गात् ।५।१।३०॥**

एभ्योऽनुपसर्गेभ्यो यः स्यात् । यम्यम् , मद्यम् , गद्यम् । अनुपसर्गादिति किम् ? आयाम्यम् ॥३०॥

**चरेराङस्त्वगुरौ ।५।१।३१॥**

अनुपसर्गाच्चरेराङ्पूर्वात् तु अगुरौ यः स्यात् । चर्यम् , आचर्यो देशः । अगुराविति किम् ? आचार्यः ॥३१॥

१. यमि-मदि-गदो J2,3 पा३, P3मू, पासं२ । यममदिगदो J1सं । यममदेगदो पा५ ॥

**वर्योपसर्या-ऽवद्य-पण्यमुपेयर्तुमती-गर्ह्य-विक्रेये ।५।१।३२॥**

एते उपेयादिषु यथासङ्ख्यं यान्ता निपात्यन्ते । वर्या कन्या , उपसर्या गौः , अवद्यं गर्ह्यम् , पण्या गौः ॥३२॥

**स्वामि-वैश्येऽर्यः ।५।१।३३॥**

अर्त्तेः स्वामि-वैश्ययोर्यः स्यात् । अर्यः स्वामी वैश्यो वा , आर्योऽन्यः ॥३३॥

**वह्यं करणे ।५।१।३४॥**

वहेः करणे यः स्यात् । वह्यं शकटम् ॥३४॥

**नाम्नो वदः क्यप् च ।५।१।३५॥**

अनुपसर्गान्नाम्नः पराद् वदेः क्यप्-यौ स्याताम् । ब्रह्मोद्यम् , ब्रह्मवद्यम् । नाम्न इति किम् ? वाद्यम् ॥३५॥

**हत्या-भूयं भावे ।५।१।३६॥**

अनुपसर्गान्नाम्नः परौ हत्या-भूयौ भावे क्यबन्तौ साधू स्तः । ब्रह्महत्या , देवभूयं गतः । भाव इति किम् ? श्वघात्या सा ॥३६॥

**अग्निचित्या ।५।१।३७॥**

अग्नेः पराच्चेः स्त्रीभावे क्यप् स्यात् । अग्निचित्या ॥३७॥

**खेय-मृषोद्ये ।५।१।३८॥**

एतौ क्यबन्तौ साधू स्तः । निखेयम् , मृषोद्यम् ॥३८॥

**कुप्य-भिद्योध्य-सिध्य-तिष्य-पुष्य-युग्या-ऽऽज्य-सूर्यं नाम्नि ।५।१।३९॥**

एते क्यबन्ताः संज्ञायां निपात्यन्ते । कुप्यं धनम् , भिद्यः , उध्यो नदः , सिध्यः , तिष्यः , पुष्यः , युग्यं वाहनम् , आज्यं घृतम् , सूर्यो रविः ॥३९॥

**दृ-वृग्-स्तु-जुषेति-शासः ।५।१।४०॥**

एभ्यः क्यप् स्यात् । आदृत्यः , प्रावृत्यः , अवश्यस्तुत्यः , जुष्यः , इत्यः , शिष्यः ॥४०॥

**ऋदुपान्त्यादकृपि-चृदृचः ।५।१।४१॥**

ऋदुपान्त्याद् धातोः कृपि-चृति-ऋचिवर्जात् क्यप् स्यात् । वृत्यम् । अकृपि-चृदृच इति किम् ? कल्प्यम् , चर्त्यम् , अर्च्यम् ॥४१॥

**कृ-वृषि-मृजि-शंसि-गुहि-दुहि-जपो वा ।५।१।४२॥**

एभ्यः क्यप् वा स्यात् । कृत्यम् , कार्यम् ; वृष्यम् , वर्ष्यम् ; मृज्यम् , मार्ग्यम् ; शस्यम् , शंस्यम् ; गुह्यम् ; गोह्यम् , दुह्यम् ; दोह्यम् , जप्यम् , जाप्यम् ॥४२॥

**जि-विपू-न्यो हलि-मुञ्ज-कल्के ।५।१।४३॥**

जेर्विपूर्वाभ्यां च पू-नीभ्यां यथासङ्ख्यं हलि-मुञ्ज-कल्केषु कर्मसु क्यप् स्यात् । जित्यो हलिः , विपूयो मुञ्जः , विनीयः कल्कः । हलि-मुञ्ज-कल्क इति किम् ? जेयम् , विपव्यम् , विनेयम् ॥४३॥

**पदा-ऽस्वैरि-बाह्या-पक्ष्ये ग्रहः ।५।१।४४॥**

एष्वर्थेषु ग्रहेः क्यप् स्यात् । प्रगृह्यं पदम् , गृह्याः परतन्त्राः , ग्रामगृह्या बाह्येत्यर्थः , गुणगृह्या गुणपक्ष्याः ॥४४॥

**भृगोऽसंज्ञायाम् ।५।१।४५॥**

भृगोऽसंज्ञायां क्यप् स्यात् । भृत्यः पोष्यः । असंज्ञायामिति किम् ? भार्या पत्नी ॥४५॥

**समो वा ।५।१।४६॥**

संपूर्वाद् भृगः क्यप् वा स्यात् । संभृत्यः , संभार्यः ॥४६॥

**ते कृत्याः ।५।१।४७॥**

घ्यण्-तव्या-ऽनीय-य-क्यप्प्रत्ययाः कृत्याः स्युः ॥४७॥

**णक-तृचौ ।५।१।४८॥**

धातोरेतौ स्याताम् । पाचकः , पक्ता ॥४८॥

**अच् ।५।१।४९॥**

धातोरच् स्यात् । करः , हरः ॥४९॥

**लिहादिभ्यः ।५।१।५०॥**

एभ्योऽच् स्यात् । लेहः , शेषः ॥५०॥

**ब्रुवः ।५।१।५१॥**

ब्रूगोऽचि ब्रुव्[1] स्यात् । ब्राह्मणब्रुवः ॥५१॥

**नन्यादिभ्योऽनः ।५।१।५२॥**

एभ्यो नामगणदृष्टेभ्योऽनः स्यात् । नन्दनः , वासनः , सहनः , संक्रन्दनः , सर्वदमनः , नर्दनः ॥५२॥

**ग्रहादिभ्यो णिन् ।५।१।५३॥**

एभ्यो णिन् स्यात् । ग्राही , स्थायी ॥५३॥

**नाम्युपान्त्य-प्री-कृ-गृ-ज्ञः कः ।५।१।५४॥**

नाम्युपान्त्येभ्यो धातुभ्यः , प्रचादिभ्यश्च कः स्यात् । विक्षिपः , प्रियः , किरः , गिरः , ज्ञः ॥५४॥

**गेहे ग्रहः ।५।१।५५॥**

गेहेऽर्थे ग्रहेः कः स्यात् । गृहम् , गृहाः ॥५५॥

**उपसर्गादातो डोऽश्यः ।५।१।५६॥**

उपसर्गात् परात् श्यैङ्वर्जादाकारान्ताद् धातोर्डः स्यात् । आह्वः । उपसर्गादिति किम् ? दायः । अश्य इति किम् ? अवश्यायः ॥५६॥

**व्याघ्रा-ऽऽघ्रे प्राणि-नसोः ।५।१।५७॥**

एतौ यथासङ्ख्यं प्राणिनि नासिकायां चार्थे घ्रो डे निपात्येते । व्याघ्रः , आघ्रा ॥५७॥

**घ्रा-ध्मा-पा-ट्धे-दृशः शः ।५।१।५८॥**

एभ्यः शः स्यात् । जिघ्रः , उद्धमः , पिबः , उद्धयः , उत्पश्यः ॥५८॥

**साहि-साति-वेद्युदेजि-धारि-पारि-चेतेरनुपसर्गात् ।५।१।५९॥**

एभ्योऽनुपसर्गेभ्यो ण्यन्तेभ्यः शः स्यात् । साहयः , सातयः , वेदयः , उदेजयः , धारयः , पारयः , चेतयः । अनुपसर्गादिति किम् ? प्रसाहयिता ॥५९॥

**लिम्प-विन्दः ।५।१।६०॥**

१. ब्रुवः P2 पासं२ ॥

आभ्यामनुपसर्गाभ्यां शः स्यात् । लिम्पः , विन्दः ॥६०॥

**नि-गवादेर्नाम्नि ।५।१।६१॥**

यथासङ्ख्यं निपूर्वाल्लिम्पेर्गवादिपूर्वाच्च विन्देः संज्ञायां शः स्यात् । निलिम्पा देवाः , गोविन्दः , कुविन्दः । नाम्नीति किम् ? निलिपः ॥६१॥

**वा ज्वलादि-दु-नी-भू-ग्रहा-ऽऽस्रोर्णः ।५।१।६२॥**

ज्वलादे[1]र्द्वादेरास्रोश्चानुपसर्गाण् णो वा स्यात् । ज्वलः , ज्वालः ; चलः चालः ; दवः , दावः ; नयः , नायः ; भवः , भावः ; ग्राहो मकरादिः , ग्रहः सूर्यादिः ; आस्रवः , आस्रावः । अनुपसर्गादित्येव-प्रज्वलः ॥६२॥

**अवहृ-सा-संस्रोः ।५।१।६३॥**

अवपूर्वाभ्यां हृ-साभ्यां संपूर्वाच्च स्रोर्णः स्यात् । अवहारः , अवसायः , संस्रावः ॥६३॥

**तन्-व्यधीण्-श्वसातः ।५।१।६४॥**

एभ्य आदन्तेभ्यश्च धातुभ्यो णः स्यात् । तानः , व्याधः , प्रत्यायः , श्वासः , अवश्यायः ॥६४॥

**नृत्-खन्-रञ्जः शिल्पिन्यकट् ।५।१।६५॥**

एभ्यः शिल्पिनि कर्त्तर्यकट् स्यात् । नर्त्तकी , खनकः , रजकः । शिल्पिनीति किम् ? नर्त्तिका ॥६५॥

**गस्थकः ।५।१।६६॥**

गः शिल्पिनि कर्त्तरि थकः स्यात् । गाथकः ॥६६॥

**टनण् ।५।१।६७॥**

गः शिल्पिनि टनण् स्यात् । गायनी ॥६७॥

**हः काल-व्रीह्योः ।५।१।६८॥**

हाको हाङो वा काल-व्रीह्योष्टनण् स्यात् । हायनो वर्षम् , हायना व्रीहयः , हाताऽन्यः ॥६८॥

**प्रु-सृ-ल्वोऽकः साधौ ।५।१।६९॥**

१. 'ज्वलादेः दु-आदेः आस्रोश्च' इति पदच्छेदः । 'ज्वलादेर्धातोर्दुनोत्यादेरास्रोश्चा' P2, J3 ॥

एभ्यः साध्वर्थेभ्योऽकः स्यात् । प्रवकः , सरकः , लवकः । साधाविति किम् ? प्रावकः ।।६९।।

**आशिष्यकन् ।५।१।७०।।**

आशिषि गम्यायां धातोरकन् स्यात् । जीवका । आशिषीति किम् ? जीविका ।।७०।।

**तिक्कृतौ नाम्नि ।५।१।७१।।**

आशीर्विषये संज्ञायां गम्यायां धातोस्तिक् कृतश्च स्युः । शान्तिः , वीरभूः , वर्द्धमानः ।।७१।।

**कर्मणोऽण् ।५।१।७२।।**

कर्मणः परात् धातोरण् स्यात् । कुम्भकारः ।।७२।।

**शीलि-कामि-भक्ष्याचरीक्षि-क्षमो णः ।५।१।७३।।**

कर्मणः परेभ्यः एभ्यो णः स्यात् । धर्मशीला , धर्मकामा , वायुभक्षा , कल्याणाचारा , सुखप्रतीक्षा , बहुक्षमा ।।७३।।

**गायोऽनुपसर्गाट्टक् ।५।१।७४।।**

कर्मणः परादनुपसर्गाद् गायतेष्टक् स्यात् । वक्रगी । अनुपसर्गादिति किम् ? खरुसंगायः ।।७४।।

**सुरा-सीधोः[1] पिबः ।५।१।७५।।**

आभ्यां कर्मभ्यां परादनुपसर्गात् पिबतेष्टक् स्यात् । सुरापी , सीधुपी ।।७५।।

**आतो डोऽह्वा-वा-मः ।५।१।७६।।**

कर्मणः परादनुपसर्गाद् ह्वा-वा-मावर्जादादन्ताद् धातोर्डः स्यात् । गोदः । अह्वा-वा-म इति किम् ? स्वर्गह्वायः , तन्तुवायः , धान्यमायः ।।७६।।

**समः ख्यः ।५।१।७७।।**

कर्मणः परात् संपूर्वात् ख्यो डः स्यात् । गोसङ्ख्यः ।।७७।।

**दश्चाऽऽङः ।५।१।७८।।**

कर्मणः परादाङ्पूर्वाद् दागः ख्यश्च डः स्यात् । दायादः , स्त्र्याख्यः ।।७८।।

१. सीध्वोः पा१,२ ।।

**प्राज्ञश्च ।५।१।७९।।**

कर्मणः परात् प्रपूर्वाद् ज्ञो दारूपाच्च डः स्यात् । पथिप्रज्ञः , प्रपाप्रदः ।।७९।।

**आशिषि हनः ।५।१।८०।।**

कर्मणः पराद् हन्तेराशिषि डः स्यात् । शत्रुहः ।।८०।।

**क्लेशादिभ्योऽपात् ।५।१।८१।।**

क्लेशादिकर्मणः परादपाद् हन्तेर्डः स्यात् । क्लेशापहः , तमोऽपहः ।।८१।।

**कुमार-शीर्षाण्णिन् ।५।१।८२।।**

आभ्यां कर्मभ्यां पराद् हन्तेर्णिन् स्यात् । कुमारघाती , शीर्षघाती ।।८२।।

**अचित्ते टक् ।५।१।८३।।**

कर्मणः पराद् हन्तेरचित्तवति कर्त्तरि टक् स्यात् । वातघ्नं तैलम् । अचित्त इति किम् ? पापघातो यतिः ।।८३।।

**जाया-पतेश्चिह्नवति ।५।१।८४।।**

आभ्यां कर्मभ्यां पराद् हन्तेश्चिह्नवति कर्त्तरि टक् स्यात् । जायाघ्नो ब्राह्मणः , पतिघ्नी कन्या ।।८४।।

**ब्रह्मादिभ्यः ।५।१।८५।।**

एभ्यः कर्मभ्यः पराद् हन्तेष्टक् स्यात् । ब्रह्मघ्नः , गोघ्नः पापी ।।८५।।

**हस्ति-बाहु-कपाटाच्छक्तौ ।५।१।८६।।**

एभ्यः कर्मभ्यः पराद् हन्तेः शक्तौ गम्यायां टक् स्यात् । हस्तिघ्नः , बाहुघ्नः , कपाटघ्नः । शक्ताविति किम् ? हस्तिघातो विषदः ।।८६।।

**नगरादगजे ।५।१।८७।।**

नगरात् कर्मणः पराद् हन्तेरगजे कर्त्तरि टक् स्यात् । नगरघ्नो व्याघ्रः । अगज इति किम् ? नगरघातो हस्ती ।।८७।।

**राजघः ।५।१।८८।।**

राज्ञः कर्मणः पराद् हन्तेष्टक् घाऽऽदेशश्च निपात्यते । राजघः ।।८८।।

**पाणिघ-ताडघौ शिल्पिनि ।५।१।८९।।**

एतौ शिल्पिनि टगन्तौ निपात्येते । पाणिघः , ताडघः । शिल्पिनीति किम्

? पाणिघातः , ताडघातः ॥८९॥

**कुक्ष्यात्मोदराद् भृगः खिः ।५।१।९०॥**

एभ्यः कर्मभ्यः पराद् भृगः खिः स्यात् । कुक्षिम्भरिः , आत्मम्भरिः , उदरम्भरिः ॥९०॥

**अर्होऽच् ।५।१।९१॥**

कर्मणः परादर्हेरच् स्यात् । पूजार्हा साध्वी ॥९१॥

**धनु-र्दण्ड-त्सरु-लाङ्गला-ऽङ्कुशर्ष्टि-यष्टि-शक्ति-तोमर-घटाद् ग्रहः ।५।१।९२॥**

एभ्यः कर्मभ्यः पराद् ग्रहोऽच् स्यात् । धनुर्ग्रहः , दण्डग्रहः , त्सरुग्रहः , लाङ्गलग्रहः , अङ्कुशग्रहः , ऋष्टिग्रहः , यष्टिग्रहः , शक्तिग्रहः , तोमरग्रहः , घटग्रहः ॥९२॥

**सूत्राद् धारणे ।५।१।९३॥**

सूत्रात् कर्मणः पराद् ग्रहो ग्रहणपूर्वकधारणार्थादच् स्यात् । सूत्रग्रहः प्राज्ञः , सूत्रधारो वा । धारण इति किम् ? सूत्रग्राहः ॥९३॥

**आयुधादिभ्यो धृगोऽदण्डादेः ।५।१।९४॥**

दण्डादिवर्जादायुधादेः कर्मणः पराद् धृगोऽच् स्यात् । धनुर्धरः , भूधरः । अदण्डादेरिति किम् ? दण्डधारः , कुण्डधारः ॥९४॥

**हृगो वयोऽनुद्यमे ।५।१।९५॥**

कर्मणः पराद् हृगो वयस्यनुद्यमे च गम्येऽच् स्यात् । अस्थिहरः श्वशिशुः[1] ; उद्यमः उत्क्षेपणमाकाशे धारणं वा , तदभावे मनोहरा माला । वयोऽनुद्यम इति किम् ? भारहारः ॥९५॥

**आङः शीले ।५।१।९६॥**

कर्मणः परादाङ्पूर्वाद् हृगः शीले गम्येऽच् स्यात् । पुष्पाहरः । शील इति किम् ? पुष्पाहारः ॥९६॥

**दृति-नाथात् पशाविः ।५।१।९७॥**

१. अस्थिहरः श्वशिशुः । अंशहरो दायादः उद्यमः- P2 । पा१,२,P1,J1,2 मध्ये तु 'अस्थिहरः श्वशिशुः' इत्यस्य स्थाने 'अंशहरो दायादः' इत्येव पाठः ॥

आभ्यां कर्मभ्यां परात् हृगः पशौ कर्त्तरि इः स्यात्। दृतिहरिः श्वा, नाथहरिः सिंहः ॥९७॥

**रजः-फले-मलाद् ग्रहः ।५।१।९८॥**

एभ्यः कर्मभ्यः पराद् ग्रहेरिः स्यात्। रजोग्रहिः, फलेग्रहिः, मलग्रहिः ॥९८॥

**देव-वातादापः ।५।१।९९॥**

आभ्यां कर्मभ्यां पराद् आपेरिः स्यात्। देवापिः, वातापिः ॥९९॥

**शकृत्-स्तम्बाद् वत्स-व्रीहौ कृगः ।५।१।१००॥**

आभ्यां कर्मभ्यां परात् कृगो यथासङ्ख्यं वत्स-व्रीह्योः कर्त्रोरिः स्यात्। शकृत्करिर्वत्सः, स्तम्बकरिर्व्रीहिः ॥१००॥

**किम्-यत्-तद्-बहोरः ।५।१।१०१॥**

एभ्यः कर्मभ्यः परात् कृगः अः स्यात्। किंकरा, यत्करा, तत्करा, बहुकरा ॥१०१॥

**सङ्ख्या-ऽह-र्दिवा-विभा-निशा-प्रभा-भाश्चित्र-कर्त्राद्यन्ता-ऽनन्त-कार-बाह्वरु-र्धनु-र्नान्दी-लिपि-लिवि-बलि-भक्ति-क्षेत्र-जङ्घा-क्षपा-क्षणदा-रजनि-दोषा-दिन-दिवसाट्टः ।५।१।१०२॥**

सङ्ख्येत्यर्थप्रधानमपि, एभ्यः कर्मभ्यः परात् कृगष्टः स्यात्। सङ्ख्याकरः, द्विकरः; अहस्करः, दिवाकरः, विभाकरः, निशाकरः, प्रभाकरः, भास्करः, चित्रकरः, कर्तृकरः, आदिकरः, अन्तकरः, अनन्तकरः, कारकरः, बाहुकरः, अरुष्करः, धनुष्करः, नान्दीकरः, लिपिकरः, लिविकरः, बलिकरः, भक्तिकरः, क्षेत्रकरः, जङ्घाकरः, क्षपाकरः, क्षणदाकरः, रजनिकरः, दोषाकरः, दिनकरः, दिवसकरः ॥१०२॥

**हेतु-तच्छीला-ऽनुकूलेऽशब्द-श्लोक-कलह-गाथा-वैर-चाटुसूत्र-मन्त्र-पदात् ।५।१।१०३॥**

एषु कर्तृषु शब्दादिवर्जात् कर्मणः परात् कृगष्टः स्यात्। यशस्करी विद्या, श्राद्धकरः, प्रेषणकरः। शब्दादिनिषेधः किम्? शब्दकार इत्यादि ॥१०३॥

## भृतौ कर्मणः ।५।१।१०४॥

कर्मशब्दात् कर्मणः परात् कृगो भृतौ गम्यायां टः स्यात् । कर्मकरी दासी ॥१०४॥

## क्षेम-प्रिय-मद्र-भद्रात् खा-ऽण् ।५।१।१०५॥

एभ्यः कर्मभ्यः परात् कृगः खा-ऽणौ स्याताम् । क्षेमङ्करः ,क्षेमकारः ; प्रियङ्करः , प्रियकारः ; मद्रङ्करः , मद्रकार ; भद्रङ्करः , भद्रकारः ॥१०५॥

## मेघर्त्ति-भया-ऽभयात् खः ।५।१।१०६॥

एभ्यः कर्मभ्यः परात् कृगः खः स्यात् । मेघङ्करः , ऋतिङ्करः , भयङ्करः , अभयङ्करः ॥१०६॥

## प्रिय-वशाद् वदः ।५।१।१०७॥

आभ्यां कर्मभ्यां पराद् वदः खः स्यात् । प्रियंवदः , वशंवदः ॥१०७॥

## द्विषन्तप-परन्तपौ ।५।१।१०८॥

द्विषत्पराभ्यां कर्मभ्यां पराण्ण्यन्तात् तपेः खो ह्रस्वो द्विषतोऽच्च निपात्यते । द्विषन्तपः , परन्तपः ॥१०८॥

## परिमाणार्थ-मित-नखात् पचः ।५।१।१०९॥

प्रस्थादि-मित-नखेभ्यः कर्मभ्यः परात् पचेः खः स्यात् । प्रस्थम्पचः , मितम्पचः , नखम्पचः ॥१०९॥

## कूला-ऽभ्र-करीषात् कषः ।५।१।११०॥

एभ्यः कर्मभ्यः कषेः खः स्यात् । कूलङ्कषा , अभ्रङ्कषा , करीषङ्कषा ॥११०॥

## सर्वात् सहश्च ।५।१।१११॥

सर्वात् कर्मणः परात् सहेः कषेश्च खः स्यात् । सर्वंसहः , सर्वङ्कषः ॥१११॥

## भृ-वृ-जि-तॄ-तप-दमेश्च नाम्नि ।५।१।११२॥

कर्मणः परेभ्य एभ्यः सहश्च संज्ञायां खः स्यात् । विश्वम्भरा भूः , पतिंवरा कन्या , शत्रुञ्जयोऽद्रिः , रथन्तरं साम , शत्रुन्तपो राजा , बलिन्दमः कृष्णः , शत्रुंसहो राजा । नाम्नीति किम् ? कुटुम्बभारः ॥११२॥

## धारेर्धर्च ।५।१।११३॥

कर्मणः पराद् धारेः संज्ञायां खः स्यात् , धारेश्च धर्। वसुन्धरा भूः ॥११३॥

**पुरन्दर-भगन्दरौ ।५।१।११४॥**

एतौ संज्ञायां खान्तौ निपात्येते। पुरन्दरः शक्रः , भगन्दरो व्याधिः ॥११४॥

**वाचंयमो व्रते ।५।१।११५॥**

व्रते गम्ये वाचः कर्मणः पराद् यमेः खो वाचोऽमन्तश्च स्यात् । वाचंयमो व्रती ॥११५॥

**मन्याण्णिन् ।५।१।११६॥**

कर्मणः पराद् मन्यतेर्णिन् स्यात् । पण्डितमानी बन्धोः ॥११६॥

**कर्तुः खश् ।५।१।११७॥**

प्रत्ययार्थात् कर्तुः कर्मणः पराद् मन्यतेः खश् स्यात् । पण्डितम्मन्यः । कर्तुरिति किम् ? पटुमानी चैत्रस्य ॥११७॥

**एजेः ।५।१।११८॥**

कर्मणः परादेजयतेः खश् स्यात् । अरिमेजयः ॥११८॥

**शुनी-स्तन-मुञ्ज-कूला-ऽऽस्य-पुष्पाट्ट्धेः ।५।१।११९॥**

एभ्यः कर्मभ्यः ट्धेः खश् स्यात् । शुनिन्धयः , स्तनन्धयः , मुञ्जन्धयः , कूलन्धयः , आस्यन्धयः , पुष्पन्धयः ॥११९॥

**नाडी-घटी-खरी-मुष्टि-नासिका-वाताद् ध्मश्च ।५।१।१२०॥**

एभ्यः कर्मभ्यः पराद् ध्मः , ट्धेश्च खश् स्यात् । नाडिन्धमः , नाडिन्धयः ; घटिन्धमः , घटिन्धयः ; खरिन्धमः , खरिन्धयः ; मुष्टिन्धमः , मुष्टिन्धयः ; नासिकन्धमः , नासिकन्धयः ; वातन्धमः , वातन्धयः ॥१२०॥

**पाणि-करात् ।५।१।१२१॥**

आभ्यां कर्मभ्यां पराद् ध्मः खश् स्यात् । पाणिन्धमः , करन्धमः ॥१२१॥

**कूलादुद्रुजोद्वहः ।५।१।१२२॥**

कूलात् कर्मणः पराभ्यामाभ्यां खश् स्यात् । कूलमुद्रुजः , कूलमुद्वहः ॥१२२॥

**वहा-ऽभ्राल्लिहः ।५।१।१२३॥**

आभ्यां कर्मभ्यां पराल्लिहः खश् स्यात् । वहंलिहः , अभ्रंलिहः ॥१२३॥

**बहु-विध्वरुस्तिलात् तुदः ।५।१।१२४।।**

एभ्यः कर्मभ्यः परात् तुदेः खश् स्यात् । बहुन्तुदः , विधुन्तुदः , अरुन्तुदः , तिलन्तुदः ॥१२४॥

**ललाट-वात-शर्द्धात् तपा-ऽज-हाकः ।५।१।१२५।।**

एभ्यः कर्मभ्यः परेभ्यो यथासङ्ख्यं तपा-ऽज-हाग्भ्यः खश् स्यात् । ललाटन्तपः , वातमजः , शर्द्धञ्जहः ॥१२५॥

**असूर्योग्राद् दृशः ।५।१।१२६।।**

आभ्यां कर्मभ्यां पराद् दृशेः खश् स्यात् । असूर्यम्पश्यः , उग्रम्पश्यः ॥१२६॥

**इरम्मदः ।५।१।१२७।।**

इरापूर्वाद् मदेः खश् श्याभावश्च स्यात् । इरम्मदः ॥१२७॥

**नग्न-पलित-प्रिया-ऽन्ध-स्थूल-सुभगा-ऽऽढ्य-तदन्ताच्च्व्यर्थेऽच्वेर्भुवः खिष्णु-खुकञ् ।५।१।१२८।।**

नग्नादिभ्यः केवलेभ्यस्तदन्तेभ्यश्चाच्व्यन्तेभ्यश्च्व्यर्थवृत्तिभ्यः पराद् भुवः खिष्णु-खुकञौ स्याताम् । नग्नम्भविष्णुः , नग्नम्भावुकः ; पलितम्भविष्णुः , पलितम्भावुकः ; प्रियम्भविष्णुः , प्रियम्भावुकः ; अन्धम्भविष्णुः , अन्धम्भावुकः , स्थूलम्भविष्णुः , स्थूलम्भावुकः ; सुभगम्भविष्णुः , सुभगम्भावुकः ; आढ्यम्भविष्णुः , आढ्यम्भावुकः ; तदन्त -सुनग्नम्भविष्णुः , सुनग्नम्भावुक इत्यादि । अच्वेरिति किम् ? आढ्यीभविता ॥१२८॥

**कृगः खनट् करणे ।५।१।१२९।।**

नग्नादिभ्योऽच्व्यन्तेभ्यश्च्व्यर्थवृत्तिभ्यः परात् कृगः करणे खनट् स्यात् । नग्नङ्करणं द्यूतम् , पलितङ्करणम् , प्रियङ्करणम् , अन्धङ्करणम् , स्थूलङ्करणम् , सुभगङ्करणम् , आढ्यङ्करणम् , सुनग्नङ्करणम् । च्व्यर्थ इत्येव , नग्नं करोति द्यूतेन ॥१२९॥

**भावे चाऽऽशिताद् भुवः खः ।५।१।१३०।।**

आशितात् पराद् भुवो भाव-करणयोः खः स्यात् । आशितम्भवस्ते , आशितम्भव ओदनः ॥१३०॥

**नाम्नो गमः खड्-डौ च , विहायसस्तु विहः ।५।१।१३१।।**

नाम्नः पराद् गमेः खड्-ड-खाः स्युः, विहायसो विहश्च । तुरङ्गः, विहङ्गः, तुरगः, विहगः, सुतङ्गमो मुनिः, तुरङ्गमः[1], विहङ्गमः ॥१३१॥

**सुग-दुर्गमाधारे ।५।१।१३२॥**

सु-दुर्भ्यां पराद् गमेराधारे डः स्यात् । सुगः, दुर्गः पन्थाः ॥१३२॥

**निर्गो देशे ।५।१।१३३॥**

निष्पूर्वाद् गमेराधारे देशे डः स्यात् । निर्गो देशः ॥१३३॥

**शमो नाम्न्यः ।५।१।१३४॥**

शमो नाम्नः पराद् धातोः संज्ञायाम् अः स्यात् । शम्भवोऽर्हन् । नाम्नीति किम् ? शङ्करी दीक्षा ॥१३४॥

**पार्श्वादिभ्यः शीङः ।५।१।१३५॥**

एभ्यो नामभ्यः परात् शीङः अः स्यात् । पार्श्वशयः, दिग्धसहशयः ॥१३५॥

**ऊर्ध्वादिभ्यः कर्तुः ।५।१।१३६॥**

एभ्यः कर्तृवाचिभ्यः परात् शीङः अः स्यात् । ऊर्ध्वशयः, उत्तानशयः ॥१३६॥

**आधारात् ।५।१।१३७॥**

आधारार्थान्नाम्नः परात् शीङः अः स्यात् । खशयः ॥१३७॥

**चरेष्टः ।५।१।१३८॥**

आधारार्थात् परात् चरेष्टः स्यात् । कुरुचरी ॥१३८॥

**भिक्षा-सेना-ऽऽदायात् ।५।१।१३९॥**

एभ्यः परात् चरेष्टः स्यात् । भिक्षाचरी, सेनाचरः, आदायचरः ॥१३९॥

**पुरो-ऽग्रतो-ऽग्रेः सर्त्तेः ।५।१।१४०॥**

एभ्यः परात् सर्त्तेष्टः स्यात् । पुरःसरी, अग्रतः सरः, अग्रेसरः ॥१४०॥

**पूर्वात् कर्तुः ।५।१।१४१॥**

पूर्वात् कर्तृवृत्तेः परात् सर्त्तेष्टः स्यात् । पूर्वसरः । कर्तुरिति किम् ? पूर्वसारः ॥१४१॥

१. तुरङ्गमः J1 विना नास्ति ॥

**स्था-पा-स्ना-त्रः कः ।५।१।१४२॥**

नाम्नः परेभ्य एभ्यः कः स्यात् । समस्थः , कच्छपः , नदीष्णः , धर्मत्रम् ॥१४२॥

**शोकापनुद-तुन्दपरिमृज-स्तम्बेरम-कर्णेजपं प्रिया-ऽलस-हस्ति-सूचके ।५।१।१४३॥**

एते यथासङ्ख्यं प्रियादिष्वर्थेषु कान्ता निपात्यन्ते । शोकापनुदः प्रियः , तुन्दपरिमृजोऽलसः , स्तम्बेरमो हस्ती , कर्णेजपः खलः । एष्विति किम् ? शोकापनोदो धर्माचार्यः ॥१४३॥

**मूलविभुजादयः ।५।१।१४४॥**

एते कान्ता यथादर्शनं निपात्यन्ते । मूलविभुजो रथः , कुमुदं कैरवम् ॥१४४॥

**दुहेर्डुघः ।५।१।१४५॥**

नाम्नः परात् दुहेर्डुघः स्यात् । कामदुघा ॥१४५॥

**भजो विण् ।५।१।१४६॥**

नाम्नः परात् भजेर्विण् स्यात् । अर्धभाक् ॥१४६॥

**मन्-वन्-क्वनिप्-विच् क्वचित् ।५।१।१४७॥**

नाम्नः परात् धातोरेते यथालक्ष्यं स्युः । मन्-इन्द्रशर्मा । वन्-विजावा । क्वनिप्-सुधीवा । विच्-शुभंयाः ॥१४७॥

**क्विप् ।५।१।१४८॥**

नाम्नः परात् धातोः क्विप् यथालक्ष्यं स्यात् । उखास्रत् ॥१४८॥

**स्पृशोऽनुदकात् ।५।१।१४९॥**

उदकवर्जात् नाम्नः परात् स्पृशेः क्विप् स्यात् । घृतस्पृक् । अनुदकादिति किम् ? उदकस्पर्शः ॥१४९॥

**अदोऽनन्नात् ।५।१।१५०॥**

अन्नवर्जात् नाम्नः पराददेः क्विप् स्यात् । आमात् । अनन्नादिति किम् ? अन्नादः ॥१५०॥

**क्रव्यात्-क्रव्यादावाम-पक्वादौ ।५।१।१५१॥**

एतौ यथासङ्ख्यमामात्-पक्वादर्थौ क्विपणन्तौ साधू स्तः । क्रव्यात्- आममांस-भक्षः , क्रव्यादः-पक्वमांसभक्षः ॥१५१॥

**त्यदाद्यन्य-समानादुपमानाद् व्याप्ये दृशः टक्-सकौ च ।५।१।१५२॥**

एभ्य उपमानेभ्यो व्याप्येभ्यः पराद् दृशेर्व्याप्य एव टक्-सकौ क्विप् च स्युः । त्यादृशः , त्यादृक्षः , त्यादृक् ; अन्यादृशः , अन्यादृक्षः , अन्यादृक् ; सदृशी , सदृक्षा , सदृक् । व्याप्य इति किम् ? तेनेव दृश्यते ॥१५२॥

**कर्तुर्णिन् ।५।१।१५३॥**

कर्त्रर्थादुपमानात् पराद् धातोर्णिन् स्यात् । उष्ट्रक्रोशी ॥१५३॥

**अजातेः शीले ।५।१।१५४॥**

अजात्यर्थाद् नाम्नः पराच्छीलार्थाद् धातोर्णिन् स्यात् । उष्णभोजी , प्रस्थायी । अजातेरिति किम् ? शालीन् भोक्ता । शील इति किम् ? उष्णभोजो मन्दः ॥१५४॥

**साधौ ।५।१।१५५॥**

नाम्नः परात् साध्वर्थाद् धातोर्णिन् स्यात् । साधुकारी ॥१५५॥

**ब्रह्मणो वदः ।५।१।१५६॥**

ब्रह्मणः पराद् वदेर्णिन् स्यात् । ब्रह्मवादी ॥१५६॥

**व्रता-ऽऽभीक्ष्ण्ये ।५।१।१५७॥**

अनयोर्गम्ययोर्नाम्नः पराद् धातोर्णिन् स्यात् । स्थण्डिलवर्त्ती , क्षीरपायिण उशीनराः ॥१५७॥

**करणाद् यजो भूते ।५।१।१५८॥**

करणार्थाद् नाम्नः पराद् भूतार्थाद् यजेर्णिन् स्यात् । अग्निष्टोमयाजी ॥१५८॥

**निन्द्ये व्याप्यादिन् विक्रियः ।५।१।१५९॥**

व्याप्याद् नाम्नः परात् भूतार्थाद् विक्रियः कुत्स्ये कर्त्तरि इन् स्यात् । सोमविक्रयी । निन्द्य इति किम् ? धान्यविक्रायः ॥१५९॥

**हनो णिन् ।५।१।१६०॥**

व्याप्यात् पराद् भूतार्थाद् हन्तेर्निन्द्ये कर्त्तरि णिन् स्यात् । पितृघाती ॥१६०॥

**ब्रह्म-भ्रूण-वृत्रात् क्विप् ।५।१।१६१॥**

एभ्य कर्मभ्यः पराद् भूतार्थाद् हन्तेः क्विप् स्यात् । ब्रह्महा , भ्रूणहा , वृत्रहा ॥१६१॥

**कृगः सु-पुण्य-पाप-कर्म-मन्त्र-पदात् ।५।१।१६२॥**

सोः पुण्यादेश्च कर्मणः परात् भूतार्थात् कृगः क्विप् स्यात् । सुकृत् , पुण्यकृत् , पापकृत् , कर्मकृत् , मन्त्रकृत् , पदकृत् ॥१६२॥

**सोमात् सुगः ।५।१।१६३॥**

सोमाद् व्याप्यात् पराद् भूतार्थात् सुगः क्विप् स्यात् । सोमसुत् ॥१६३॥

**अग्नेश्चेः ।५।१।१६४॥**

अग्नेर्व्याप्यात् पराद् भूतार्थाच्चेः क्विप् स्यात् । अग्निचित् ॥१६४॥

**कर्मण्यग्न्यर्थे ।५।१।१६५॥**

कर्मणः पराद् भूतार्थाच्चेः कर्मण्यग्न्यर्थे क्विप् स्यात् । श्येनचित् ॥१६५॥

**दृशः क्वनिप् ।५।१।१६६॥**

व्याप्यात् पराद् भूतार्थाद् दृशेः क्वनिप् स्यात् । बहुदृश्वा ॥१६६॥

**सह-राजभ्यां कृग्-युधेः ।५।१।१६७॥**

आभ्यां कर्मभ्यां पराद् भूतार्थात् कृगो युधेश्च क्वनिप् स्यात् । सहकृत्वा , सहयुध्वा , राजकृत्वा , राजयुध्वा ॥१६७॥

**अनोर्जनेर्डः ।५।१।१६८॥**

कर्मणः परादनुपूर्वात् भूतार्थाद् जनेर्डः स्यात् । पुमनुजः ॥१६८॥

**सप्तम्याः ।५।१।१६९॥**

सप्तम्यन्तात् पराद् भूतार्थाज्जनेर्डः स्यात् । मन्दुरजः ॥१६९॥

**अजातेः पञ्चम्याः ।५।१।१७०॥**

पञ्चम्यन्तादजात्यर्थात् पराद् भूतार्थाद् जनेर्डः स्यात् । बुद्धिजः । अजातेरिति किम् ? गजात् जातः ॥१७०॥

**क्वचित् ।५।१।१७१॥**

उक्तादन्यत्रापि यथालक्ष्यं डः स्यात् । किञः , अनुजः , स्त्रीजम् , ब्रह्मज्यः

, वराहः , आखा ॥१७१।

**सु-यजोर्ङ्वनिप् ।५।१।१७२॥**

आभ्यां भूतार्थाभ्यां ङ्वनिप् स्यात् । सुत्वानौ , यज्वा ॥१७२॥

**जॄषोऽतृः ।५।१।१७३॥**

जॄषेर्भूतार्थाद् अतृः स्यात् । जरती ॥१७३॥

**क्त-क्तवतू ।५।१।१७४॥**

भूतार्थाद् धातोरेतौ स्याताम् । कृतः , कृतवान् ॥१७४॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां

**सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनलघुवृत्तौ**

पञ्चमस्याध्यायस्य प्रथमः पादः समाप्तः[1] ॥५।१॥

अगणितपञ्चेषुबलः पुरुषोत्तमचित्तविस्मयं जनयन् ।
रामोल्लासनमूर्त्तिः श्रीकर्णः कर्ण इव जयति ॥१७॥

१. **समाप्तः** J1 पा२ मध्ये नास्ति ॥

## [ द्वितीयः पादः ]

### श्रु-सद-वस्भ्यः परोक्षा वा ।५।२।१।।

एभ्यो भूतार्थेभ्यः परोक्षा वा स्यात् । उपशुश्राव , उपससाद , अनूवास , पक्षे -उपाश्रौषीत् , उपाशृणोत् ; उपासदत् , उपासीदत् ; अन्ववात्सीत् , अन्ववसत् ।।१।।

### तत्र क्वसु-कानौ तद्वत् ।५।२।२।।

परोक्षामात्रविषये धातोः परौ क्वसु-कानौ स्याताम् , तौ च परोक्षेव । शुश्रुवान् , सेदिवान् , ऊषिवान् , पेचिवान् , पेचानः ।।२।।

### वेयिवदनाश्वदनूचानम् ।५।२।३।।

एते भूतेऽर्थे क्वसुकानान्ताः कर्त्तरि वा निपात्यन्ते । समीयिवान् , अनाश्वान् , अनूचानः , पक्षे-अगात् , उपैत् , उपेयाय , नाशीत् , नाश्नात् , नाऽऽश , अन्ववोचत् , अन्ववक् , अन्वब्रवीत् , अनूवाच ।।३।।

### अद्यतनी ।५।२।४।।

भूतार्थाद्धातोरद्यतनी स्यात् । अकार्षीत् ।।४।।

### विशेषाविवक्षा-व्यामिश्रे ।५।२।५।।

अद्यतनादिविशेषाविवक्षायां व्यामिश्रणे च सति भूतार्थाद् धातोरद्यतनी स्यात् । रामो वनमगमत् , अद्य ह्यो वाऽभुक्ष्महि ।।५।।

### रात्रौ वसोऽन्त्ययामाऽस्वप्तर्यद्य ।५।२।६।।

रात्रौ भूतार्थवृत्तेर्वसतेरद्यतनी स्यात् , स चेदर्थो यस्यां रात्रौ भूतस्तस्या एवान्त्ययामं व्याप्याऽस्वप्तरि कर्त्तरि स्यात् , अद्यतनेनैवान्त्ययामेनावच्छिन्ने अद्यतने चेत् प्रयोगोऽस्ति नाद्यतनान्तरे । अमुत्रावात्सम् । रात्र्यन्त्ययामे तु मुहूर्त्तमपि स्वापे ह्यस्तन्येव[1]-अमुत्रावसमिति ।।६।।

### अनद्यतने ह्यस्तनी ।५।२।७।।

आ न्याय्याद् उत्थानादा न्याय्याच्च संवेशनाद् अहरुभयतः सार्द्धरात्रं वाऽद्यतनः , तस्मिन्नसति भूतार्थाद् धातोर्ह्यस्तनी स्यात् । अकरोत् ।।७।।

१. ह्यस्तन्येव पा१ विना नास्ति ।।

**ख्याते दृश्ये ।५।२।८।।**

लोकविज्ञाते प्रयोक्तुः शक्यदर्शने भूतानद्यतनेऽर्थे वर्त्तमानाद् धातोर्ह्यस्तनी स्यात् । **अरुणत् सिद्धराजोऽवन्तीम्** । ख्यात इति किम् ? चकार कटम् । दृश्य इति किम् ? *जघान कंसं किल वासुदेवः* ।।८।।

**अयदि स्मृत्यर्थे भविष्यन्ती ।५।२।९।।**

स्मृत्यर्थे धातावुपपदे भूतानद्यतनार्थवृत्तेर्धातोर्भविष्यन्ती स्यात् , अयद्योगे । स्मरसि साधो ! स्वर्गे स्थास्यामः ? । अयदीति किम् ? अभिजानासि मित्र ! यत् कलिङ्गेष्ववसाम ? ।।९।।

**वाऽऽकाङ्क्षायाम् ।५।२।१०।।**

स्मृत्यर्थे धातावुपपदे प्रयोक्तुः क्रियान्तराकाङ्क्षायां सत्यां भूतानद्यतनार्थाद् धातोर्भविष्यन्ती वा स्यात् । स्मरसि मित्र ! कश्मीरेषु वत्स्यामोऽवसाम वा , तत्रौदनं भोक्ष्यामहे , अभुञ्ज्महि वा ।।१०।।

**कृतास्मरणा-ऽतिनिह्नवे परोक्षा ।५।२।११।।**

कृतस्यापि चित्त[1]व्याक्षेपादिनाऽस्मरणेऽत्यन्तनिह्नवे वा गम्ये भूतानद्यतनार्थाद् धातोः परोक्षा स्यात् । सुप्तोऽहं किल विललाप[2] , नाऽहं कलिङ्गान् जगाम ।।११।।

**परोक्षे ।५।२।१२।।**

भूतानद्यतने परोक्षार्थाद् धातोः परोक्षा स्यात् । धर्म्मं दिदेश तीर्थकरः ।।१२।।

**ह-शश्वद्-युगान्तः प्रच्छ्ये ह्यस्तनी च ।५।२।१३।।**

हे शश्वति च प्रयुक्ते पञ्चवर्षमध्यप्रच्छ्ये च भूतानद्यतने परोक्षेऽर्थे वर्त्तमानाद् धातोर्ह्यस्तनी-परोक्षे स्याताम् । इति हाकरोत् , इति ह चकार , शश्वदकरोत् , शश्वच्चकार , किमगच्छस्त्वं मथुराम् ? किं जगन्थ त्वं मथुराम् ? ।।१३।।

**अविवक्षिते ।५।२।१४।।**

भूतानद्यतने परोक्षे परोक्षत्वेनाविवक्षितेऽर्थे वर्त्तमानाद् धातो र्ह्यस्तनी स्यात् । अहन् कंसं वासुदेवः ।।१४।।

**वाऽद्यतनी पुराऽऽदौ ।५।२।१५।।**

१. °विक्षेपा° J1 ।। २. इतः परम्— **कलिङ्गेषु त्वया ब्राह्मणो हतः** इत्यधिकः पाठः P। सं० ।।

भूतानद्यतनेऽर्थे वर्त्तमानाद् धातोः पुरादावुपपदे अद्यतनी वा स्यात्। अवात्सुरिह पुरा छात्राः , पक्षे-अवसन् , ऊषुर्वा ; तदाऽभाषिष्ट राघवः , पक्षे-अभाषत , बभाषे ॥१५॥

## स्मे च वर्त्तमाना ।५।२।१६॥

भूतानद्यतनेऽर्थे वर्त्तमानाद् धातोः स्मे पुराऽऽदौ चोपपदे वर्त्तमाना स्यात् । पृच्छति स्म पुरोधसम् , वसन्तीह पुरा छात्राः , अथाऽऽह वर्णी ॥१६॥

## ननौ पृष्टोक्तौ सद्वत् ।५।२।१७॥

ननावुपपदे पृष्टप्रतिवचने भूतेऽर्थे वर्त्तमानाद् धातोर्वर्त्तमानेव वर्त्तमाना स्यात् । किमकार्षीः कटं चैत्र ! ननु करोमि भोः , ननु कुर्वन्तं मां पश्य ॥१७॥

## न-न्वोर्वा ।५।२।१८॥

न-न्वोरुपपदयोः पृष्टोक्तौ भूतेऽर्थे वर्त्तमानाद् धातोर्वा वर्त्तमाना स्यात् , सा च सद्वत् । किमकार्षीः कटं चैत्र ? न करोमि भोः , न कुर्वन्तं मां पश्य , नाकार्षम् ; नु करोमि भोः ! नु कुर्वाणं मां पश्य , न्वकार्षम् ॥१८॥

## सति ।५।२।१९॥

वर्त्तमानार्थाद् धातोर्वर्त्तमाना स्यात् । अस्ति , कूरं पचति , मांसं न भक्षयति , इहाधीमहे , तिष्ठन्ति पर्वताः ॥१९॥

## शत्रानशावेष्यति तु सस्यौ ।५।२।२०॥

सदर्थाद् धातोः शत्रानशौ स्याताम् , भविष्यन्तीविषयेऽर्थे स्ययुक्तौ । यान् , शयानः , यास्यन् , शयिष्यमाणः ॥२०॥

## तौ माङ्याक्रोशेषु ।५।२।२१॥

माङ्युपपदे आक्रोशे गम्ये तौ शत्रानशावेव स्याताम् । मा पचन् वृषलो ज्ञास्यति , मा पचमानोऽसौ मर्तुकामः ॥२१॥

## वा वेत्तेः क्वसुः ।५।२।२२॥

सदर्थाद् वेत्तेः क्वसुर्वा स्यात् । तत्त्वं विद्वान् , विदन् ॥२२॥

## पूङ्-यजः शानः ।५।२।२३।

आभ्यां सदर्थाभ्यां परः शानः स्यात् । पवमानः , यजमानः ॥२३॥

## वयः-शक्ति-शीले ।५।२।२४॥

एषु गम्येषु सदर्थाद् धातोः शानः स्यात् । स्त्रियं गच्छमानाः , समश्नानाः , परान् निन्दमानाः ॥२४॥

**धारीङोऽकृच्छ्रेऽतृश् ।५।२।२५॥**

सुखसाध्ये सत्यर्थे वर्त्तमानाद् धारेरिङश्च परोऽतृश् स्यात् । धारयन् आचाराङ्गम् , अधीयन् **द्रुमपुष्पीयम्** ॥२५॥

**सुग्-द्विषार्हः सत्रि-शत्रु-स्तुत्ये ।५।२।२६॥**

सदर्थेभ्य एभ्यो यथासङ्ख्यं सत्रिणि शत्रौ स्तुत्ये च कर्त्तरि अतृश् स्यात् । सर्वे सुन्वन्तः , चौरं द्विषन् , पूजामर्हन् । एष्विति किम् ? सुरां सुनोति ॥२६॥

**तृन् शील-धर्म-साधुषु ।५।२।२७॥**

शीलादिसदर्थाद् धातोस्तृन् स्यात् । कर्त्ता कटम् , वधूमूढां मुण्डयितारः श्राविष्ठायनाः , गन्ता खेलः ॥२७॥

**भ्राज्यलङ्कृग्-निराकृग्-भू-सहि-रुचि-वृति-वृधि-चरि-प्रजना-ऽपत्रप इष्णुः ।५।२।२८॥**

एभ्यः शीलादिसदर्थेभ्य इष्णुः स्यात् । भ्राजिष्णुः , अलङ्करिष्णुः , निराकरिष्णुः , भविष्णुः , सहिष्णुः , रोचिष्णुः , वर्त्तिष्णुः , वर्द्धिष्णुः , चरिष्णुः , प्रजनिष्णुः , अपत्रपिष्णुः ॥२८॥

**उदः पचि-पति-पदि-मदेः ।५।२।२९॥**

उत्पूर्वेभ्य एभ्यः शीलादिसदर्थेभ्य इष्णुः स्यात् । उत्पचिष्णुः , उत्पतिष्णुः , उत्पदिष्णुः , उन्मदिष्णुः ॥२९॥

**भू-जेः ष्णुक् ।५।२।३०॥**

आभ्यां शीलादिसदर्थाभ्यां ष्णुक् स्यात् । भूष्णुः , जिष्णुः ॥३०।

**स्था-ग्ला-म्ला-पचि-परिमृजि-क्षेः स्नुः ।५।२।३१॥**

एभ्यः शीलादिसदर्थेभ्यः स्नुः स्यात् । स्थास्नुः , ग्लास्नुः , म्लास्नुः , पक्ष्णुः , परिमार्क्ष्णुः , क्षेष्णुः ॥३१॥

**त्रसि-गृधि-धृषि-क्षिपः क्नुः ।५।२।३२॥**

एभ्यः शीलादिसदर्थेभ्यः क्नुः स्यात् । त्रस्नुः , गृध्नुः , धृष्णुः , क्षिप्नुः

॥३२॥

**सन्-भिक्षा-ऽऽशंसेरुः ।५।२।३३॥**

शीलादिसदर्थात् सन्नन्ताद् भिक्षा-ऽऽशंसिभ्यां च उः स्यात् । लिप्सुः , भिक्षुः , आशंसुः ॥३३॥

**विन्दिच्छू ।५।२।३४॥**

शीलादिसदर्थाभ्यां वेत्तीच्छतिभ्याम् उः यथासङ्ख्यं नुपान्त्य च्छान्तादेशौ च निपात्येते । विन्दुः , इच्छुः ॥३४॥

**शॄ-वन्देरारुः ।५।२।३५॥**

आभ्यां शीलादिसदर्थाभ्याम् आरुः स्यात् । विशरारुः , वन्दारुः ॥३५॥

**दा-ट्धे-सि-शद-सदो रुः ।५।२।३६॥**

शीलादिसदर्थेभ्यो दारूप-ट्धे-सि-शद-सद्भ्यो रुः स्यात् । दारुः , धारुः , सेरुः , शद्रुः , सद्रुः ॥३६॥

**शीङ्-श्रद्धा-निद्रा-तन्द्रा-दयि-पति-गृहि-स्पृहेरालुः ।५।२।३७॥**

एभ्यः शीलादिसदर्थेभ्य आलुः स्यात् । शयालुः , श्रद्धालुः , निद्रालुः , तन्द्रालुः , दयालुः , पतयालुः , गृहयालुः , स्पृहयालुः ॥३७॥

**ङौ सासहि-वावहि-चाचलि-पापति ।५।२।३८॥**

शीलादिसदर्थानां सहि-वहि-चलि-पतां यङन्तानां ङौ सति यथासङ्ख्यमेते निपात्यन्ते । सासहिः , वावहिः , चाचलिः , पापतिः ॥३८॥

**सस्रि-चक्रि-दधि-जज्ञि-नेमिः ।५।२।३९॥**

एते शीलादौ सत्यर्थे द्व्युक्तिमन्तो ङ्यन्ता निपात्यन्ते । सस्रिः , चक्रिः , दधिः , जज्ञिः , नेमिः ॥३९॥

**शॄ-कम-गम-हन-वृष-भू-स्थ उकण् ।५।२।४०॥**

शीलादिसदर्थेभ्य एभ्य उकण् स्यात् । शारुकः , कामुकः , गामुकः , घातुकः , वर्षुकः , भावुकः , स्थायुकः ॥४०॥

**लष-पत-पदः ।५।२।४१॥**

शीलादिसदर्थेभ्य एभ्य उकण् स्यात् । अभिलाषुकः , प्रपातुकः , उपपादुकः

॥४१॥

**भूषा-क्रोधार्थ-जु-सृ-गृधि-ज्वल-शुचश्चाऽनः ।५।२।४२॥**

भूषार्थेभ्यः क्रोधार्थेभ्यो ज्वादेर्लषादेश्च शीलादिसदर्थेभ्योऽनः स्यात् । भूषणः, क्रोधनः, जवनः, सरणः, गर्द्धनः, ज्वलनः, शोचनः, अभिलषणः, पतनः, अर्थस्य पदनः ॥४२॥

**चाल-शब्दार्थादकर्मकात् ।५।२।४३॥**

चालार्थात् शब्दार्थाच्च धातोः शीलादिसदर्थादकर्मकाद् अनः स्यात् । चलनः, रवणः । अकर्मकादिति किम् ? पठिता विद्याम् ॥४३॥

**इ-ङितो व्यञ्जनाऽऽद्यन्तात् ।५।२।४४॥**

व्यञ्जनमादिरन्तश्च यस्य तस्मादिदितो ङितश्च धातोः शीलादिसदर्थाद् अनः स्यात् । स्पर्द्धनः, वर्त्तनः । व्यञ्जनाद्यन्तादिति किम् ? एधिता, शयिता । अकर्मकादित्येव-वसिता वस्त्रम् ॥४४॥

**न णिङ्-य-सूद-दीप-दीक्षः ।५।२।४५॥**

णिङन्ताद् यन्तात् सूदादिभ्यश्च शीलादिसदर्थेभ्योऽनो न स्यात् । भावयिता, क्ष्मायिता, सूदिता, दीपिता, दीक्षिता ॥४५॥

**द्रम-क्रमो यङः ।५।२।४६॥**

शीलादिसदर्थाभ्यां यङन्ताभ्यामाभ्याम् अनः स्यात् । दन्द्रमणः, चङ्क्रमणः ॥४६॥

**यजि-जपि-दंशि-वदादूकः ।५।२।४७॥**

एभ्यो यङन्तेभ्यः शीलादिसदर्थेभ्य ऊकः स्यात् । यायजूकः, जञ्जपूकः, दन्दशूकः, वावदूकः ॥४७॥

**जागुः ।५।२।४८॥**

शीलादिसदर्थाद् जागुरूकः स्यात् । जागरूकः ॥४८॥

**शमष्टकाद् घिनण् ।५।२।४९॥**

शीलादिसदर्थेभ्यः शमादिभ्योऽष्टभ्यो घिनण् स्यात् । शमी, दमी, तमी, श्रमी, भ्रमी, क्षमी, प्रमादी, क्लमी ॥४९॥

**युज-भुज-भज-त्यज-रञ्ज-द्विष-दुष-द्रुह-दुहाऽभ्याहनः ।५।२।५०॥**

शीलादिसदर्थेभ्य एभ्यो घिनण् स्यात् । योगी , भोगी , भागी , त्यागी , रागी , द्वेषी , दोषी , द्रोही , दोही , अभ्याघाती । अकर्मकादित्येव-गां दोग्धा ॥५०॥

### आङः क्रीड-मुषः ।५।२।५१॥

शीलादिसदर्थाभ्यामाभ्यां आङ्पूर्वाभ्यां घिनण् , स्यात् । आक्रीडी , आमोषी ॥५१॥

### प्राच्च यम-यसः ।५।२।५२॥

शीलादिसदर्थाभ्यामाङः प्राच्च पराभ्यामाभ्यां घिनण् स्यात् । प्रयामी , आयामी , प्रयासी , आयासी ॥५२॥

### मथ-लपः ।५।२।५३॥

प्रात् पराभ्यामाभ्यां शीलादिसदर्थाभ्यां घिनण् स्यात् । प्रमाथी , प्रलापी ॥५३॥

### वेश्च द्रोः ।५।२।५४॥

वेः प्राच्च पराद् द्रोः शीलादिसदर्थाद् घिनण् स्यात् । विद्रावी , प्रद्रावी ॥५४॥

### वि-परि-प्रात् सर्त्तेः ।५।२।५५॥

एभ्यः पराच्छीलादिसदर्थात् सर्त्तेर्घिनण् स्यात् । विसारी , परिसारी , प्रसारी ॥५५॥

### समः पृचैप्-ज्वरेः ।५।२।५६॥

शीलादिसदर्थाभ्यां समः पराभ्यां पृणक्ति-ज्वरिभ्यां घिनण् स्यात् । संपर्की , संज्वारी ॥५६॥

### सं-वेः सृजः ।५।२।५७॥

शीलादिसदर्थात् संविभ्यां परात् सृजेर्घिनण् स्यात् । संसर्गी , विसर्गी ॥५७॥

### सं-परि-व्यनु-प्राद् वदः ।५।२।५८॥

शीलादिसदर्थादेभ्यः पराद् वदेर्घिनण् स्यात् । संवादी , परिवादी , विवादी , अनुवादी , प्रवादी ॥५८॥

### वेर्विच-कत्थ-स्रम्भ-कष-कस-लस-हनः ।५।२।५९॥

शीलादिसदर्थेभ्यो विपूर्वेभ्य एभ्यो घिनण् स्यात्। विवेकी , विकत्थी , विस्रम्भी , विकाषी , विकासी , विलासी , विघाती ॥५९॥

**व्यपा-ऽभेर्लषः ।५।२।६०॥**

एभ्यः परात् लषेः शीलादिसदर्थाद् घिनण् स्यात् । विलाषी , अपलाषी , अभिलाषी ॥६०॥

**सम्-प्राद् वसात् ।५।२।६१॥**

आभ्यां पराद् वसतेः शीलादिसदर्थाद् घिनण् स्यात् । संवासी , प्रवासी ॥६१॥

**समत्यपा-ऽभि-व्यभेश्चरः ।५।२।६२॥**

एभ्यः परात् चरेः शीलादिसदर्थाद् घिनण् स्यात् । सञ्चारी , अतिचारी , अपचारी , अभिचारी , व्यभिचारी ॥६२॥

**समनु-व्यवाद् रुधः ।५।२।६३॥**

एभ्यः पराच्छीलादिसदर्थाद् रुधो घिनण् स्यात्। संरोधी , अनुरोधी , विरोधी , अवरोधी ॥६३॥

**वेर्दहः ।५।२।६४॥**

विपूर्वात् शीलादिसदर्थाद् दहेर्घिनण् स्यात् । विदाही ॥६४॥

**परेर्देवि-मुहश्च ।५।२।६५॥**

परिपूर्वाभ्यां शीलादिसदर्थाभ्यामाभ्यां दहश्च घिनण् स्यात्। परिदेवी , परिमोही , परिदाही ॥६५॥

**क्षिप-रटः ।५।२।६६॥**

परिपूर्वाभ्यामाभ्यां शीलादिसदर्थाभ्यां घिनण् स्यात् । परिक्षेपी , परिराटी ॥६६॥

**वादेश्च णकः ।५।२।६७॥**

परिपूर्वात् शीलादिसदर्थाद् वादेः क्षिप-रड्भ्यां च णकः स्यात् । परिवादकः , परिक्षेपकः , परिराटकः ॥६७॥

**निन्द-हिंस-क्लिश-खाद-विनाशि-व्याभाषा-ऽसूया-ऽनेकस्वरात् ।५।२।६८॥**

एभ्यः शीलादिसदर्थेभ्यो णकः स्यात् । निन्दकः , हिंसकः , क्लेशकः , खादकः , विनाशकः , व्याभाषकः , असूयकः , चकासकः ॥६८॥

**उपसर्गाद् देवृ-देवि-क्रुशः ।५।२।६९॥**

उपसर्गात् परेभ्यः शीलादिसदर्थेभ्य एभ्यो णकः स्यात् । आदेवकः , परिदेवकः , आक्रोशकः ॥६९॥

**वृङ्-भिक्षि-लुण्टि-जल्पि-कुट्टाट्टाकः ।५।२।७०॥**

एभ्यः शीलादिसदर्थेभ्य ट्टाकः स्यात् । वराकी , भिक्षाकः , लुण्टाकः , जल्पाकः , कुट्टाकः ॥७०॥

**प्रात् सू-जोरिन् ।५।२।७१॥**

आभ्यां प्रात् पराभ्यां शीलादिसदर्थाभ्याम् इन् स्यात् । प्रसवी , प्रजवी ॥७१॥

**जीण-दृ-क्षि-विश्रि-परिभू-वमा-ऽभ्यमाव्यथः ।५।२।७२॥**

एभ्यः शीलादिसदर्थेभ्य इन् स्यात् । जयी , अत्ययी , आदरी , क्षयी , विश्रयी , परिभवी , वमी , अभ्यमी , अव्यथी ॥७२॥

**सृ-घस्यदो मरक् ।५।२।७३॥**

एभ्यः शीलादिसदर्थेभ्यो मरक् स्यात् । सृमरः , घस्मरः , अद्मरः ॥७३॥

**भञ्जि-भासि-मिदो घुरः ।५।२।७४॥**

एभ्यः शीलादिसदर्थेभ्यो घुरः स्यात् । भङ्गुरम् , भासुरम् , मेदुरम् ॥७४॥

**वेत्ति-च्छिद-भिदः कित् ।५।२।७५॥**

एभ्यः शीलादिसदर्थेभ्यः , किद् घुरः स्यात् । विदुरः , छिदुरः , भिदुरः ॥७५॥

**भियो रु-रुक-लुकम् ।५।२।७६॥**

शीलादिसदर्थाद् भियः कित एते स्युः । भीरुः , भीरुकः , भीलुकः ॥७६॥

**सृ-जीण्-नशष्ट्वरप् ।५।२।७७॥**

एभ्यः शीलादिसदर्थेभ्यः कित् ट्वरप् स्यात् । सृत्वरी , जित्वरी , इत्वरः

, नश्वरः ॥७७॥

**गत्वरः ।५।२।७८॥**

गमेष्ट्वरप् मश्च त् निपात्यते । गत्वरी ॥७८॥

**स्म्यजस-हिंस-दीप-कम्प-कम-नमो रः ।५।२।७९॥**

एभ्यः शीलादिसदर्थेभ्यो रः स्यात् । स्मेरम् , अजस्रम् , हिंस्रः , दीप्रः , कम्प्रः , कम्रः , नम्रः ॥७९॥

**तृषि-धृषि-स्वपो नजिङ् ।५।२।८०॥**

एभ्यः शीलादिसदर्थेभ्यो नजिङ् स्यात् । तृष्णक् , धृष्णक् , स्वप्नजौ ॥८०॥

**स्थेश-भास-पिस-कसो वरः ।५।२।८१॥**

एभ्यः शीलादिसदर्थेभ्यो वरः स्यात् । स्थावरः , ईश्वरः , भास्वरः , पेस्वरः , विकस्वरः ॥८१॥

**यायावरः ।५।२।८२॥**

यातेर्यङन्तात् शीलादिसदर्थाद् वरः स्यात् । यायावरः ॥८२॥

**दिद्युद्-दद्दद्-जगज्जुहू-वाक्-प्राट्-धी-श्री-द्रू-स्रू-ज्वायतस्तू-कटप्रू-परिव्राड्-भ्राजादयः क्विपः ।५।२।८३॥**

एते क्विबन्ताः शीलादौ सत्यर्थे निपात्यन्ते । दिद्युत् , दद्दत् , जगत् , जुहूः , वाक् , तत्त्वप्राट् , धीः , श्रीः , शतद्रूः , स्रूः , जूः , आयतस्तूः , कटप्रूः , परिव्राट् , विभ्राट् , भाः ॥८३॥

**शं-सं-स्वयं-वि-प्राद् भुवो डुः ।५।२।८४॥**

एभ्यः पराद् भुवः सदर्थाद् डुः स्यात् । शम्भुः , सम्भुः , स्वयम्भुः , विभुः , प्रभुः ॥८४॥

**पुव इत्रो दैवते ।५।२।८५॥**

सदर्थात् पुवो दैवते कर्त्तरि इत्रः स्यात् । पवित्रोऽर्हन् ॥८५॥

**ऋषि-नाम्नोः करणे ।५।२।८६॥**

ऋषि-संज्ञयोः सदर्थात् पुवः करणे इत्रः स्यात् । पवित्रोऽयमृषिः , दर्भः पवित्रः ॥८६॥

**लू-धू-सू-खन-चर-सहाऽर्तेः ।५।२।८७।।**

एभ्यः सदर्थेभ्यः करणे इत्रः स्यात् । लवित्रम् , धुवित्रम् , सवित्रम् , खनित्रम् , चरित्रम् , सहित्रम् , अरित्रम् ।।८७।।

**नी-दाव्-शसू-यु-युज-स्तु-तुद-सि-सिच-मिह-पत-पा-नहस्त्रट् ।५।२।८८।।**

एभ्यः सदर्थेभ्यः करणे त्रट् स्यात् । नेत्रम् , दात्रम् , शस्त्रम् , योत्रम् , योक्त्रम् , स्तोत्रम् , तोत्रम् , सेत्रम् , सेक्त्रम् , मेढ्रम् , पत्त्रम् , पात्री , नद्ध्री ।।८८।।

**हल-क्रोडाऽऽस्ये पुवः ।५।२।८९।।**

सदर्थात् पुवो हल-क्रोडयोर्मुखे करणे त्रट् स्यात् । पोत्रम् ।।८९।।

**दंशेस्त्रः ।५।२।९०।।**

सदर्थाद् दंशे करणे त्रः स्यात् । दंष्ट्रा ।।९०।।

**धात्री ।५।२।९१।।**

ट्धेर्धागो वा कर्मणि त्रट् स्यात् । धात्री ।।९१।।

**ज्ञानेच्छा-ऽर्चार्थ-ञीच्छील्यादिभ्यः क्तः ।५।२।९२।।**

ज्ञानेच्छा-ऽर्चार्थेभ्यो ञीद्भ्यः शीलादिभ्यश्च सदर्थेभ्यः क्तः स्यात् । राज्ञां ज्ञातः , राज्ञामिष्टः , राज्ञां पूजितः , मिन्नः , शीलितः , रक्षितः ।।९२।।

**उणादयः ।५।२।९३।।**

सदर्थाद् धातोरुणादयो बहुलं स्युः । कारुः , ईडः ।।९३।।

[इत्याचार्यश्री**हेमचन्द्र**विरचितायां

**सिद्धहेमचन्द्रा**भिधानस्वोपज्ञशब्दानुशासनलघुवृत्तौ]

पञ्चमस्याध्यायस्य द्वितीयः पादः समाप्तः[१] ।।५।२।।

अकृत्वाऽऽसननिर्बन्धमभित्त्वा पावनीं गतिम् ।

**सिद्धराजः** परपुरप्रवेशवशितां ययौ ।।१८।।

१. **समाप्तः** P1 विना नास्ति ।।

## [ तृतीयः पादः ]

### वर्त्स्यति गम्यादिः ।५।३।१॥

गम्यादयो भविष्यत्यर्थे इन्नाद्यन्ताः साधवः स्युः । गमी ग्रामम् , आगामी ॥१॥

### वा हेतुसिद्धौ क्तः ।५।३।२॥

वर्त्स्यदर्थाद् धातोर्धात्वर्थहेतोः सिद्धौ सत्यां क्तो वा स्यात् । मेघश्चेद् वृष्टः सम्पन्नाः सम्पत्स्यन्ते वा शालयः ॥२॥

### कषोऽनिटः ।५।३।३॥

कषेः कृच्छ्र-गहनयोरनिड्धातोर्वर्त्स्यदर्थात् क्तः स्यात् । कष्टम् , कष्टा दिशस्तमसा । अनिट इति किम् ? कषिताः शत्रवः ॥३३॥

### भविष्यन्ती ।५।३।४॥

वर्त्स्यदर्थाद् धातोर्भविष्यन्ती स्यात् । भोक्ष्यते ॥४॥

### अनद्यतने श्वस्तनी ।५।३।५॥

नास्त्यद्यतनो यत्र तस्मिन् वर्त्स्यत्यर्थे वर्त्तमानाद् धातोः श्वस्तनी स्यात् । कर्त्ता । अनद्यतन इति किम् ? अद्य श्वो वा गमिष्यति ॥५॥

### परिदेवने ।५।३।६॥

अनुशोचने गम्ये वर्त्स्यदर्थाद् धातोः श्वस्तनी स्यात् । इयं नु कदा गन्ता यैवं पादौ निधत्ते ? ॥६॥

### पुरा-यावतोर्वर्त्तमाना ।५।३।७॥

अनयोरुपपदयोर्वर्त्स्यदर्थाद् धातोर्वर्त्तमाना स्यात् । पुरा भुङ्क्ते , यावद् भुङ्क्ते ॥७॥

### कदा-कर्ह्योर्नवा ।५।३।८॥

अनयोरुपपदयोर्वर्त्स्यदर्थाद् धातोर्वर्त्तमाना वा स्यात् । कदा भुङ्क्ते , कदा भोक्ष्यते , कदा भोक्ता ; कर्हि भुङ्क्ते , कर्हि भोक्ता , कर्हि भोक्ष्यते ॥८॥

### किंवृत्ते लिप्सायाम् ।५।३।९॥

विभक्ति-डतर-डतमान्तस्य किमो वृत्तं किंवृत्तम् , तस्मिन्नुपपदे प्रष्टुर्लिप्सायां

गम्यायां वर्त्स्यदर्थाद् धातोर्वर्त्तमाना वा स्यात् । को भवतां भिक्षां ददाति , दास्यति , दाता वा ? एवं कतरः कतमः । किंवृत्त इति किम् ? भिक्षां दास्यति । लिप्सायामिति किम् ? कः पुरं यास्यति ? ॥९॥

**लिप्स्यसिद्धौ ।५।३।१०॥**

लब्धुमिष्यमाणाद् भक्तादेः **सिद्धौ** फलावाप्तौ गम्यायां वर्त्स्यदर्थाद् धातोर्वर्त्तमाना वा स्यात् । यो भिक्षां ददाति , दास्यति , दाता वा , स स्वर्गलोकं याति , यास्यति , याता वा ॥१०॥

**पञ्चम्यर्थहेतौ ।५।३।११॥**

पञ्चम्यर्थः प्रैषादिः तस्य हेतुरुपाध्यायाऽऽगमनादिः , तस्मिन्नर्थे वर्त्स्यति वर्त्तमानाद् धातोर्वर्त्तमाना वा स्यात् । उपाध्यायश्चेद् आगच्छति , आगमिष्यति , आगन्ता वा , अथ त्वं सूत्रमधीष्व ॥११॥

**सप्तमी चोर्ध्वमौहूर्त्तिके ।५।३।१२॥**

ऊर्ध्वं मुहूर्ताद् भव ऊर्ध्वमौहूर्त्तिकः[2] , तस्मिन् पञ्चम्यर्थहेतौ वर्त्स्यत्यर्थे वर्त्तमानाद् धातोः सप्तमी वर्त्तमाना च वा स्यात् । ऊर्ध्वं मुहूर्तादुपाध्यायश्चेदागच्छेत् , आगच्छति , आगमिष्यति , आगन्ता वा , अथ त्वं तर्कमधीष्व ॥१२॥

**क्रियायां क्रियार्थायां तुम् णकच् भविष्यन्ती ।५।३।१३॥**

यस्माद् धातोस्तुमादिविधिस्तद्वाच्या क्रियाऽर्थः प्रयोजनं यस्यास्तस्यां क्रियायामुपपदे वर्त्स्यदर्थाद् धातोस्तुमादयः स्युः । कर्तुम् , कारकः , करिष्यामीति वा याति । क्रियायामिति किम् ? भिक्षिष्ये इत्यस्य जटाः । क्रियार्थायामिति किम् ? धावतस्ते पतिष्यति वासः ॥१३॥

**कर्मणोऽण् ।५।३।१४॥**

क्रियायां क्रियार्थायामुपपदे कर्मणः पराद् वर्त्स्यदर्थाद् धातोरण् स्यात् । कुम्भकारो याति ॥१४॥

**भाववचनाः ।५।३।१५॥**

भाववचना घञ्-क्त्यादयः , ते क्रियायां क्रियार्थायामुपपदे वर्त्स्यदर्थाद् धातोः स्युः । पाकाय , पक्तये , पचनाय वा याति ॥१५॥

१. चौर्ध्व॰ पा४,५ ॥ २. और्ध्व॰ J1,3, P1 पा४,५ ॥

**पद-रुज-विश-स्पृशो घञ् ।।५।३।१६।।**

एभ्यो घञ् स्यात् । पादः , रोगः , वेशः , स्पर्शः ।।१६।।

**सर्त्तेः स्थिर-व्याधि-बल-मत्स्ये ।५।३।१७।।**

सर्त्तेरेषु कर्तृषु घञ् स्यात् । सारः स्थिरः , अतीसारो व्याधिः , सारो बलम् , विसारो मत्स्यः ।।१७।।

**भावा-ऽकर्त्रोः ।५।३।१८।।**

भावे कर्तृवर्जे च कारके धातोर्घञ् स्यात् । पाकः , प्राकारः , दायो दत्तः ।।१८।।

**इङोऽपादाने तु टिद् वा ।५।३।१९।।**

इङो भावा-ऽकर्त्रोर्घञ् स्यात् । स चापादाने वा टित् । अध्यायः[1] , उपाध्यायी , उपाध्याया ।।१९।।

**श्रो वायु-वर्ण-निवृत्ते ।५।३।२०।।**

श्रो भावा-ऽकर्त्रोरेष्वर्थेषु घञ् स्यात् । शारो वायुर्वर्णो वा , नीशारः प्रावरणम् ।।२०।।

**निरभेः पू-ल्वः ।५।३।२१।।**

निरभिभ्यां पराभ्यां यथासङ्ख्यमाभ्यां भावा-ऽकर्त्रोर्घञ् स्यात् । निष्पावः , अभिलावः ।।२१।

**रोरुपसर्गात् ।५।३।२२।।**

उपसर्गपूर्वाद् रौतेर्भावा-ऽकर्त्रोर्घञ् स्यात् । संरावः ।।२२।।

**भू-श्र्यदोऽल् ।५।३।२३।।**

एभ्यः उपसर्गपूर्वेभ्यो भावा-ऽकर्त्रोरल् स्यात् । प्रभवः , संश्रयः , विघसः । उपसर्गादित्येव-भावः , श्रायः , घासः ।।२३।।

**न्यादो नवा ।५।३।२४।।**

निपूर्वाददेरलि घसॢभावोऽतो दीर्घश्च वा स्यात् । न्यादः , निघसः ।।२४।।

**सं-नि-व्युपाद् यमः ।५।३।२५।।**

१. उपाध्यायी उपाध्याया अध्यायः J1 ।।

एभ्य उपसर्गेभ्यः पराद् यमेर्भावा-ऽकर्त्रोरल् वा स्यात् । संयमः , संयामः ; नियमः , नियामः ; वियमः , वियामः ; उपयमः , उपयामः ॥२५॥

**नेर्नद-गद-पठ-स्वन-क्वणः ।५।३।२६॥**

नेरुपसर्गात् परेभ्य एभ्यो भावा-ऽकर्त्रोरल् वा स्यात् । निनदः , निनादः ; निगदः , निगादः ; निपठः , निपाठः ; निस्वनः , निस्वानः ; निक्वणः , निक्वाणः ।२६॥

**वैणे क्वणः ।५।३।२७॥**

वीणायां भवो वैणः , तदर्थादुपसर्गपूर्वात् क्वणेर्भावा-ऽकर्त्रोरल् वा स्यात् । प्रक्वणः , प्रक्वाणो वीणायाः । वैण इति किम् ? प्रक्वाणः शृङ्खलस्य ॥२७॥

**युवर्ण-वृ-दृ-वश-रण-गमृद्-ग्रहः ।५।३।२८॥**

इवर्णोवर्णान्तेभ्यो वृादेर्ऋृदन्तेभ्यो ग्रहेश्च भावा-ऽकर्त्रोरल् स्यात् । चयः , क्रयः , रवः , लवः , वरः , आदरः , वशः , रणः , गमः , करः , ग्रहः ॥२८॥

**वर्षादयः क्लीबे ।५।३।२९॥**

एतेऽलन्ताः क्लीबे यथादर्शनं भावा-ऽकर्त्रोर्निपात्यन्ते । वर्षम् , भयम् ॥२९॥

**समुदोऽजः पशौ ।५।३।३०॥**

आभ्यां परादजः पशुविषयार्थवृत्तेर्भावा-ऽकर्त्रोरल् स्यात् । समजः पशूनाम् , उदजः पशूनाम् । पशाविति किम् ? समाजो नृणाम् ॥३०॥

**सृ-ग्लहः प्रजना-ऽक्षे ।५।३।३१॥**

आभ्यां यथासङ्ख्यं प्रजना-ऽक्षविषयार्थवृत्तिभ्यां भावा-ऽकर्त्रोरल् स्यात् । गवामुपसरः , अक्षाणां ग्लहः । प्रजनाक्ष इति किम् ? उपसारो भृत्यै राज्ञाम् ॥३१॥

**पणेर्माने ।५।३।३२॥**

पणेर्मानार्थाद् भावा-ऽकर्त्रोरल् स्यात् । मूलकपणः । मान इति किम् ? पाणः ॥३२॥

**संमद-प्रमदौ हर्षे ।५।३।३३॥**

एतौ भावा-ऽकर्त्रोर्हर्षेऽर्थेऽलन्तौ स्यातास् । संमदः , प्रमदो वा स्त्रीणाम् । हर्ष इति किम् ? संमादः , प्रमादः ॥३३॥

**हनोऽन्तर्घना-ऽन्तर्घणौ देशे ।५।३।३४॥**

अन्तःपूर्वाद् हन्तेरल् घन्-घणादेशौ च निपात्येते , देशेऽर्थे भावा-ऽकर्त्रोः । अन्तर्घनः , अन्तर्घणो वा देशः । अन्तर्घातोऽन्यः ॥३४॥

**प्रघण-प्रघाणौ गृहांशे ।५।३।३५॥**

प्रपूर्वाद् हन्तेर्गृहांशेऽर्थेऽल् घण्-घा[१]णादेशौ च निपात्येते । प्रघणः , प्रघाणो वा द्वारालिन्दकः । प्रघातोऽन्यः ॥३५॥

**निघोद्ध-सङ्घोद्धना-ऽपघनोपघ्नं निमित-प्रशस्त-गणा-ऽत्याधाना-ऽङ्गा-ऽऽसन्नम् ।५।३।३६॥**

हन्तेर्निघादयो यथासङ्ख्यं निमिताद्यर्थेषु कृतघत्वादयोऽलन्ता निपात्यन्ते । समन्ततो मितं **निमितम्** , निघा वृक्षाः ; उद्धः प्रशस्तः , **सङ्घः** प्राणिसमूहः , अत्याधीयन्ते च्छेदनार्थं कुट्टनार्थं वा काष्ठादीनि यत्र तदत्याधानम् उद्धनः , अपघनः शरीरावयवः , उपघ्न आसन्नः ॥३६॥

**मूर्त्ति-निचिता-ऽभ्रे घनः ।५।३।३७॥**

हन्तेर्मूर्त्यादावर्थेऽल् घनादेशश्च निपात्यते । **मूर्त्तिः** काठिन्यम् , अभ्रस्य घनः ; **निचितं** निरन्तरम् , घनाः केशाः ; **अभ्रं** मेघः , घनः ॥३७॥

**व्ययो-द्रोः करणे ।५।३।३८॥**

एभ्यः पराद् हन्तेः करणेऽल् , घनादेशश्च निपात्यते । विघनः , अयोघनः , द्रुघनः ॥३८॥

**स्तम्बाद् घ्नश्च ।५।३।३९॥**

स्तम्बात् पराद् हन्तेरल् , घ्न-घनादेशौ च निपात्येते , करणे । स्तम्बघ्नो दण्डः , स्तम्बघनो यष्टिः ॥३९॥

**परेर्घः ।५।३।४०॥**

परिपूर्वाद् हन्तेरल् , घादेशश्च करणे निपात्यते । परिघोऽर्गला ॥४०॥

**ह्वः समाह्वयौ द्यूत-नाम्नोः ।५।३।४१॥**

द्यूते नाम्नि चार्थे यथासङ्ख्यं समाङ्पूर्वाद् आङ्पूर्वाच्च ह्वोऽल् , ह्वयादेशश्च

१. घणा J1 पा२ ॥

निपात्यते । समाह्वयः प्राणिद्यूतम् , आह्वयः संज्ञा ॥४१॥

**न्यभ्युप-वेर्वाश्चोत् ।५।३।४२॥**

एभ्यः पराद् ह्वो भावा-ऽकर्त्रोरल् स्यात् , तद्योगे वा उश्च । निहवः , अभिहवः , उपवहः विहवः ॥४२॥

**आङो युद्धे ।५।३।४३॥**

आङो ह्वो युद्धेऽर्थे भावा-ऽकर्त्रोरल् स्यात् , वा उश्च । आहवो युद्धम् । युद्ध इति किम् ? आह्वायः ॥४३॥

**आहावो निपानम् ।५।३।४४॥**

निपानं पश्वादिपानार्थो जलाधारः , तस्मिन्नर्थे आङ्पूर्वाद् ह्वो भावा-ऽकर्त्रोरल् , आहावादेशश्च निपात्यते । आहावो वीनाम् ॥४४॥

**भावेऽनुपसर्गात् ।५।३।४५॥**

अनुपसर्गाद् भावे ह्वोऽल् स्यात् , वा उश्च । हवः । भाव इति किम् ? व्याप्ये ह्वायः । अनुपसर्गादिति किम् ? आह्वायः ॥४५॥

**हनो वा वध् च ।५।३।४६॥**

अनुपसर्गाद् हन्तेर्भावेऽल् वा स्यात् , तद्योगे च हनो वध् । वधः , घातः ॥४६॥

**व्यध-जप-मद्भ्यः ।५।३।४७॥**

एभ्योऽनुपसर्गेभ्यो भावा-ऽकर्त्रोरल् स्यात् । व्यधः , जपः , मदः ॥४७॥

**नवा क्वण-यम-हस-स्वनः ।५।३।४८॥**

अनुपसर्गेभ्य एभ्यो भावा-ऽकर्त्रोरल् वा स्यात् । क्वणः , क्वाणः ; यमः , यामः ; हसः , हासः ; स्वनः , स्वानः ॥४८॥

**आङो रु-प्लोः ।५।३।४९॥**

आङः पराभ्यां रु-प्लुभ्यां भावा-ऽकर्त्रोरल् वा स्यात् । आरवः , आरावः ; आप्लवः , आप्लावः ॥४९॥

**वर्षविघ्नेऽवाद् ग्रहः ।५।३।५०॥**

अवपूर्वाद् ग्रहेर्वर्षविघ्नेऽर्थे भावा-ऽकर्त्रोरल् वा स्यात् । अवग्रहः , अवग्राहः

। वर्षविघ्ने इति किम् ? अवग्रहोऽर्थस्य ॥५०॥

**प्राद् रश्मि-तुलासूत्रे ।५।३।५१॥**

प्रपूर्वाद् ग्रहे रश्मौ तुलासूत्रे चार्थे भावा-ऽकर्त्रोरल् वा स्यात् । प्रग्रहः , प्रग्राहः ॥५१॥

**वृगो वस्त्रे ।५।३।५२॥**

प्रपूर्वाद् वृगो वस्त्रविशेषेऽर्थे भावा-ऽकर्त्रोरल् वा स्यात् । प्रवरः , प्रावार ; वस्त्र इति किम् ? प्रवरो यतिः ॥५२॥

**उदः श्रेः ।५।३।५३॥**

उत्पूर्वात् श्रेर्भावा-ऽकर्त्रोरल् वा स्यात् । उच्छ्रयः , उच्छ्रायः ॥५३॥

**यु-पू-द्रोर्घञ् ।५।३।५४॥**

उत्पूर्वेभ्य एभ्यो भावा-ऽकर्त्रोर्घञ् स्यात् । उद्यावः , उत्पावः , उद्द्रावः ॥५४॥

**ग्रहः ।५।३।५५॥**

उत्पूर्वाद् ग्रहेर्भावा-ऽकर्त्रोर्घञ् स्यात् । उद्ग्राहः ॥५५॥

**न्यवाच्छापे ।५।३।५६॥**

आभ्यां पराद् ग्रहेराक्रोशे गम्ये भावा-ऽकर्त्रोर्घञ् स्यात् । निग्राहः , अवग्राहो वा ते जाल्म ! भूयात् । शाप इति किम् ? निग्रहश्चौरस्य ॥५६॥

**प्राल्लिप्सायाम् ।५।३।५७॥**

प्रपूर्वाद् ग्रहेर्लिप्सायां गम्यायां भावा-ऽकर्त्रोर्घञ् स्यात् । पात्रप्रग्राहेण चरति पिण्डपातार्थी भिक्षुः । लिप्सायामिति किम् ? स्रुवः प्रग्रहः शिष्यस्य ॥५७॥

**समो मुष्टौ ।५।३।५८॥**

संपूर्वाद् ग्रहेर्मुष्टिविषये धात्वर्थे भावा-ऽकर्त्रोर्घञ् स्यात् । संग्राहो मल्लस्य । मुष्टाविति किम् ? संग्रहः शिष्यस्य ॥५८॥

**यु-दु-द्रोः ।५।३।५९॥**

संपूर्वेभ्य एभ्यो भावा-ऽकर्त्रोर्घञ् स्यात् । संयावः , संदावः , संद्रावः ॥५९॥

**नियश्चाऽनुपसर्गाद् वा ।५।३।६०॥**

अनुपसर्गात् नियो यु-दु-द्रोश्च भावा-कर्त्रोर्घञ् वा स्यात् । नयः , नायः

, यवः , यावः ; दवः , दावः ; द्रवः , द्रावः । अनुपसर्गादिति किम् ? प्रणयः ॥६०॥

**वोदः ।५।३।६१॥**

उत्पूर्वात् नियो भावा-ऽकर्त्रोर्घञ् वा स्यात् । उन्नायः , उन्नयः ॥६१॥

**अवात् ।५।३।६२॥**

अवपूर्वात् नियो भावा-ऽकर्त्रोर्घञ् स्यात् । अवनायः ॥६२॥

**परेर्द्यूते ।५।३।६३॥**

परिपूर्वाद् नियो द्यूतविषयार्थाद् भावा-ऽकर्त्रोर्घञ् स्यात् । परिणायेन शारीन् हन्ति । द्यूत इति किम् ? परिणयोऽस्याः ॥६३॥

**भुवोऽवज्ञाने वा ।५।३।६४॥**

परिपूर्वाद् भुवोऽवज्ञानार्थाद् भावा-ऽकर्त्रोर्घञ् वा स्याद् । परिभावः , परिभवः । अवज्ञान इति किम् ? समन्ताद् भूतिः परिभवः ॥६४॥

**यज्ञे ग्रहः ।५।३।६५॥**

परिपूर्वाद् ग्रहेर्यज्ञविषये भावा-ऽकर्त्रोर्घञ् स्यात् । पूर्वपरिग्राहः । यज्ञ इति किम् ? परिग्रहोऽर्थस्य ॥६५॥

**संस्तोः ।५।३।६६॥**

संपूर्वात् स्तोर्भावा-ऽकर्त्रोर्यज्ञविषये घञ् स्यात् । संस्तावः छन्दोगानाम् ॥६६॥

**प्रात् स्नु-द्रु-स्तोः ।५।३।६७॥**

प्रात् परेभ्य एभ्यो भावा-ऽकर्त्रोर्घञ् स्यात् । प्रस्रावः , प्रद्रावः , प्रस्तावः ॥६७॥

**अयज्ञे स्त्रः ।५।३।६८॥**

प्रपूर्वात् स्त्रो भावा-ऽकर्त्रोर्घञ् स्यात् , न चेद् यज्ञविषयः । प्रस्तारः । अयज्ञ इति किम् ? बर्हिष्प्रस्तरः ॥६८॥

**वेरशब्दे प्रथने ।५।३।६९॥**

वेः परात् स्त्रोऽशब्दविषये विस्तीर्णत्वेऽर्थे घञ् स्यात् । विस्तारः पटस्य । प्रथन इति किम् ? तृणस्य विस्तरः । अशब्द इति किम् ? वाक्यविस्तरः ॥६९॥

**छन्दोनाम्नि ।५।३।७०॥**

विपूर्वात् स्त्रो गायत्र्यादिसंज्ञाविषये घञ् स्यात् । विष्टारपङ्क्तिः ॥७०॥

**क्षु-श्रोः ।५।३।७१॥**

विपूर्वाभ्यामाभ्यां भावा-ऽकर्त्रोर्घञ् स्यात् । विक्षावः , विश्रावः ॥७१॥

**न्युदो ग्रः ।५।३।७२॥**

आभ्यां पराद् ग्रो भावा-ऽकर्त्रोर्घञ् स्यात् । निगारः , उद्गारः ॥७२॥

**किरो धान्ये ।५।३।७३॥**

न्युत्पूर्वात् किरतेर्धान्यविषयार्थाद् भावा-ऽकर्त्रोर्घञ् स्यात् । निकारः , उत्कारो धान्यस्य । धान्य इति किम् ? फलनिकरः ॥७३॥

**नेर्वुः ।५।३।७४॥**

निपूर्वाद् वुर्धान्यविषयेऽर्थे[1] भावा-ऽकर्त्रोर्घञ् स्यात् । नीवारा व्रीहयः ॥७४॥

**इणोऽभ्रेषे ।५।३।७५॥**

स्थितेरचलनमभ्रेषः , तद्विषयार्थाद् निपूर्वादिणो भावा-ऽकर्त्रोर्घञ् स्यात् । न्यायः । अभ्रेष इति किम् ? न्ययं गतश्चौरः ॥७५॥

**परेः क्रमे ।५।३।७६॥**

**क्रमः** परिपाटिः , तद्विषयार्थात् परिपूर्वादिणो भावा-ऽकर्त्रोर्घञ् स्यात् । तव पर्यायो भोक्तुम् । क्रम इति किम् ? पर्ययो गुरोः ॥७६॥

**व्युपात् शीङः ।५।३।७७॥**

आभ्यां परात् क्रमविषयार्थात् शीङो भावा-ऽकर्त्रोर्घञ् स्यात् । तव राजविशायः , मम राजोपशायः । क्रम इति किम् ? विशयः ॥७७॥

**हस्तप्राप्ये चेरस्तेये ।५।३।७८॥**

हस्तेन प्राप्तुं शक्यं **हस्तप्राप्यम्** , तद्विषयात् चिगो भावा-ऽकर्त्रोर्घञ् स्यात् , न चेत् चेरर्थश्चौर्येण । पुष्पप्रचायः । हस्तप्राप्य इति किम् ? पुष्पप्रचयं करोति वृक्षाग्रे । अस्तेय इति किम् ? स्तेयेन पुष्पप्रचयं करोति ॥७८॥

**चिति-देहा-ऽऽवासोपसमाधाने कश्चाऽऽदेः ।५।३।७९॥**

एष्वर्थेषु चेर्भावा-ऽकर्त्रोर्घञ् स्यात् , तद्योगे च चेरादेः क्[2] । चीयत इति

१. विशेषे पा१ पासं२ पा३, P3 बृहद्वृत्तौ च ॥ २. कः पा२ ॥

चितिर्यज्ञेऽग्निविशेषस्तदाधारो वा , आकायमग्निं चिन्वीत ; कायो देहः , ऋषिनिकायः ; उपसमाधानपर्युपरि राशीकरणम् , गोमयनिकायः ॥७९॥

**सङ्घेऽनूर्ध्वे ।५।३।८०॥**

नास्ति कस्यचिदुपरि[1] किञ्चिद् यस्मिन् सोऽनूर्ध्वः , तस्मिंश्चेत् प्राणिसमुदायेऽर्थे भावा-ऽकर्त्रोर्घञ् स्यात् , तद्योगे चाऽऽदेः क्[2] । तार्किकनिकायः । सङ्घ इति किम् ? सारसमुच्चयः । अनूर्ध्व इति किम् ? शूकरनिचयः ॥८०॥

**माने ।५।३।८१॥**

माने गम्ये धातोर्भावा-ऽकर्त्रोर्घञ् स्यात् । एको निष्पावः , समित्संग्राहः । मान इति किम् ? निश्चयः ॥८१॥

**स्थादिभ्यः कः ।५।३।८२॥**

एभ्यो भावा-ऽकर्त्रोः कः स्यात् । आखूत्थो वर्त्तते , प्रस्थः , प्रपा ॥८२॥

**ट्वितोऽथुः ।५।३।८३॥**

ट्वितो धातोर्भावा-ऽकर्त्रोरथुः स्यात् । वेपथुः ॥८३॥

**ड्वितस्त्रिमक् तत्कृतम् ।५।३।८४॥**

ड्वितो धातोर्भावा-ऽकर्त्रोस्त्रिमक् स्यात् , तेन धात्वर्थेन कृतमित्यर्थे । पक्त्रिमम् ॥८४॥

**यजि-स्वपि-रक्षि-यति-प्रच्छो नः ।५।३।८५॥**

एभ्यो भावा-ऽकर्त्रोर्नः स्यात् । यज्ञः , स्वप्नः , रक्ष्णः , यत्नः , प्रश्नः ॥८५॥

**विच्छो नङ् ।५।३।८६॥**

विच्छेर्भावा-ऽकर्त्रोर्नङ् स्यात् । विश्नः॥८६॥

**उपसर्गाद् दः किः ।५।३।८७।**

उपसर्गपूर्वाद् दासंज्ञाद् भावा-ऽकर्त्रोः किः स्यात् । आदिः , निधिः ॥८७॥

**व्याप्यादाधारे ।५।३।८८॥**

व्याप्यात् पराद् दासंज्ञादाधारे किः स्यात् । जलधिः ॥८८॥

१. कुतश्चिदुपरि किञ्चिद् पा१,३,४,५, P3 ॥ २. कः J2 ॥

## अन्तर्द्धिः ।५।३।८९॥

अन्तःपूर्वाद् धागो भावा-ऽकर्त्रोः किः स्यात् । अन्तर्द्धिः ॥८९॥

## अभिव्याप्तौ भावेऽन-ञिन् ।५।३।९०॥

अभिव्याप्तौ गम्यायां धातोर्भावेऽन-ञिनौ स्याताम् । संरवणम् , सांराविणम् । अभिव्याप्ताविति किम् ? संरावः ॥९०॥

## स्त्रियां क्तिः ।५।३।९१॥

धातोर्भावा-ऽकर्त्रोः स्त्रियां क्तिः स्यात् । कृतिः । स्त्रियामिति किम् ? कारः ॥९१॥

## श्रुवादिभ्यः ।५।३।९२॥

एभ्यो धातुभ्यो भावा-ऽकर्त्रोः स्त्रियां क्तिः स्यात् । श्रुतिः , प्रतिश्रुत् , संपत्तिः , संपत् ॥९२॥

## समिणासुगः ।५।३।९३॥

संपूर्वादिण आङ्पूर्वात् सुगश्च भावा-ऽकर्त्रोः स्त्रियां क्तिः स्यात् । समितिः , आसुतिः ॥९३॥

## साति-हेति-यूति-जूति-ज्ञप्ति-कीर्त्तिः ।५।३।९४॥

एते भावा-ऽकर्त्रोः क्त्यन्ता निपात्यन्ते । सातिः , हेतिः , यूतिः , जूतिः , ज्ञप्तिः , कीर्त्तिः ॥९४॥

## गा-पा-पचो भावे ।५।३।९५॥

एभ्यो भावे स्त्रियां क्तिः स्यात् । सङ्गीतिः , प्रपीतिः , पक्तिः ॥९५॥

## स्थो वा ।५।३।९६॥

स्थो भावे स्त्रियां क्तिर्वा स्यात् । प्रस्थितिः , आस्था ॥९६॥

## आस्यटि-व्रज्-यजः क्यप् ।५।३।९७॥

एभ्यो भावे स्त्रियां क्यप् स्यात् । आस्या , अटया , व्रज्या , इज्या ॥९७॥

## भृगो नाम्नि ।५।३।९८॥

भृगो भावे स्त्रियां संज्ञायां क्यप् स्यात् । भृत्या । नाम्नीति किम् ? भृतिः ॥९८॥

**समज-निपन्निपद-शीङ्-सुग्-विदि-चरि-मनीणः ।५।३।९९॥**

एभ्यो भावा-ऽकर्त्रोः स्त्रियां नाम्नि क्यप् स्यात् । समज्या , निपत्या , निपद्या , निषद्या , शय्या , सुत्या , विद्या , चर्या , मन्या , इत्या । नाम्नीत्येव-संवीतिः ॥९९॥

**कृगः श च वा ।५।३।१००॥**

कृगो भावा-ऽकर्त्रोः स्त्रियां शो वा स्यात् , क्यप् च । क्रिया , कृत्या , कृतिः ॥१००॥

**मृगयेच्छा-याच्ञा-तृष्णा-कृपा-भा-श्रद्धा-ऽन्तर्द्धा ।५।३।१०१॥**

एते स्त्रियां निपात्यन्ते ॥१०१॥

**परेः सृ-चरेर्यः ।५।३।१०२॥**

परिपूर्वाभ्यामाभ्यां भावा-ऽकर्त्रोः स्त्रियां यः स्यात् । परिसर्या , परिचर्या ॥१०२॥

**वाऽटाट्यात् ।५।३।१०३॥**

अटेर्यङन्तात् स्त्रियां भावा-ऽकर्त्रोर्यो वा स्यात् । अटाट्या , अटाटा ॥१०३॥

**जागुरश्च ।५।३।१०४॥**

जागुः स्त्रियां भावा-ऽकर्त्रोः अः यश्च स्यात् । जागरा , जागर्या ॥१०४॥

**शंसि-प्रत्ययात् ।५।३।१०५॥**

शंसेः प्रत्ययान्ताच्च भावा-ऽकर्त्रोः स्त्रियामः स्यात् । प्रशंसा , गोपाया ॥१०५॥

**क्तेटो गुरोर्व्यञ्जनात् ।५।३।१०६॥**

क्तस्येट् यस्मात् ततो गुरुमतो व्यञ्जनान्ताद् धातोर्भावा-ऽकर्त्रोरः स्यात् । ईहा । क्तेट इति किम् ? स्रस्तिः । गुरोरिति किम् ? स्फूर्त्तिः । व्यञ्जनादिति किम् ? संशीतिः ॥१०६॥

**षितोऽङ् ।५।३।१०७॥**

षितो धातोर्भावा-ऽकर्त्रोः स्त्रियाम् अङ् स्यात् । पचा ॥१०७॥

**भिदादयः ।५।३।१०८॥**

एते भावा-ऽकर्त्रोः स्त्रियामङन्ता यथालक्ष्यं निपात्यन्ते । भिदा , छिदा ॥१०८॥

**भीषि-भूषि-चिन्ति-पूजि-कथि-कुम्बि-चर्चि-स्पृहि-तोलि-दोलिभ्यः**

।५।३।१०९।।

एभ्यो ण्यन्तेभ्यः स्त्रियां भावा-ऽकर्त्रोरङ् स्यात् । भीषा , भूषा , चिन्ता , पूजा , कथा , कुम्बा , चर्चा , स्पृहा , तोला , दोला ।।१०९।।

**उपसर्गादातः ।५।३।११०।।**

उपसर्गपूर्वाद् आदन्तात् स्त्रियां भावा-ऽकर्त्रोरङ् स्यात् । उपदा । उपसर्गादिति किम् ? दत्तिः ।।११०।।

**णि-वेत्त्यास-श्रन्थ-घट्ट-वन्देरनः ।५।३।१११।।**

ण्यन्ताद् वेत्त्यादिभ्यश्च स्त्रियां भावा-ऽकर्त्रोरनः स्यात् । कारणा , वेदना , आसना , श्रन्थना , घट्टना , वन्दना ।।१११।।

**इषोऽनिच्छायाम् ।५।३।११२।।**

अनिच्छार्थाद् इषेः स्त्रियां भावा-ऽकर्त्रोरनः स्यात् । अन्वेषणा । अनिच्छायामिति किम् ? इष्टिः ।।११२।।

**पर्यधेर्वा ।५।३।११३।।**

आभ्यां परादनिच्छार्थाद् इषेर्भावा-ऽकर्त्रोः स्त्रियामनो वा स्यात् । पर्येषणा , परीष्टिः ; अध्येषणा , अधीष्टिः ।।११३।।

**क्रुत्संपदादिभ्यः क्विप् ।५।३।११४।।**

क्रुधादिभ्योऽनुपसर्गेभ्यः , पदादिभ्यश्च समादिपूर्वेभ्यः स्त्रियां भावा-ऽकर्त्रोः क्विप् स्यात् । क्रुत् , युत् ; संपत् , विपत् ।।११४।।

**भ्यादिभ्यो वा ।५।३।११५।।**

एभ्यः स्त्रियां भावा-ऽकर्त्रोः क्विप् वा स्यात् । भीः , भीतिः ; ह्रीः , ह्रीतिः ।।११५।।

**व्यतिहारेऽनीहादिभ्यो ञः ।५।३।११६।।**

व्यतीहारविषयेभ्य ईहादिवर्जेभ्यो धातुभ्यः स्त्रियां ञः स्यात् , बाहुलकाद् भावे । व्यावक्रोशी । अनीहादिभ्य इति किम् ? व्यतीहा , व्यतीक्षा ।।११६।।

**नञोऽनिः शापे ।५।३।११७।।**

नञः पराद्धातोः शापे गम्ये भावा-ऽकर्त्रोः स्त्रियाम् अनिः स्यात् । अजननिस्ते

भूयात् । शाप इति किम् ? अकृतिः पटस्य ॥११७॥

**ग्ला-हा-ज्यः ।५।३।११८॥**

एभ्यः स्त्रियां भावा-ऽकर्त्रोरनिः स्यात् । ग्लानिः , हानिः , ज्यानिः ॥११८॥

**प्रश्ना-ऽऽख्याने वेञ् ।५।३।११९॥**

प्रश्ने आख्याने च गम्ये स्त्रियां भावा-ऽकर्त्रोर्धातोरिञ् वा स्यात् । कां कारिं कारिकां क्रियां कृत्यां कृतिं वा अकार्षीः ? सर्वां कारिं कारिकां क्रियां कृत्यां कृतिं वा अकार्षम् ॥११९॥

**पर्याया-ऽर्हर्णोत्पत्तौ च णकः ।५।३।१२०॥**

एष्वर्थेषु प्रश्ना-ऽऽख्यानयोश्च गम्ययोः स्त्रियां भावा-ऽकर्त्रोर्धातोर्णकः स्यात् । भवत आसिका , [१]भवतः शायिका , अर्हसि त्वमिक्षुभक्षिकाम् , इक्षुभक्षिकां मे धारयसि , इक्षुभक्षिका मे[२] उदपादि , कां कारिकामकार्षीः ? सर्वां कारिकामकार्षम् ॥१२०॥

**नाम्नि पुंसि च ।५।३।१२१॥**

धातोः परो भावा-ऽकर्त्रोः स्त्रियां संज्ञायां णकः स्यात् , यथालक्ष्यं पुंसि च । प्रच्छर्दिका , शालभञ्जिका , अरोचकः ॥१२१॥

**भावे ।५।३।१२२॥**

धात्वर्थनिर्देशे स्त्रियां धातोर्णकः स्यात् । शायिका ॥१२२॥

**क्लीबे क्तः ।५।३।१२३॥**

नपुंसके भावे धातोः क्तः स्यात् । हसितं तव । क्लीबे इति किम् ? हासः ॥१२३॥

**अनट् ।५।३।१२४॥**

क्लीबे भावेऽर्थे धातोरनट् स्यात् । गमनम् ॥१२४॥

**यत्कर्मस्पर्शात् कर्त्रङ्गसुखं ततः ।५।३।१२५॥**

येन कर्मणा संस्पृष्टस्य कर्तुरङ्गस्य सुखं स्यात् ततः पराद् धातोः क्लीबे भावेऽनट् स्यात् । पयःपानं सुखम् । कर्मेति किम् ? तूलिकाया उत्थानं सुखम् । स्पर्शादिति

१. भवतः शायिका P2 पासं२ विना नास्ति ॥ २. मे P2,P3 पा१,३,४ विना नास्ति ॥

किम् ? अग्निकुण्डस्योपासनं सुखम् । कर्त्रीति किम् ? शिष्येण गुरोः स्नापनं सुखम् । अङ्गेति किम् ? पुत्रस्य परिष्वञ्जनं सुखम् । सुखमिति किम् ? कण्टकानां मर्दनम् । नित्यसमासार्थमिदम् ॥१२५॥

**रम्यादिभ्यः कर्त्तरि ।५।३।१२६॥**

एभ्यः कर्त्तरि अनट् स्यात् । रमणी , कमनी ॥१२६॥

**कारणम् ।५।३।१२७॥**

कृगः कर्त्तर्यनट् , वृद्धिश्च स्यात् । कारणम् ॥१२७॥

**भुजि-पत्यादिभ्यः कर्मा-ऽपादाने ।५।३।१२८॥**

भुज्यादेः कर्मणि , पत्यादेश्चाऽपादानेऽनट् स्यात् । भोजनम् , निरदनम् ; प्रपतनः , अपादानम् ॥१२८॥

**करणा-ऽऽधारे ।५।३।१२९॥**

अनयोरर्थयोर्धातोरनट् स्याद् । एषणी , सक्तुधानी ॥१२९॥

**पुन्नाम्नि घः ।५।३।१३०॥**

पुंसः संज्ञायां गम्यायां धातोः करणा-ऽऽधारयोर्घः स्यात् । दन्तच्छदः , आकरः । पुमिति किम् ? विचयनी । नाम्नीति किम् ? प्रहरणो दण्डः ॥१३०॥

**गोचर-संचर-वह-व्रज-व्यज-खला-ऽऽपण-निगम-बक-भग-कषा-ऽऽकष-निकषम् ।५।३।१३१॥**

एते करणा-ऽऽधारयोः पुन्नाम्नि घान्ता निपात्यन्ते । गोचरः , संचरः , वहः , व्रजः , व्यजः , खलः , आपणः , निगमः , बकः बाहुलकात् कर्त्तरि , भगः , बाहुलकाद् भगम् , कषः , आकषः , निकषः ॥१३१॥

**व्यञ्जनाद् घञ् ।५।३।१३२॥**

व्यञ्जनान्ताद् धातोः पुन्नाम्नि करणा-ऽऽधारे घञ् स्यात् । वेदः ॥१३२॥

**अवात् तॄ-स्तृभ्याम् ।५।३।१३३॥**

आभ्यामवपूर्वाभ्यां करणा-ऽऽधारयोः पुन्नाम्नि घञ् स्यात् । अवतारः , अवस्तारः ॥१३३॥

**न्याया-ऽऽवाया-ऽध्यायोद्याव-संहारा-ऽवहारा-ऽऽधार-दार-जारम्**

।५।३।१३४।।

एते पुन्नाम्नि करणा-ऽऽधारयोर्घञन्ता निपात्यन्ते । न्यायः , आवायः , अध्यायः , उद्यावः , संहारः , अवहारः , आधारः , दाराः , जारः ।।१३४।।

**उदङ्कोऽतोये ।५।३।१३५।।**

उत्पूर्वादञ्चेः पुन्नाम्नि करणा-ऽऽधारयोर्घञ् स्यात् , न चेत् तोयविषयो धात्वर्थः । तैलोदङ्कः । अतोय इति किम् ? उदकोदञ्चनः ।।१३५।।

**आनायो जालम् ।५।३।१३६।।**

आङ्पूर्वात् नियः करणे पुन्नाम्नि जालेऽर्थे घञ् स्यात् । आनायो मत्स्यानाम् ।।१३६।।

**खनो ड-डरेके-कवक-घं च ।५।३।१३७।।**

खनेः पुन्नाम्नि करणा-ऽऽधारयोरेते , घञ् च स्युः । आखः , आखरः , आखनिकः , आखनिकवकः , आखनः , आखानः ।।१३७।।

**इ-कि-श्तिव् स्वरूपा-ऽर्थे ।५।३।१३८।।**

धातोः स्वरूपेऽर्थे च वाच्ये एते स्युः । भञ्जिः , क्रुधिः , वेत्तिः ; अर्थे यजेरङ्गानि , भुजिः क्रियते , पचतिः वृत्तः ।।१३८।।

**दुः-स्वीषतः कृच्छ्रा-ऽकृच्छ्रार्थे खल् ।५।३।१३९।।**

कृच्छ्रवृत्तेर्दुरोऽर्थादकृच्छ्रवृत्तिभ्यां च स्वीषद्भ्यां पराद् धातोः खल् स्यात् । दुःशयम् , दुष्करः ; सुशयम् , सुकरः ; ईषच्छयम् , ईषत्करः । कृच्छ्राकृच्छ्रार्थ[2] इति किम् ? ईषल्लभ्यं धनम् ।।१३९।।

**च्व्यर्थे कर्त्राप्याद् भू-कृगः ।५।३।१४०।।**

कृच्छ्रा-ऽकृच्छ्रार्थेभ्यो दुः-स्वीषद्भ्यः पराभ्यां च्व्यर्थवृत्तिकर्तृ-कर्मवाचिभ्यां पराभ्यां यथासङ्ख्यं भू-कृग्भ्यां परः खल् स्यात् । दुराढ्यंभवम् , स्वाढ्यंभवम् , ईषदाढ्यंभवं भवता ; दुराढ्यंकरः , स्वाढ्यंकरः , ईषदाढ्यंकरश्चैत्रस्त्वया । च्व्यर्थ इति किम् ? दुराढ्येन भूयते ।।१४०।।

**शासू-युधि-दृशि-धृषि-मृषा-ऽऽतोऽनः ।५।३।१४१।।**

१. [°]च्छार्थात् J1, पा३,५, बृहद्वृत्तिं च विना ।। २. [°]कृच्छार्थादिति P2, पा४ । [°]कृच्छार्थाभ्यामिति पा२ ।।

कृच्छ्रा-ऽकृच्छ्रार्थदुः-स्वीषत्पूर्वेभ्य एभ्य आदन्ताच्च धातोरनः स्यात् । दुःशासनः , सुशासनः , ईषच्छासनः ; एवं दुर्योधनः , दुर्दर्शनः , दुर्धर्षणः , दुर्मर्षणः , दुरुत्थानम् ॥१४१॥

[इत्याचार्यश्री**हेमचन्द्र**विरचितायां
**सिद्धहेमचन्द्रा**भिधानस्वोपज्ञशब्दानुशासनलघुवृत्तौ]
पञ्चमस्याध्यायस्य तृतीयः पादः समाप्तः[1] ॥५।३॥

मात्रयाप्यधिकं किञ्चिन्न सहन्ते जिगीषवः ।
इतीव त्वं धरानाथ ! **धारानाथमपाकृथाः** ॥१९॥

---

१. **समाप्तः** J3 नास्ति ॥

## [ चतुर्थः पादः ]

### सत्सामीप्ये सद्वद् वा ।५।४।१॥

समीपमेव सामीप्यम् , वर्त्तमानस्य सामीप्ये भूते भविष्यति चार्थे वर्त्तमानाद् धातोर्वर्त्तमाने इव प्रत्यया वा स्युः । कदा चैत्र ! आगतोऽसि ? अयमागच्छामि , आगच्छन्तमेव मां विद्धि ; पक्षे-अयमागमम् , एषोऽस्म्यागतः ; कदा मैत्र ! गमिष्यसि ? एष गच्छामि , गच्छन्तमेव मां विद्धि ; पक्षे-एष गमिष्यामि , गन्ताऽस्मि , गमिष्यन्तमेव मां विद्धि ॥१॥

### भूतवच्चाऽऽशंस्ये वा ।५।४।२॥

अनागतस्यार्थस्य प्राप्तुमिच्छा **आशंसा** , तद्विषयः **आशंस्यः** , तदर्थाद् धातोर्भूतवत् सद्वच्च प्रत्यया वा स्युः । उपाध्यायश्चेदागमत् , एते तर्कमध्यगीष्महि , उपाध्यायश्चेदागच्छति , एते तर्कमधीमहे ; पक्षे-उपाध्यायश्चेदागमिष्यति , आगन्ता वा , एते तर्कमध्येष्यामहे , अध्येतास्महे वा । आशंस्य इति किम् ? उपाध्याय आगमिष्यति तर्कमध्येष्यते मैत्रः ॥२॥

### क्षिप्रा-ऽऽशंसाऽर्थयोर्भविष्यन्ती-सप्तम्यौ ।५।४।३॥

क्षिप्रार्था-ऽऽशंसार्थयोरुपपदयोराशंस्यार्थाद् धातोर्यथासङ्ख्यं भविष्यन्ती-सप्तम्यौ स्याताम् । उपाध्यायश्चेदागच्छति , आगमत् , आगमिष्यति , आगन्ता , क्षिप्रमाशु एते सिद्धान्तमध्येष्यामहे ; उपाध्यायश्चेदागच्छति , आगमत् , आगमिष्यति , आगन्ता , आशंसे संभावये युक्तोऽधीयीय ॥३॥

### सम्भावने सिद्धवत् ।५।४।४॥

हेतोः शक्तिश्रद्धानं **सम्भावनम्** , तस्मिन् विषयेऽसिद्धेऽपि वस्तुनि सिद्धवत् प्रत्ययाः स्युः । समये चेत् प्रयत्नोऽभूद् उदभूवन् विभूतयः ॥४॥

### नाऽनद्यतनः प्रबन्धा-ऽऽसत्त्योः ।५।४।५॥

धा[1]त्वर्थस्य प्रबन्धे आसत्तौ च गम्यायां धातोरनद्यतनविहितः प्रत्ययो न स्यात् । यावज्जीवं भृशमन्नमदात् , दास्यति वा ; येयं पौर्णमास्यतिक्रान्ता एतस्यां जिनमहः प्रावर्त्तिष्ट , येयं पौर्णमास्यागामिन्यस्यां जिनमहः प्रवर्त्तिष्यते ॥५॥

---

१. धात्वर्थे च प्रबन्धे J1 ॥

**एष्यत्यवधौ देशस्याऽर्वाग्भागे ।५।४।६॥**

देशस्य योऽवधिस्तद्वाचिन्युपपदे देशस्यैवार्वाग्भागे य एष्यन्नर्थस्तद्वृत्तेर्धातोरनद्यतनविहितः प्रत्ययो न स्यात् । योऽयमध्वा गन्तव्य आ शत्रुञ्जयात् , तस्य यदवरं वलभ्यास्तत्र द्विरोदनं भोक्ष्यामहे । एष्यतीति किम् ? योऽयमध्वाऽतिक्रान्त आ शत्रुञ्जयात् तस्य यदवरं वलभ्यास्तत्र युक्ता द्विरध्यैमहि । अवधाविति किम् ? योऽयमध्वा निरवधिको गन्तव्यः , तस्य यदवरं वलभ्यास्तत्र द्विरोदनं भोक्तास्महे । अर्वाग्भाग इति किम् ? योऽयमध्वा गन्तव्य आ शत्रुञ्जयात् , तस्य यत् परं वलभ्यास्तत्र द्विरोदनं भोक्तास्महे ॥६॥

**कालस्याऽनहोरात्राणाम् ।५।४।७॥**

कालस्य योऽवधिस्तद्वाचिन्युपपदे कालस्यैवार्वाग्भागे य एष्यन्नर्थस्तद्वृत्तेर्धातोरनद्यतनविहितः प्रत्ययो न स्यात् , न चेत् सोऽर्वाग्भागोऽहोरात्राणाम् । योऽयमागामी संवत्सरस्तस्य यदवरमाग्रहायण्यास्तत्र जिनपूजां करिष्यामः । अनहोरात्राणामिति किम् ? योऽयं मास आगामी , तस्य योऽवरः पञ्चदशरात्रस्तत्र युक्ता द्विरध्येतास्महे ॥७॥

**परे वा ।५।४।८॥**

कालस्य योऽवधिस्तद्वाचिन्युपपदे , कालस्यैव परे भागेऽनहोरात्रसम्बन्धिनि य एष्यन्नर्थस्तद्वृत्तेर्धातोरनद्यतनविहितः प्रत्ययो वा स्यात् । आगामिनो वत्सरस्याऽऽग्रहायण्याः परस्ताद् द्विः सूत्रमध्येष्यामहे , अध्येतास्महे वा ॥८॥

**सप्तम्यर्थे क्रियाऽतिपत्तौ क्रियाऽतिपत्तिः ।५।४।९॥**

सप्तम्या अर्थो निमित्तं हेतुफलकथनादि सामग्र्यम् , कुतश्चिद् वैगुण्यात् क्रियाया अनभिनिर्वृत्तौ सत्यामेष्यदर्थाद् धातोः सप्तम्यर्थे क्रियाऽतिपत्तिः स्यात् । दक्षिणेन चेद् अयास्यत् न शकटं पर्याभविष्यत् ॥९॥

**भूते ।५।४।१०॥**

भूतार्थाद् धातोः क्रियाऽतिपत्तौ सत्यां सप्तम्यर्थे क्रियाऽतिपत्तिः स्यात् । दृष्टो मया तव पुत्रोऽन्नार्थी चङ्क्रम्यमाणः , अपरश्चातिथ्यर्थी , यदि स तेन दृष्टोऽभविष्यदुताभोक्ष्यत , अप्यभोक्ष्यत ॥१०॥

**वोतात् प्राक् ।५।४।११॥**

*सप्तम्युताऽप्योर्बाढे [५।४।२१]* इत्यत्र यदुतशब्दसंकीर्त्तनं ततः प्राक् सप्तम्यर्थे क्रियात्तिपत्तौ भूतार्थाद् धातोर्वा क्रियाऽतिपत्तिः स्यात्। कथं नाम संयतः सन्ननागाढे तत्रभवान् आधायकृतमसेविष्यत , धिग् गर्हामहे ; पक्षे-कथं सेवेत ? कथं सेवते ? धिग् गर्हामहे । उतात् प्रागिति किम् ? कालो यदभोक्ष्यत भवान् ।।११।।

**क्षेपेऽपि-जात्वोर्वर्त्तमाना ।५।४।१२।।**

क्षेपे गम्येऽपि-जात्वोरुपपदयोर्धातोर्वर्त्तमाना स्यात् । अपि तत्रभवान् जन्तून् हिनस्ति ? जातु तत्रभवान् भूतानि हिनस्ति ? धिग् गर्हामहे ।।१२।।

**कथमि सप्तमी च वा ।५।४।१३।।**

कथं शब्दे उपपदे क्षेपे गम्ये धातोः सप्तमी वर्त्तमाना च वा स्यात् । कथं नाम तत्रभवान् मांसं भक्षयेत् ? भक्षयति वा ? गर्हामहे अन्याय्यमेतत् ; पक्षे-अबभक्षत् , अभक्षयत् , भक्षयाञ्चकार , भक्षयिता , भक्षयिष्यति । अत्र सप्तमीनिमित्तमस्तीति भूते क्रियाऽतिपतने वा क्रियाऽतिप[1]त्तिः -कथं नाम तत्रभवान् मांसमभक्षयिष्यत् ? पक्षे-यथाप्राप्तम् ; भविष्यति तु क्रियातिपतने नित्यमेव सा-कथं नाम तत्रभवान् मांसमभक्षयिष्यत् ।।१३।।

**किंवृत्ते सप्तमी-भविष्यन्त्यौ ।५।४।१४।।**

किंवृत्ते उपपदे क्षेपे गम्ये धातोः सप्तमी-भविष्यन्त्यौ स्याताम्। किं तत्रभवाननृतं ब्रूयाद् , वक्ष्यति वा ? को नाम , कतरो नाम , कतमो नाम यस्मै तत्रभवान् अनृतं ब्रूयाद् , वक्ष्यति वा ? ।।१४।।

**अश्रद्धा-ऽमर्षेऽन्यत्रापि ।५।४।१५।।**

अकिंवृत्ते किंवृत्ते चोपपदेऽश्रद्धा-ऽमर्षयोर्गम्ययोः सप्तमी-भविष्यन्त्यौ स्याताम् । न श्रद्दधे , न सम्भावयामि तत्रभवान् नामाऽदत्तं गृह्णीयात् , ग्रहीष्यति वा , न श्रद्दधे , किं तत्रभवान् अदत्तमाददीत , आदास्यते वा ? न मर्षयामि , न क्षमे तत्रभवान् नामादत्तं गृह्णीयात् ग्रहीष्यति वा ।।१५।।

**किङ्किलाऽस्त्यर्थयोर्भविष्यन्ती ।५।४।१६।।**

किङ्किलेऽस्त्यर्थे चोपपदेऽश्रद्धा-ऽमर्षयोर्गम्ययोर्भविष्यन्ती स्यात् । न श्रद्दधे , न मर्षयामि किङ्किल नाम तत्रभवान् परदारानुपकरिष्यते , न श्रद्दधे , न

१. [1]पत्तिः स्यात् P1 ।।

मर्षयामि , अस्ति नाम , भवति नाम तत्रभवान् परदारानुपकरिष्यते ॥१६॥

**जातु-यद्-यदा-यदौ सप्तमी ।५।४।१७॥**

एषूपपदेष्वश्रद्धा-ऽमर्षयोः सप्तमी स्यात् । न श्रद्दधे , न क्षमे जातु तत्रभवान् सुरां पिबेत् , एवं यत् , यदा , यदि सुरां पिबेत् ॥१७॥

**क्षेपे च यच्च यत्रे ।५।४।१८॥**

यच्च-यत्रयोरुपपदयोः क्षेपेऽश्रद्धा-ऽमर्षयोश्च गम्ययोः सप्तमी स्यात् । धिग् गर्हामहे यच्च यत्र वा तत्रभवानस्मान् आक्रोशेत् , न श्रद्दधे , न क्षमे यच्च यत्र वा तत्रभवान् परिवादं कथयेत् ॥१८॥

**चित्रे ।५।४।१९॥**

आश्चर्ये गम्ये यच्च-यत्रयोरुपपदयोः सप्तमी स्यात् । चित्रमाश्चर्यं यच्च यत्र वा तत्रभवान् अकल्प्यं सेवेत ॥१९॥

**शेषे भविष्यन्त्ययदौ ।५।४।२०॥**

यच्च-यत्राभ्यामन्यस्मिन्नुपपदे चित्रे गम्ये भविष्यन्ती स्यात् , न तु यदिशब्दे । चित्रमाश्चर्यमन्धो नाम गिरिमारोक्ष्यति । शेष इति किम् ? यच्च-यत्रयोः पूर्वेण सप्तम्येव । अयदाविति किम् ? चित्रं यदि स भुञ्जीत ॥२०॥

**सप्तम्युता-ऽप्योर्बाढे ।५।४।२१॥**

बाढार्थयोरुता-ऽप्योरुपपदयोः सप्तमी स्यात् । उत अपि वा कुर्यात् । बाढे इति किम् ? उत दण्डः पतिष्यति , अपि धास्यति द्वारम् ॥२१॥

**सम्भावनेऽलमर्थे तदर्थानुक्तौ ।५।४।२२॥**

अलमोऽर्थे शक्तौ यत् सम्भावनं तस्मिन् गम्येऽलमर्थार्थस्याऽप्रयोगे सप्तमी स्यात् । अपि मासमुपवसेत् । अलमर्थ इति किम् ? निंदेशस्थायी मे चैत्रः प्रायेण यास्यति । तदर्थानुक्ताविति किम् ? शक्तश्चैत्रो धर्मं करिष्यति ॥२२॥

**अयदि श्रद्धाधातौ नवा ।५।४।२३॥**

संभावनाऽर्थे धातावुपपदेऽलमर्थविषये संभावने गम्ये सप्तमी वा स्यात् , न तु यच्छब्दे । श्रद्दधे , संभावयामि भुञ्जीत भवान् ; पक्षे-भोक्ष्यते , अभुङ्क्त , अभुक्त वा । अयदीति किम् ? सम्भावयामि यद् भुञ्जीत भवान् । श्रद्धाधाताविति

१. निर्देश पा२ P2 ॥

किम् ? अपि शिरसा पर्वतं भिन्द्यात् ॥२३॥

**सतीच्छाऽर्थात् ।५।४।२४॥**

सदर्थादिच्छार्थात् सप्तमी वा स्यात् । इच्छेत् , इच्छति ॥२४॥

**वर्त्स्यति हेतु-फले ।५।४।२५॥**

हेतुभूते फलभूते च वर्त्स्यत्यर्थे वर्त्तमानात् सप्तमी वा स्यात् । यदि गुरूनुपासीत शास्त्रान्तं गच्छेत् , यदि गुरूनुपासिष्यते शास्त्रान्तं गमिष्यति । वर्त्स्यतीति किम् ? दक्षिणेन चेद् याति न शकटं पर्याभवति ॥२५॥

**कामोक्तावकच्चिति ।५।४।२६॥**

इच्छाप्रवेदने गम्ये सप्तमी स्यात् , न तु कच्चित्प्रयोगे । कामो मे भुञ्जीत भवान् । अकच्चितीति किम् ? कच्चित् जीवति मे माता ॥२६॥

**इच्छार्थे सप्तमी-पञ्चम्यौ ।५।४।२७॥**

इच्छार्थे धातावुपपदे कामोक्तौ गम्यायां सप्तमी-पञ्चम्यौ स्याताम् । इच्छामि भुञ्जीत , भुङ्क्तां वा भवान् ॥२७॥

**विधि-निमन्त्रणा-ऽऽमन्त्रणा-ऽधीष्ट-सम्प्रश्न-प्रार्थने ।५।४।२८॥**

विध्यादिविशिष्टेषु कर्तृ-कर्म-भावेषु प्रत्ययार्थेषु सप्तमी-पञ्चम्यौ स्याताम् । **विधिः** क्रियायां प्रेरणा , कटं कुर्यात् , करोतु भवान् । प्रेरणायामेव यस्यां प्रत्याख्याने प्रत्यवायस्त**न्निमन्त्रणम्** , द्विसन्ध्यमावश्यकं कुर्यात् , करोतु । यत्र प्रेरणायामेव प्रत्याख्याने कामचारस्त**दामन्त्रणम्** , इहासीत , आस्ताम् । प्रेरणैव सत्कारपूर्विका **अधीष्टम्** , व्रतं रक्षेत् , रक्षतु । **संप्रश्नः** संप्रधारणा , किं नु खलु भो ! व्याकरणमधीयीय , अध्ययै , उत सिद्धान्तमधीयीय , अध्ययै ? । **प्रार्थनं** याच्ञा , प्रार्थना मे तर्कमधीयीय , अध्ययै ॥२८॥

**प्रैषा-ऽनुज्ञा-ऽवसरे कृत्य-पञ्चम्यौ ।५।४।२९॥**

प्रैषादिविशिष्टे कर्त्रादावर्थे कृत्याः पञ्चमी च स्युः । न्यत्कारपूर्विका प्रेरणा **प्रैषः** , भवता खलु कटः कार्यः , भवान् कटं करोतु , भवान् हि प्रेषितोऽनुज्ञातो भवतोऽवसरः कटकरणे ॥२९॥

**सप्तमी चोर्ध्वमौहूर्त्तिके ।५।४।३०॥**

प्रैषादिषु गम्येषु ऊर्ध्वमौहूर्त्तिकेऽर्थे वर्त्तमानात् सप्तमी कृत्य-पञ्चम्यौ च स्युः

। ऊर्ध्वं मुहूर्त्तात् कटं कुर्यात् भवान् , भवता कटः कार्यः , कटं करोतु भवान् , भवान् हि प्रेषितोऽनुज्ञातो भवतोऽवसरः कटकरणे ॥३०॥

**स्मे पञ्चमी ।५।४।३१॥**

स्मे उपपदे प्रैषादिषु गम्येषु ऊर्ध्वमौहूर्त्तिकार्थाद् धातोः पञ्चमी स्यात् । ऊर्ध्वं मुहूर्त्ताद् भवान् कटं करोतु स्म , भवान् हि प्रेषितोऽनुज्ञातो भवतोऽवसरः कटकरणे ॥३१॥

**अधीष्टौ ।५।४।३२॥**

स्मे उपपदेऽध्येषणायां गम्यायां पञ्चमी स्यात् । अङ्ग ! स्म विद्वन् ! अणुव्रतानि रक्ष ॥३२॥

**काल-वेला-समये तुम्वाऽवसरे ।५।४।३३॥**

एषूपपदेष्ववसरे गम्ये धातोस्तुम् वा स्यात् । कालो भोक्तुम् , वेला भोक्तुम् , समयो भोक्तुम् , पक्षे-कालो भोक्तव्यस्य । अवसर इति किम् ? कालः पचति भूतानि ॥३३॥

**सप्तमी यदि ।५।४।३४॥**

यच्छब्दप्रयोगे कालादिषूपपदेषु सप्तमी स्यात् । कालो यदधीयीत भवान् , वेला यद् भुञ्जीत , समयो यत् शयीत ॥३४॥

**शक्तार्हे कृत्याश्च ।५।४।३५॥**

शक्तेऽर्हे च कर्त्तरि गम्ये कृत्याः सप्तमी च स्युः । भवता खलु भारो वाह्यः , उह्येत , भवान् भारं वहेत् , भवान् हि शक्तः ; भवता खलु कन्या वोढव्या , उह्येत , भवान् खलु कन्यां वहेत् , भवानेतदर्हति ॥३५॥

**णिन् चाऽऽवश्यका-ऽऽधमर्ण्ये ।५।४।३६॥**

अनयोर्गम्ययोः कर्त्तरि वाच्ये णिन् कृत्याश्च स्युः । कारी , अवश्यंहारी , अवश्यं गेयो गीतस्य , शतं दायी , गेयो गाथानाम् ॥३६॥

**अर्हे तृच् ।५।४।३७॥**

अर्हे कर्त्तरि वाच्ये तृच् स्यात् । भवान् कन्याया वोढा ॥३७॥

**आशिष्याशीः-पञ्चम्यौ ।५।४।३८॥**

आशीर्विशिष्टार्थाद् आशीः-पञ्चम्यौ स्याताम् । जीयात् , जयतात् । आशिषीति

किम् ? चिरं जीवति मैत्रः ॥३८॥

**माङ्यद्यतनी ।५।४।३९॥**

माङि उपपदेऽद्यतनी स्यात् । मा कार्षीत् ॥३९॥

**सस्मे ह्यस्तनी च ।५।४।४०॥**

स्मयुक्ते माङ्युपपदे ह्यस्तन्यद्यतनी च स्यात् । मा स्म करोत् , मा स्म कार्षीत् ॥४०॥

**धातोः सम्बन्धे प्रत्ययाः ।५।४।४१॥**

धात्वर्थानां संबन्धे विशेषणविशेष्यभावे सति अयथाकालमपि प्रत्ययाः साधवः स्यु । विश्वदृश्वाऽस्य पुत्रो भविता , भावि कृत्यमासीत् , गोमानासीत् ॥४१॥

**भृशा-ऽऽभीक्ष्ण्ये हि-स्वौ यथाविधि त-ध्वमौ च तद्युष्मदि ।५।४।४२॥**

भृशा-ऽऽभीक्ष्ण्ये सर्वकालेऽर्थे वर्त्तमानाद् धातोः सर्वविभक्तिवचनविषये[1] हि-स्वौ स्याताम् , यथाविधि धातोः संबन्धे यत एव धातोर्यस्मिन्नेव कारके हि-स्वौ तस्यैव धातोस्तत्कारकविशिष्टस्यैव सम्बन्धे अनुप्रयोगे सति , तथा पञ्चम्या एव त-ध्वमौ , तयोः सम्बन्धिनि बहुत्वविशिष्टे युष्मदर्थे हि-स्वौ च स्यातां यथाविधि धातोः सम्बन्धे । लुनीहि लुनीहीत्येवायं लुनातीत्यादि , अधीष्वाधीष्वेत्येवायमधीते इत्यादि , लुनीत लुनीतेत्येव यूयं लुनीथ , लुनीहि लुनीहीत्येव यूयं लुनीथ , अधीध्वमधीध्वमित्येव यूयमधीध्वे , अधीष्वाधीष्वेत्येव यूयमधीध्वे । यथाविधीति किम् ? लुनीहि लुनीहीत्येवायं लुनाति , छिनत्ति , लूयते वेति धातोः संबन्धे मा भूत् ॥४२॥

**प्रचये नवा सामान्यार्थस्य ।५।४।४३॥**

धात्वर्थानां समुच्चये गम्ये सामान्यार्थस्य धातोः सम्बन्धे सति धातोः परौ हि-स्वौ , त-ध्वमौ च तद्युष्मदि वा स्याताम् । व्रीहीन् वप , लुनीहि , पुनीहि , इत्येव यतते , यत्यते वा ; पक्षे-व्रीहीन् वपति , लुनाति , पुनाति , इत्येव यतते , यत्यते वा । सूत्रमधीष्व , निर्युक्तिमधीष्व , भाष्यमधीष्वेत्येवाधीते , पठ्यते वा ; पक्षे-सूत्रमधीते , निर्युक्तिमधीते , भाष्यमधीते , इत्येवाधीते , पठ्यते वा । व्रीहीन् वपत , लुनीत , पुनीतेत्येव यतध्वे , व्रीहीन् वप , लुनीहि

१. सर्ववचन P1 ॥

, पुनीहीत्येव चेष्टध्वे ; पक्षे-व्रीहीन् वपथ , लुनीथ , पुनीथेत्येव यतध्वे । सूत्रमधीध्वं निर्युक्तिमधीध्वं भाष्यमधीध्वमित्येवाधीध्वे , सूत्रमधीष्व निर्युक्तिमधीष्व भाष्यमधीष्वेत्येवाधीध्वे ; पक्षे-सूत्रमधीध्वे निर्युक्तिमधीध्वे भाष्यमधीध्वे इत्येवाधीध्वे । सामान्यार्थस्येति किम् ? व्रीहीन् वप लुनीहि पुनीहि इत्येव वपति लुनाति पुनातीति मा भूत् ॥४३॥

**निषेधेऽलं-खल्वोः क्त्वा ।५।४।४४॥**

निषेधार्थयोरलं-खल्वोरुपपदयोर्धातोः क्त्वा वा स्यात् । अलं कृत्वा , खलु कृत्वा , पक्षे-अलं रुदितेन ॥४४॥

**पराऽवरे ।५।४।४५॥**

परे अवरे च गम्ये क्त्वा वा स्यात् । अतिक्रम्य नदीं गिरिः , नद्यतिक्रमेण गिरिः , अप्राप्य नदीं गिरिः , नद्यप्राप्या गिरिः ॥४५॥

**निमील्यादि-मेङस्तुल्यकर्तृके ।५।४।४६॥**

तुल्यो धात्वर्थान्तरेण कर्त्ता यस्य तद्वृत्तिभ्यो निमील्यादिभ्यो मेङश्च धातोः सम्बन्धे क्त्वा वा स्यात् । अक्षिणी निमील्य हसति , मुखं व्यादाय स्वपिति , अपमित्य याचते , पक्षे-अपमातुं याचते । तुल्यकर्तृक इति किम् ? चैत्रस्याक्षिनिमीलने मैत्रो हसति ॥४६॥

**प्राक्काले ।५।४।४७॥**

परकालेन धात्वर्थेन तुल्यकर्तृके प्राक्कालेऽर्थे वर्त्तमानाद् धातोः सम्बन्धे क्त्वा वा स्यात् । आसित्वा भुङ्क्ते , आस्यते भोक्तुम् । प्राक्काल इति किम् ? भुज्यते पीयते च ॥४७॥

**ख्णम् चाभीक्ष्ण्ये ।५।४।४८।**

आभीक्ष्ण्ये परकालेन तुल्यकर्तृके प्राक्कालेऽर्थे वर्त्तमानाद् धातोः सम्बन्धे ख्णम् क्त्वा च स्यात् । भोजं भोजं याति , भुक्त्वा भुक्त्वा याति ॥४८॥

**पूर्वा-ऽग्रे-प्रथमे ।५।४।४९॥**

एषूपपदेषु परकालेन तुल्यकर्तृके प्राक्कालेऽर्थे वर्त्तमानाद् धातोः सम्बन्धे ख्णम् वा स्यात् । पूर्वं भोजं याति , पूर्वं भुक्त्वा याति , एवम्-अग्रे भोजम् , अग्रे भुक्त्वा ; प्रथमं भोजम् , प्रथमं भुक्त्वा ; पूर्वं भुज्यते ततो याति ॥४९॥

## अन्यथैवं-कथमित्थमः कृगोऽनर्थकात् ।५।४।५०॥

एभ्यः परात् तुल्यकर्तृकार्थात् कृगोऽनर्थकाद् धातोः सम्बन्धे ख्णम् वा स्यात् । अन्यथाकारम् , एवङ्कारम् , कथङ्कारम् , इत्थङ्कारं भुङ्क्ते , पक्षे-अन्यथा कृत्वा । अनर्थकादिति किम् ? अन्यथा कृत्वा शिरो भुङ्क्ते ॥५०॥

## यथा-तथादीर्ष्योत्तरे ।५।४।५१॥

आभ्यां तुल्यकर्तृकार्थादनर्थकात् कृगो धातोः सम्बन्धे ख्णम् वा स्यात् , ईर्ष्यश्चेदुत्तरयति । कथं त्वं भोक्ष्यसे ? इति पृष्टोऽसूयया तं प्रत्याह-यथाकारमहं भोक्ष्ये तथाकारमहं भोक्ष्ये , किं तवानेन ? । ईर्ष्योत्तर इति किम् ? यथा कृत्वाऽहं भोक्ष्ये तथा द्रक्ष्यसि ॥५१॥

## शापे व्याप्यात् ।५।४।५२॥

कर्मणः परात् तुल्यकर्तृकार्थात् कृगो धातोः सम्बन्धे ख्णम् वा स्यात् , आक्रोशे गम्ये । चोरङ्कारमाक्रोशति । शाप इति किम् ? चोरं कृत्वा हेतुभिः कथयति ॥५२॥

## स्वाद्वर्थाद् अदीर्घात् ।५।४।५३॥

स्वाद्वर्थाददीर्घान्ताद् व्याप्यात् परस्मात् तुल्यकर्तृकार्थात् कृगो धातोः सम्बन्धे ख्णम् वा स्यात् । स्वादुङ्कारं भुङ्क्ते , मिष्टङ्कारं भुङ्क्ते , पक्षे-स्वादुं कृत्वा । अदीर्घादिति किम् ? स्वाद्वीं कृत्वा यवागूं भुङ्क्ते ॥५३॥

## विद्-दृग्भ्यः कात्स्न्र्ये णम् ।५।४।५४॥

कात्स्न्र्यवतो व्याप्यात् परेभ्यस्तुल्यकर्तृके प्राकालेऽर्थे वर्त्तमानेभ्यो विदिभ्यो दृशेश्च धातोः सम्बन्धे णम् वा स्यात् । अतिथिवेदं भोजयति , कन्यादर्शं वरयति । कात्स्न्र्य इति किम् ? अतिथिं विदित्वा भोजयति ॥५४॥

## यावतो विन्द-जीवः ।५।४।५५॥

कात्स्न्र्यवतो व्याप्याद् यावतः पराभ्यां तुल्यकर्तृकाभ्यां विन्द-जीविभ्यां धातोः सम्बन्धे णम् वा स्यात् । यावद्वेदं भुङ्क्ते , यावज्जीवमधीते ॥५५॥

## चर्मोदरात् पूरेः ।५।४।५६॥

आभ्यां व्याप्याभ्यां परात् तुल्यकर्तृकार्थात् पूरयतेर्धातोः सम्बन्धे णम् वा स्यात् । चर्मपूरमास्ते , उदरपूरं शेते ॥५६॥

**वृष्टिमान ऊलुक् चास्य वा ।५।४।५७।।**

व्याप्यात् परात् पूरयतेर्धातोः सम्बन्धे णम् वा स्यात्, पूरयतेरूतो लुक् च वा , समुदायेन चेद् वृष्टीयत्ता गम्यते । गोष्पदप्रं गोष्पदपूरं वा वृष्टो मेघः ।।५७।।

**चेलार्थात् क्नोपेः ।५।४।५८।।**

चेलार्थाद् व्याप्यात् परात् क्नोपयतेस्तुल्यकर्तृकार्थाद् वृष्टिमाने गम्ये धातोः सम्बन्धे णम् वा स्यात् । चेलक्नोपं वृष्टो मेघः ।।५८।।

**गात्र-पुरुषात् स्नः ।५।४।५९।।**

आभ्यां व्याप्याभ्यां परात् तुल्यकर्तृकार्थात् स्नातेर्वृष्टिमाने गम्ये धातोः सम्बन्धे णम् वा स्यात् । गात्रस्नायं वृष्टः , पुरुषस्नायं वृष्टः ।।५९।।

**शुष्क-चूर्ण-रूक्षात् पिषस्तस्यैव ।५।४।६०।।**

एभ्यो व्याप्येभ्यः परात् पिषेर्णम् वा स्यात् , तस्यैव धातोः सम्बन्धे । शुष्कपेषं पिनष्टि , एवं चूर्णपेषम् , रूक्षपेषम् ।।६०।।

**कृग्-ग्रहोऽकृत-जीवात् ।५।४।६१।।**

आभ्यां व्याप्याभ्यां पराद् यथासङ्ख्यं कृगो ग्रहेश्च तस्यैव सम्बन्धे णम् वा स्यात् । अकृतकारं करोति , जीवग्राहं गृह्णाति ।।६१।।

**निमूलात् कषः ।५।४।६२।।**

निमूलाद् व्याप्यात् परात् कषेस्तस्यैव सम्बन्धे णम् वा स्यात् । निमूलकाषं कषति , निमूलस्य काषं कषति ।।६२।।

**हनश्च समूलात् ।५।४।६३।।**

समूलाद् व्याप्यात् पराद् हन्तेः कषेश्च तस्यैव सम्बन्धे णम् वा स्यात् । समूलघातं हन्ति , समूलकाषं कषति ।।६३।।

**करणेभ्यः ।५।४।६४।।**

करणार्थाद् पराद् हन्तेस्तस्यैव सम्बन्धे णम् वा स्यात् । पाणिघातं कुड्यमाहन्ति ।।६४।।

**स्व-स्नेहनार्थात् पुष-पिषः ।५।४।६५।।**

स्वशब्दार्थात् स्नेहनार्थाच्च करणार्थात् पराद् यथासङ्ख्यं पुषः पिषश्च तस्यैव

सम्बन्धे णम् वा स्यात् । स्वपोषं पुष्णाति , एवम् आत्मपोषम् , गोपोषम् । उदपेषं पिनष्टि , एवं क्षीरपेषम् ॥६५॥

**हस्तार्थाद् ग्रह-वर्ति-वृतः ।५।४।६६।**

हस्तार्थात् करणवाचिनः परेभ्य एभ्यस्तस्यैव सम्बन्धे णम् वा स्यात् । हस्तग्राहं गृह्णाति , एवं करग्राहम् , हस्तवर्त्तं वर्त्तयति , पाणिवर्त्तं वर्त्तते ॥६६॥

**बन्धेर्नाम्नि ।५।४।६७॥**

बन्धिः प्रकृतिर्नामविशेषणं च , बन्धेर्बन्धनस्य **यन्नाम** संज्ञा , तद्विषयात् करणार्थात् पराद् बन्धेस्तस्यैव सम्बन्धे णम् वा स्यात् । कौञ्चबन्धम्बद्धः ॥६७॥

**आधारात् ।५।४।६८॥**

आधारार्थात् पराद् बन्धेस्तस्यैव सम्बन्धे णम् वा स्यात् । चारकबन्धम्बद्धः ॥६८॥

**कर्तुर्जीव-पुरुषान्नश्-वहः ।५।४।६९॥**

आभ्यां कर्तृभ्यां पराद् यथासङ्ख्यं नशेर्वहेश्च तस्यैव सम्बन्धे णम् वा स्यात् । जीवनाशं नश्यति , पुरुषवाहं वहति । कर्तुरिति किम् ? जीवेन नश्यति ॥६९॥

**ऊर्ध्वात् पूः-शुषः ।५।४।७०॥**

कर्तुरूर्ध्वात् परात् पूरः शुषश्च तस्यैव सम्बन्धे णम् वा स्यात् । ऊर्ध्वपूरं पूर्यते , ऊर्ध्वशोषं शुष्यति ॥७०॥

**व्याप्याच्चेवात् ।५।४।७१॥**

व्याप्यात् कर्तुश्चोपमानात् पराद् धातोस्तस्यैव सम्बन्धे णम् वा स्यात् । सुवर्णनिधायं निहितः , काकनाशं नष्टः ॥७१॥

**उपात् किरो लवने ।५।४।७२॥**

उपपूर्वात् किरतेर्लवनार्थस्य धातोः सम्बन्धे णम् वा स्यात् । उपस्कारं मद्रका लुनन्ति । लवन इति किम् ? उपकीर्य याति ॥७२॥

**दंशेस्तृतीयया ।५।४।७३॥**

तृतीयान्तेन योगे तुल्यकर्तृकार्थादुपपूर्वाद् दंशेर्धातोः सम्बन्धे णम् वा स्यात् । मूलकेनोपदंशं मूलकोपदंशम् , मूलकेनोपदश्य भुङ्क्ते ॥७३॥

**हिंसार्थादेकाऽऽप्यात् ।५।४।७४॥**

हिंसार्थाद् धातोर्धात्वन्तरेणैकाऽऽप्यात् तुल्यकर्तृकार्थात् तृतीयान्तेन योगे णम् वा स्यात्। दण्डेनोपघातं दण्डोपघातं दण्डेनोपहत्य वा गाः सादयति। एकाप्यादिति किम् ? दण्डेनाहत्य चौरं गोपालो गाः खेटयति ।।७४।।

**उपपीड-रुध-कर्षस्तत्सप्तम्या ।५।४।७५।।**

**तया** तृतीयया युक्ता सप्तमी तत्सप्तमी , तदन्तेन योगे उपपूर्वेभ्य एभ्यस्तुल्यकर्तृकार्थेभ्यो धातोः सम्बन्धे णम् वा स्यात् । पार्श्वाभ्यामुपपीडं पार्श्वोपपीडं शेते , पार्श्वयोरुपपीडं पार्श्वोपपीडं शेते ; व्रजेनोपरोधं व्रजोपरोधम् , व्रजे उपरोधं व्रजोपरोधं गाः स्थापयति ; पाणिनोपकर्षं पाण्युपकर्षम् , पाणावुपकर्षं पाण्युपकर्षं धाना गृह्णाति ।।७५।।

**प्रमाण-समासत्त्योः ।५।४।७६।।**

आयाममानं **प्रमाणम् , समासत्तिः** संरम्भपूर्वकः सन्निकर्षः , तयोर्गम्ययोस्तृतीयान्तेन सप्तम्यन्तेन च योगे तुल्यकर्तृकार्थाद् धातोः संबन्धे णम् वा स्यात् । द्व्यङ्गुलेनोत्कर्षं द्व्यङ्गुलोत्कर्षम् , द्व्यङ्गुले उत्कर्षं द्व्यङ्गुलोत्कर्षं गण्डिकाश्छिनत्ति ; केशैर्ग्राहं केशग्राहम् , केशेषु ग्राहं केशग्राहं युध्यन्ते ; पक्षे-द्व्यङ्गुलेनोत्कृष्य गण्डिकाश्छिनत्ति ।।७६।।

**पञ्चम्या त्वरायाम् ।५।४।७७।।**

त्वरायां गम्यायां पञ्चम्यन्तेन योगे तुल्यकर्तृकार्थाद् धातोः सम्बन्धे णम् वा स्यात् । शय्याया उत्थायं शय्योत्थायं धावति , पक्षे-शय्याया उत्थाय धावति । त्वरायामिति किम् ? आसनादुत्थाय याति ।।७७।।

**द्वितीयया ।५।४।७८।।**

द्वितीयान्तेन योगे त्वरायां गम्यायां तुल्यकर्तृकार्थाद् धातोः सम्बन्धे णम् वा स्यात् । लोष्टान् ग्राहं लोष्टग्राहम् , लोष्टान् गृहीत्वा युध्यन्ते ।।७८।।

**स्वाङ्गेनाऽध्रुवेण ।५।४।७९।।**

यस्मिन्नङ्गे च्छिन्ने भिन्ने वा प्राणी न म्रियते तदध्रुवम् , तेन स्वाङ्गेन द्वितीयान्तेन योगे तुल्यकर्तृकार्थाद् धातोः सम्बन्धे णम् वा स्यात् । भ्रुवौ विक्षेपं भ्रूविक्षेपम् , भ्रुवौ विक्षिप्य वा जल्पति । स्वाङ्गेनेति किम् ? कफमुन्मूल्य जल्पति । अध्रुवेणेति किम् ? शिर उत्क्षिप्य वक्ति ।।७९।।

## परिक्लेश्येन ।५।४।८०॥

परिक्लेश्येन स्वाङ्गेन द्वितीयान्तेन योगे तुल्यकर्तृकार्थाद् धातोः सम्बन्धे णम् वा स्यात् । उरांसि प्रतिपेषं उरःप्रतिपेषम् , उरांसि प्रतिपिष्य वा युध्यन्ते ॥८०॥

## विश-पत-पद-स्कन्दो वीप्सा-ऽऽभीक्ष्ण्ये ।५।४।८१॥

द्वितीयान्तेन योगे तुल्यकर्तृकार्थाद् विशयादेर्वीप्सा-ऽऽभीक्ष्ण्ययोर्गम्ययोर्धातोः सम्बन्धे णम् वा स्यात् । गेहं गेहमनुप्रवेशं गेहानुप्रवेशमास्ते , गेहमनुप्रवेशमनुप्रवेशं गेहानुप्रवेशमास्ते , गेहं गेहमनुप्रपातं गेहानुप्रपातमास्ते , गेहमनुप्रपातमनुप्रपातं गेहानुप्रपातमास्ते ; गेहं गेहमनुप्रपादं गेहानुप्रपादमास्ते , गेहमनुप्रपादमनुप्रपादं गेहानुप्रपादमास्ते ; गेहं गेहमवस्कन्दं गेहावस्कन्दमास्ते , गेहमवस्कन्दमवस्कन्दं गेहावस्कन्दमास्ते ; पक्षे-गेहं गेहमनुप्रविश्याऽऽस्ते , गेहमनुप्रविश्यानुप्रविश्याऽऽस्ते इत्यादि ॥८१॥

## कालेन तृष्यस्वः क्रियाऽन्तरे ।५।४।८२॥

क्रियाव्यवधायकार्थाभ्यां तृष्यसूभ्यां द्वितीयान्तेन कालार्थेन योगे धातोः सम्बन्धे णम् वा स्यात् । द्व्यहं तर्षं द्व्यहतर्षं गावः पिबन्ति । द्व्यहमत्यासं द्व्यहात्यासं गावः पिबन्ति । क्रियान्तर इति किम् ? अहरत्यस्येषून् गतः ॥८२॥

## नाम्ना ग्रहा-ऽऽदिशः ।५।४।८३॥

नामशब्देन द्वितीयान्तेन योगे तुल्यकर्तृकार्थाद् ग्रहेरादिशेश्च धातोः सम्बन्धे णम् वा स्यात् । नामानि ग्राहं नामग्राहमाह्वयति , नामान्यादेशं नामादेशं दत्ते , पक्षे-नाम गृहीत्वा दत्ते ॥८३॥

## कृगोऽव्ययेनाऽनिष्टोक्तौ क्त्वा-णमौ ।५।४।८४॥

अव्ययेन योगे तुल्यकर्तृकार्थात् कृगोऽनिष्टोक्तौ गम्यायां धातोः सम्बन्धे क्त्वा-णमौ स्याताम् । ब्राह्मण ! पुत्रस्ते जातः , किं तर्हि वृषल ! नीचैः कृत्वा , नीचैःकृत्य , नीचैःकारं कथयसि ? उच्चैर्नाम प्रियमाख्येयम् । अनिष्टोक्ताविति किम् ? उच्चैः कृत्वाऽऽचष्टे - ब्राह्मण ! पुत्रस्ते जात इति । अव्ययेनेति किम् ? ब्राह्मण ! पुत्रस्ते जातः , किं तर्हि वृषल ! मन्दं कृत्वा कथयसि ? ॥८४॥

## तिर्यचाऽपवर्गे ।५।४।८५॥

क्रियासमाप्तौ गम्यायां तिर्यचाऽव्ययेन योगे तुल्यकर्तृकार्थात् कृगो धातोः

सम्बन्धे क्त्वा-णमौ स्याताम् । तिर्यक् कृत्वा , तिर्यक्कृत्य , तिर्यक्कारमास्ते । अपवर्ग इति किम् ? तिर्यक् कृत्वा काष्ठं गतः ॥८५॥

**स्वाङ्गतश्च्व्यर्थे नाना-विना-धार्थेन भुवश्च ।५।४।८६॥**

तसन्तेन स्वाङ्गेन , च्व्यर्थवृत्तिभिर्नाना-विनाभ्यां धा[1]ऽर्थप्रत्ययान्तैश्च योगे तुल्यकर्तृकार्थाद् भुवः कृगश्च धातोः सम्बन्धे क्त्वा-णमौ स्याताम् । मुखतो भूत्वा , मुखतोभूय , मुखतोभावमास्ते ; नाना भूत्वा , नानाभूय , नानाभावं गतः , विना भूत्वा , विनाभूय , विनाभावं गतः ; द्विधा भूत्वा , द्विधाभूय , द्विधाभावमास्ते ; एवं पार्श्वतः कृत्वा , पार्श्वतःकृत्य , पार्श्वतःकारं शेते इत्यादि । च्व्यर्थ इति किम् ? नाना कृत्वा भक्ष्याणि भुङ्क्ते ॥८६॥

**तूष्णीमा ।५।४।८७॥**

तूष्णींयोगे तुल्यकर्तृकार्थाद् भुवो धातोः सम्बन्धे क्त्वा-णमौ स्याताम् । तूष्णीं भूत्वा , तूष्णींभूय , तूष्णींभावमास्ते ॥८७॥

**आनुलोम्येऽन्वचा ।५।४।८८॥**

अन्वचाऽव्ययेन योगे तुल्यकर्तृकार्थाद् भुव आनुलोम्ये गम्ये धातोः सम्बन्धे क्त्वा-णमौ स्याताम् । अन्वग् भूत्वा , अन्वग्भूय , अन्वग्भावमास्ते । आनुलोम्य इति किम् ? अन्वग् भूत्वा विजयते , पश्चाद् भूत्वेत्यर्थः ॥८८॥

**इच्छार्थे कर्मणः सप्तमी ।५।४।८९॥**

इच्छार्थे धातावुपपदे तुल्यकर्तृकार्थात् कर्मभूताद् धातोः सप्तमी स्यात् । भुञ्जीयेति इच्छति । इच्छार्थ इति किम् ? भोजको याति । कर्मण इति किम् ? इच्छन् करोति ॥८९॥

**शक-धृष-ज्ञा-रभ-लभ-सहा-ऽर्ह-ग्ला-घटा-ऽस्ति-समर्थार्थे च तुम् ।५।४।९०॥**

शक्याद्यर्थेषु इच्छार्थेषु च धातुषु समर्थार्थेषु च नामसूपपदेषु कर्मभूताद् धातोस्तुम् स्यात् । शक्नोति पारयति वा भोक्तुम् , एवं धृष्णोति , जानाति , आरभते , लभते , सहते , अर्हति , ग्लायति , घटते , अस्ति , समर्थः , इच्छति

१. P2,P3सं, पा३, पासं ४, पामू०२ J3 विना — धात्वर्थ° J1,2 पा१,५,पामू ४ पासं०२ P1मू० P3मू० ॥

वा भोक्तुम् ॥९०॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां
**सिद्धहेमचन्द्रा**भिधानस्वोपज्ञशब्दानुशासनलघुवृत्तौ
पञ्चमस्याध्यायस्य चतुर्थः पादः समाप्तः ॥५।४॥
॥ पञ्चमोऽध्यायः समाप्तः[1] ॥

क्षुण्णाः क्षोणिभृतामनेककटका भग्नाऽथ **धारा** ततः ,
कुण्ठः **सिद्धपतेः** कृपाण इति रे **मा मंसत** क्षत्रियाः ! ॥
आरूढप्रबलप्रतापदहनः **संप्रामधाराश्चिरात्** ,
पीत्वा **मालवयो**षिदश्रुसलिलं **हन्ताऽयमे**धिष्यते ॥२०॥

१. समाप्तः ॥छा। संवत् १२२१ वर्षे माघवदि ६ बुधेऽद्ये[ह] ... प्रा(आ?)शाश्रीविद्यामठे लघुवृत्तिपुस्तिका पंडि० वयरसीहेन लेषिता । शुभं भवतु लेखकपाठकयोः ॥ मंगलं महाश्री ॥ .... श्री शान्तिसूरिचरणद्वयपङ्कजालिः(लि)श्री हेमचन्द्रकविपुंगवक्लृप्तमेतत् । .... — P3 ॥ समाप्तः ॥छा। शिवमस्तु सर्वभूतानां ॥छा। ग्रं०श्लो० १६७८ संवत् १२०६ आषाढ वदि ५ सोमे ॥छा। — J1 ॥

## [ अथ षष्ठोऽध्यायः ]

## प्रथमः पादः

**तद्धितोऽणादिः ।६।१।१॥**

वक्ष्यमाणोऽणादिस्तद्धितः स्यात् । औपगवः ॥१॥

**पौत्रादि वृद्धम् ।६।१।२॥**

परमप्रकृतेर्यत् पौत्रादि अपत्यं तद् वृद्धं स्यात् । गार्ग्यः , पुत्रस्तु गार्गिः ॥२॥

**वंश्य-ज्यायोभ्रात्रोर्जीवति प्रपौत्राद्यस्त्री युवा ।६।१।३॥**

**वंश्यः** पित्रादिः स्वस्य हेतुः , वंश्ये ज्येष्ठभ्रातरि च जीवति प्रपौत्राद्यपत्यं स्त्रीवर्जं युवा स्यात् । गार्ग्यायणः ॥३॥

**सपिण्डे वयः-स्थानाधिके जीवद् वा ।६।१।४॥**

समानः **पिण्डः** सप्तमः पुरुषो यस्य तस्मिन् वयः-स्थानाभ्यामधिके जीवति प्रपौत्राद्यस्त्री जीवद् युवा वा स्यात् । गार्ग्यायणः , गार्ग्यो वा ॥४॥

**युव-वृद्धं कुत्सा-ऽर्चे वा ।६।१।५॥**

युवा वृद्धं चाऽपत्यं यथासङ्ख्यं कुत्सा-ऽर्चयोर्विषये युवा वा स्यात् । गार्ग्यः , गार्ग्यायणो वा जाल्मः । वृद्धमर्चितम् , गार्ग्यायणः , गार्ग्यो वा ॥५॥

**संज्ञा दुर्वा ।६।१।६॥**

हठात् संज्ञा दुर्वा स्यात् । देवदत्तीयाः , दैवदत्ताः ॥६॥

**त्यदादिः ।६।१।७॥**

असौ दुः स्यात् । त्यदीयम् , तदीयम् ॥७॥

**वृद्धिर्यस्य स्वरेष्वादिः ।६।१।८॥**

यस्य स्वराणामादिः स्वरो वृद्धिः स दुः स्यात् । आम्रगुप्तायनिः ॥८॥

**एदोद् देश एवेयादौ ।६।१।९॥**

देशार्थस्यैव यस्य स्वराणामादिरेदोच्च , स ईयादौ विधेये दुः स्यात् । सैपुरिका , सैपुरिकी ; स्कौनगरिका , स्कौनगरिकी ॥९॥

**प्राग्देशे ।६।१।१०॥**

---

१. षष्ठ-सप्तमाध्याययोर्लघुवृत्तिः पा२, P3,J1-2-3 आदर्शानवलम्ब्य संशोधिता ॥

प्रागुदेशार्थस्य यस्य स्वरेष्वादिरेदोद्धा स ईयादौ कार्ये दुः स्यात्। एणीपचनीयः , गोनर्दीयः ॥१०॥

**वा-ऽऽद्यात् ।६।१।११॥**

वेति आद्यादिति च द्वयमधिकृतं स्यात् , तेन तद्धितप्रसङ्गे पक्षे वाक्य-समासावपि , सूत्रादौ च निर्दिष्टात् प्रत्ययः ॥११॥

**गोत्रोत्तरपदाद् गोत्रादिवाऽजिह्वाकात्य-हरितकात्यात् ।६।१।१२॥**

गोत्रमपत्यम् , जिह्वाकात्य-हरितकात्यवर्जाद् गोत्रप्रत्ययान्तोत्तरपदाद् गोत्र-प्रत्ययान्तादिव तद्धितः स्यात् । यथा चारायणीयास्तथा कम्बलचारायणीयाः । अजिह्वेत्यादि किम् ? यथेह ईयः-कातीयाः , न तथा जैह्वाकाताः , हारितकाताः ॥१२॥

**प्राग् जितादण् ।६।१।१३॥**

प्राग् जितोक्तेः पादत्रयं यावद् येऽर्थास्तेष्वण् वा स्यात्। औपगवः , माञ्जिष्ठम् ॥१३॥

**धनादेः पत्युः ।६।१।१४॥**

धनादेः परो यः पतिस्तदन्तात् प्रागुजितीयेऽर्थेऽण् स्यात्। धानपतः , आश्वपतः . ॥१४॥

**अनिदम्यणपवादे च दित्यदित्यादित्य-यम-पत्युत्तरपदाञ्ञ्यः ।६।१।१५॥**

एभ्यः प्रागुजितीयेऽर्थे इदंवर्जेऽपत्याद्यर्थे योऽणोऽपवादस्तद्विषये च ञ्यः स्यात् । दैत्यः , आदित्यः , आदित्य्यः , याम्यः , बार्हस्पत्यः[1] ॥१५॥

**बहिषष्टीकण् च ।६।१।१६॥**

बहिषः प्राग्जितीयेऽर्थे टीकण् ञ्यश्च स्यात् । बाहीकः , बाह्यः ॥१६॥

**कल्यग्नेरेयण् ।६।१।१७॥**

आभ्यां प्रागुजितीयेऽर्थेऽनिदम्यणपवादे च एयण् स्यात् । कालेयम् , आग्नेयम् ॥१७॥

१. इतः परम् J3 मध्ये 'अनिदमीति किम् ? आदित्यस्येदम् आदितीयं मण्डलम्' इत्यधिकः पाठः ॥

## पृथिव्या ञा-ऽञ् ।६।१।१८।।

पृथिव्याः प्राग्जितीयेऽर्थेऽनिदम्यणपवादे च ञा-ऽञौ स्याताम् । पार्थिवा , पार्थिवी ।।१८।।

## उत्सादेरञ् ।६।१।१९।।

अस्मात् प्रागृजितीयेऽर्थेऽनिदम्यणपवादे चाऽञ् स्यात् । औत्सः , औदपानम् ।।१९।।

## बष्कयादसमासे ।६।१।२०।।

असमासवृत्तेर्बष्कयात् प्रागृजितीयेऽर्थेऽनिदम्यणपवादे चाऽञ् स्यात् । बाष्कयः । असमास इति किम् ? सौबष्कयिः ।।२०।।

## देवाद् यञ् च ।६।१।२१।।

देवात् प्रागृजितीयेऽर्थेऽनिदम्यणपवादे च यञञौ स्याताम् । दैव्यम् , दैवम् ।।२१।।

## अः स्थाम्नः ।६।१।२२।।

स्थाम्नः प्रागृजितीयेऽर्थे अः स्यात् । अश्वत्थामः ।।२२।।

## लोम्नोऽपत्येषु ।६।१।२३।।

लोम्नः प्रागृजितीयेऽर्थे बह्वपत्याऽर्थे अः स्यात् । उडुलोमाः । बहुवचनं किम् ? औडुलोमिः ।।२३।।

## द्विगोरनपत्ये य-स्वरादेर्लुबद्विः ।६।१।२४।।

अपत्यादन्यस्मिन् प्राग्जितीयेऽर्थे भूतस्य द्विगोः परस्य यादेः स्वरादेश्च प्रत्ययस्य लुप् स्यात् , न तु द्विः । द्विरथः , पञ्चकपालः । अनपत्य इति किम् ? द्वैमातुरः । अद्विरिति किम् ? पाञ्चकपालम् ।।२४।।

## प्राग् वतः स्त्री-पुंसात् नञ्-स्नञ् ।६।१।२५।।

वतोऽर्वागर्थेष्वनिदम्यणपवादे चाभ्यां यथासङ्ख्यं नञ्-स्नञौ स्याताम् । स्त्रैणः , पौंस्नः । प्राग् वत इति किम् ? स्त्रीवत् ।।२५।।

## त्वे वा ।६।१।२६।।

स्त्री-पुंसाभ्यां त्वविषये यथासङ्ख्यं नञ्-स्नञौ वा स्याताम् । स्त्रैणम् , स्त्रीत्वम्

; पौंस्नम् , पुंस्त्वम् ॥२६॥

**गोः स्वरे यः ।६।१।२७॥**

गोः स्वरादितद्धितप्राप्तौ यः स्यात् । गव्यम् । स्वर इति किम् ? गोमयम् ॥२७॥

**ङसोऽपत्ये ।६।१।२८॥**

षष्ठ्यन्तादपत्येऽर्थे यथाविहितमणादयः स्युः । औपगवः , दैत्यः ॥२८॥

**आद्यात् ।६।१।२९॥**

अपत्ये यस्तद्धितः स परमप्रकृतेरेव स्यात् । उपगोरपत्यमौपगवः , तस्याऽप्यौप गविः , औपगवेरप्यौपगवः ॥२९॥

**वृद्धाद् यूनि ।६।१।३०॥**

यूनि अपत्ये यः प्रत्ययः स आद्याद् यो वृद्धप्रत्ययस्तदन्तात् स्यात् । गार्ग्यस्यापत्यं युवा गार्ग्यायणः ॥३०॥

**अत इञ् ।६।१।३१॥**

अदन्तात् षष्ठ्यन्तादपत्ये इञ् स्यात् । दाक्षिः ॥३१॥

**बाह्वादिभ्यो गोत्रे ।६।१।३२॥**

स्वापत्यसन्तानस्य स्वव्यपदेशहेतुर्य आद्यपुरुषस्तदपत्यं गोत्रम् , एभ्यः षष्ठ्य न्तेभ्यो गोत्रेऽर्थे इञ् स्यात् । बाहविः , औपबाहविः ॥३२॥

**वर्मणोऽचक्रात् ।६।१।३३॥**

चक्रवर्जात् परो यो वर्मा तदन्तादपत्येऽर्थे इञ् स्यात् । ऐन्द्रवर्मिः । अचक्रादिति किम् ? चाक्रवर्मणः ॥३३॥

**अजादिभ्यो धेनोः ।६।१।३४॥**

एभ्यः परो यो धेनुस्तदन्तादपत्यार्थे इञ् स्यात् । आजधेनविः , बाष्कधेनविः ॥३४॥

**ब्राह्मणाद्वा ।६।१।३५॥**

ब्राह्मणाद् धेनुस्तदन्तादपत्येऽर्थे इञ् वा स्यात् । ब्राह्मणधेनविः , ब्राह्मणधेनवः ॥३५॥

**भूयस्-सम्भूयो-ऽम्भो-ऽमितौजसः स्लुक् च ।६।१।३६।।**

एभ्योऽपत्ये इञ् स्यात् , सो लुक् च । भौयिः , साम्भूयिः , आम्भिः , आमितौजिः ।।३६।।

**शालङ्क्यौदि-षाडि-वाड्वलि ।६।१।३७।।**

एतेऽपत्ये इञन्ता निपात्यन्ते । शालङ्किः , औदिः , षाडिः , वाड्वलिः ।।३७।।

**व्यास-वरुट-सुधातृ-निषाद-बिम्ब-चण्डालादन्त्यस्य चाऽक् ।६।१।३८।।**

एभ्योऽपत्ये इञ् स्यात् , तद्योगे चैषामन्तस्याऽक् । वैयासकिः , वारुटकिः , सौधातकिः , नैषादकिः , बैम्बकिः , चाण्डालकिः ।।३८।।

**पुनर्भू-पुत्र-दुहितृ-ननान्दुरनन्तरेऽञ् ।६।१।३९।।**

एभ्यः षष्ठ्यन्तेभ्योऽनन्तरेऽपत्येऽञ् स्यात् । पौनर्भवः , पौत्रः , दौहित्रः , नानान्द्रः ।।३९।।

**परस्त्रियाः परशुश्चाऽसावर्ण्ये ।६।१।४०।।**

परस्त्रिया अनन्तरेऽपत्येऽञ् स्यात् , तद्योगेऽस्य परशुश्च , न चेदसौ पुंसा सजातीया । पारशवः । असावर्ण्य इति किम् ? पारस्त्रैणेयः ।।४०।।

**विदादेर्वृद्धे ।६।१।४१।।**

एभ्यो वृद्धेऽपत्येऽञ् स्यात् । वैदः , और्वः ।।४१।।

**गर्गादेर्यञ् ।६।१।४२।।**

एभ्यः षष्ठ्यन्तेभ्यो वृद्धेऽपत्ये यञ् स्यात् । गार्ग्यः । वात्स्यः ।।४२।।

**मधु-ब्रभ्रोर्ब्राह्मण-कौशिके ।६।१।४३।।**

आभ्यां यथासङ्ख्यं ब्राह्मणे कौशिके च वृद्धेऽपत्ये यञ् स्यात् । माधव्यो ब्राह्मणः , ब्राभ्रव्यः कौशिकः ।।४३।।

**कपि-बोधादाङ्गिरसे ।६।१।४४।।**

आभ्यामाङ्गिरसे वृद्धेऽपत्ये यञ् स्यात् । काप्यः , बौध्य आङ्गिरसः ।।४४।।

**वतण्डात् ।६।१।४५।।**

अस्मादाङ्गिरसे वृद्धे यञेव स्यात् । वातण्ड्य आङ्गिरसः ।।४५।।

## स्त्रियां लुप् ।६।१।४६॥

वतण्डादाङ्गिरसे वृद्धे स्त्रियां यञो लुप् स्यात् । वतण्डी आङ्गिरसी ॥४६॥

## कुञ्जादेर्ञायन्यः ।६।१।४७॥

कुञ्जादेः षष्ठ्यन्ताद् वृद्धे ञायन्यः स्यात् । कौञ्जायन्यः , ब्राध्नायन्यः ॥४७॥

## स्त्रीबहुष्वायनञ् ।६।१।४८॥

कुञ्जादेः षष्ठ्यन्ताद् बहुत्वविशिष्टे वृद्धे स्त्रियां चाऽबहुत्वेऽप्यायनञ् स्यात् । कौञ्जायनी , कौञ्जायनाः ॥४८॥

## अश्वादेः ।६।१।४९॥

अश्वादेर्वृद्धे आयनञ् स्यात् । आश्वायनः , शाङ्खायनः ॥४९॥

## शप-भरद्वाजादात्रेये ।६।१।५०॥

आभ्यामात्रेये वृद्धे आयनञ् स्यात् । शापायनः , भारद्वाजायन आत्रेयः ॥५०॥

## भर्गात् त्रैगर्त्ते ।६।१।५१॥

भर्गात् त्रैगर्त्ते वृद्धे आयनञ् स्यात् । भार्गायणस्त्रैगर्त्तः ॥५१॥

## आत्रेयाद् भारद्वाजे ।६।१।५२॥

अस्माद् भारद्वाजे यूनि आयनञ् स्यात् । आत्रेयायणो भारद्वाजः ॥५२॥

## नडादिभ्य आयनण् ।६।१।५३॥

एभ्यो वृद्धे आयनण् स्यात् । नाडायनः , चारायणः ॥५३॥

## यञिञः ।६।१।५४॥

वृद्धे यौ यञिञौ तदन्ताद् यूनि आयनण् स्यात् । गार्ग्यायणः , दाक्षायणः ॥५४॥

## हरितादेरञः ।६।१।५५॥

वृद्धे योऽञ् तदन्तात् हरितादेर्यूनि आयनण् स्यात् । हारितायनः , कैन्दासायनः ॥५५॥

## क्रोष्टृ-शलङ्कोर्लुक् च ।६।१।५६॥

आभ्यां वृद्धे आयनण् स्यात् , लुक् चान्तादेशः । क्रौष्टायनः , शालङ्कायनः ॥५६॥

**दर्भ-कृष्णा-ऽग्निशर्म-रण-शरद्वच्छुनकादाग्रायण-ब्राह्मण-वार्ष-गण्य-वाशिष्ठ-भार्गव-वात्स्ये ।६।१।५७।।**

एभ्यो यथासङ्ख्यमेषु वृद्धेष्वायनण् स्यात् । दार्भायण आग्रायणश्चेत्, कार्ष्णायनो ब्राह्मणः, आग्निशर्मायणो वार्षगण्यः, राणायनो वाशिष्ठः, शारद्वतायनो भार्गवः, शौनकायनो वात्स्यः ।।५७।।

**जीवन्त-पर्वताद् वा ।६।१।५८।।**

आभ्यां वृद्धे आयनण् वा स्यात् । जैवन्तायनः, जैवन्तिः ; पार्वतायनः, पार्वतिः ।।५८।।

**द्रोणाद् वा ।६।१।५९।।**

द्रोणादपत्यमात्रे आयनण् वा स्यात् । द्रौणायनः, द्रौणिः ।।५९।।

**शिवादेरण् ।६।१।६०।।**

शिवादेरपत्येऽण् स्यात् । शैवः, प्रौष्ठः ।।६०।।

**ऋषि-वृष्ण्यन्धक-कुरुभ्यः ।६।१।६१।**

ऋष्यादिवाचिभ्योऽपत्येऽण् स्यात् । वाशिष्ठः, वासुदेवः, श्वाफल्कः, नाकुलः ।।६१।

**कन्या-त्रिवेण्याः कनीन-त्रिवणं च ।६।१।६२।।**

आभ्यामपत्येऽण् स्याद्, यथासङ्ख्यं कनीन-त्रिवणौ चाऽऽदेशौ । कानीनः, त्रैवणः ।।६२।।

**शुङ्गाभ्यां भारद्वाजे ।६।१।६३।।**

शुङ्ग-शुङ्गाशब्दाभ्यां भारद्वाजेऽपत्येऽण् स्यात् । शौङ्गो भारद्वाजः ।।६३।।

**विकर्ण-च्छगलाद् वात्स्या-ऽऽत्रेये ।६।१।६४।।**

आभ्यां यथासङ्ख्यं वात्स्ये आत्रेये चापत्येऽण् स्यात् । वैकर्णो वात्स्यः, छागल आत्रेयः ।।६४।।

**णश्च विश्रवसो विश्लुक् च वा ।६।१।६५।।**

विश्रवसोऽपत्येऽण् स्यात्, तद्योगे च णः, णयोगे च विशो लुक् च वा । वैश्रवणः, रावणः ।।६५।।

**सङ्ख्या-सं-भद्रान्मातुर्मातुर्च ।६।१।६६॥**

सङ्ख्यार्थात् सम्भद्राभ्यां च परो यो माता , तदन्तादपत्येऽण् स्यात् , मातुश्च मातुर् । द्वैमातुरः , सांमातुरः , भाद्रमातुरः ॥६६॥

**अदोर्नदी-मानुषीनाम्नः ।६।१।६७॥**

अदुसंज्ञान्नदीनाम्नो मानुषीनाम्नश्चापत्येऽण् स्यात् । यामुनः प्रणेता , दैवदत्तः । अदोरिति किम् ? चान्द्रभागेयः ॥६७॥

**पीला-साल्वा-मण्डूकाद् वा ।६।१।६८॥**

एभ्योऽपत्येऽण् वा स्यात् । पैलः , पैलेयः ; साल्वः , साल्वेयः ; माण्डूकः , माण्डूकिः ॥६८॥

**दितेश्चैयण् वा ।६।१।६९॥**

दितेर्मण्डूकाच्चाऽपत्ये एयण् वा स्यात् । दैतेयः , दैत्यः ; माण्डूकेयः , माण्डूकिः ॥६९॥

**ङ्याप्-त्यूङः ।६।१।७०॥**

ङ्यन्ताद् आबन्तात् त्यन्ताद् ऊङन्ताच्चापत्ये एयण् स्यात् । सौपर्णेयः , वैनतेयः , यौवतेयः , कामण्डलेयः ॥७०॥

**द्विस्वरादनद्याः ।६।१।७१॥**

द्विस्वराद् ङ्याप्-त्यूङन्तादनद्यर्थादपत्ये एयण् स्यात् । दात्तेयः । अनद्या इति किम् ? सैप्रः ॥७१॥

**इतोऽनिञः ।६।१।७२॥**

इञ्वर्जेदन्ताद् द्विस्वरादपत्ये एयण् स्यात् । नाभेयः । अनिञ इति किम् ? दाक्षायणः । द्विस्वरादित्येव-मारिचः ॥७२॥

**शुभ्रादिभ्यः ।६।१।७३॥**

एभ्योऽपत्ये एयण् स्यात् । शौभ्रेयः , वैष्टपुरेयः ॥७३॥

**श्याम-लक्षणाद् वाशिष्ठे ।६।१।७४॥**

आभ्यां वाशिष्ठेऽपत्ये एयण् स्यात् । श्यामेयः , लाक्षणेयो वाशिष्ठः ॥७४॥

**विकर्ण-कुषीतकात् काश्यपे ।६।१।७५॥**

आभ्यां काश्यपेऽपत्ये एयण् स्यात् । वैकर्णेयः , कौषीतकेयः काश्यपः ।।७५।।

**भ्रुवो भ्रुव् च ।६।१।७६।।**

भ्रुवोऽपत्ये एयण् स्यात् , भ्रुवश्च भ्रुव् । भ्रौवेयः ।।७६।।

**कल्याण्यादेरिन् चाऽन्तस्य ।६।१।७७।।**

एभ्योऽपत्ये एयण् स्यात् , अन्तस्य चेन् । काल्याणिनेयः , सौभागिनेयः ।।७७।।

**कुलटाया वा ।६।१।७८।।**

अस्मादपत्ये एयण् स्यात् , तद्योगे चान्तस्येन् वा । कौलटिनेयः , कौलटेयः ।।७८।।

**चटकाण्णैरः , स्त्रियां तु लुप् ।६।१।७९।।**

अस्मादपत्ये णैरः स्यात् , स्त्र्यर्थस्य च णैरस्य लुप् । चाटकैरः , चटका: ।।७९।।

**क्षुद्राभ्य एरण् वा ।६।१।८०।।**

अङ्गहीना अनियतपुंस्का वा स्त्रियः क्षुद्राः , क्षुद्रार्थेभ्यः स्त्रीभ्य एरण् वा स्यात् । काणेरः , काणेयः ; दासेरः , दासेयः ।।८०।।

**गोधाया दुष्टे णारश्च ।६।१।८१।।**

गोधाया दुष्टेऽपत्ये णार एरण् च स्यात् । गौधारः , गौधेरो गोधायामहिजातः ।।८१।।

**जण्ट-पण्टात् ।६।१।८२।।**

आभ्यामपत्ये णारः स्यात् । जाण्टारः , पाण्टारः ।।८२।।

**चतुष्पाद्भ्य एयञ् ।६।१।८३।।**

चतुष्पाद्वाचिभ्योऽपत्ये एयञ् स्यात् । कामण्डलेयः ।।८३।।

**गृष्ट्यादेः ।६।१।८४।।**

एभ्योऽपत्ये एयञ् स्यात् । गार्ष्टेयः , हार्ष्टेयः ।।८४।।

**वाडवेयो वृषे ।६।१।८५।।**

वडवाया वृषेऽर्थे एयञ् एयण् वा निपात्यते । वाडवेयः ।।८५।।

**रेवत्यादेरिकण् ।६।१।८६।।**

एभ्योऽपत्ये इकण् स्यात् । रैवतिकः , आश्वपालिकः ।।८६।।

**वृद्धस्त्रियाः क्षेपे णश्च ।६।१।८७।।**

वृद्धप्रत्ययान्तात् स्त्रियामपत्ये णेकणौ स्यातां क्षेपे गम्ये । गार्ग्या अपत्यं युवा गार्गः , गार्गिको वा जाल्मः ।।८७।।

**भ्रातुर्व्यः ।६।१।८८।।**

भ्रातुरपत्ये व्यः स्यात् । भ्रातृव्यः ।।८८।।

**ईयः स्वसुश्च ।६।१।८९।।**

भ्रातुः स्वसुश्चापत्ये ईयः स्यात् । भ्रात्रीयः , स्वस्रीयः ।।८९।।

**मातृ-पित्रादेर्डेयणीयणौ ।६।१।९०।।**

मातृपितृशब्दावादी यस्य स्वस्रन्तस्य तस्मादपत्ये डेयणीयणौ स्याताम् । मातृष्वसेयः , मातृष्वस्रीयः ; पैतृष्वसेयः , पैतृष्वस्रीयः ।।९०।।

**श्वशुराद् यः ।६।१।९१।।**

अस्मादपत्ये यः स्यात् । श्वशुर्यः ।।९१।।

**जातौ राज्ञः ।६।१।९२।।**

राज्ञोऽपत्ये जातौ गम्यायां यः स्यात् । राजन्यः , क्षत्रियजातिश्चेत् ।।९२।।

**क्षत्रादियः ।६।१।९३।।**

क्षत्रादपत्ये जातावियः स्यात् । क्षत्रियः , जातिश्चेत् ।।९३।।

**मनोर्या-ऽणौ षश्चान्तः ।६।१।९४।।**

मनोरपत्ये या-ऽणौ स्यातां , तद्योगे षश्चान्तः जातौ गम्यायाम् । मनुष्याः , मानुषाः ।।९४।।

**माणवः कुत्सायाम् ।६।१।९५।।**

मनोरपत्येऽणि कुत्सायां नो ण् स्यात् । मनोरपत्यं मूढं माणवः ।।९५।।

**कुलादीनः ।६।१।९६।।**

कुलान्तात् केवलकुलाच्चाऽपत्ये ईनः स्यात् । बहुकुलीनः , कुलीनः ।।९६।।

**यैयकञावसमासे वा ।६।१।९७।।**

कुलान्तात् कुलाच्चापत्ये य एयकञ् वा स्यात् , न चेदसौ समासे । कुल्यः , कौलेयकः , कुलीनः ; बहुकुल्यः , बाहुकुलेयकः , बहुकुलीनः । असमास इति किम् ? आढ्यकुलीनः ॥९७॥

**दुष्कुलादेयण् वा ।६।१।९८॥**

अस्मादपत्ये एयण् वा स्यात् । दौष्कुलेयः , दुष्कुलीनः ॥९८॥

**महाकुलाद् वाऽञीनञौ ।६।१।९९॥**

अस्मादपत्येऽञ् ईनञ् च[1] वा स्यात् । माहाकुलः , माहाकुलीनः , महाकुलीनः ॥९९॥

**कुर्वादेर्ञ्यः ।६।१।१००॥**

एभ्योऽपत्ये ञ्यः स्यात् । कौरव्याः , शाङ्कव्याः ॥१००॥

**सम्राजः क्षत्रिये ।६।१।१०१॥**

अस्मात् क्षत्रियेऽपत्ये ञ्यः स्यात् । साम्राज्यः क्षत्रियः ॥१०१॥

**सेनान्त-कारु-लक्ष्मणादिञ् च ।६।१।१०२॥**

सेनान्तात् कार्वर्थाल्लक्ष्मणाच्चाऽपत्ये इञ् ञ्यश्च स्यात् । हारिषेणिः , हारिषेण्यः ; तान्तुवायिः , तान्तुवाय्यः ; लाक्ष्मणिः , लाक्ष्मण्यः ॥१०२॥

**सुयाम्नः सौवीरेष्वायनिञ् ।६।१।१०३॥**

सुयाम्नः सौवीरेषु योऽर्थस्तद्वृत्तेरपत्ये आयनिञ् स्यात् । सौयामायनिः ॥१०३॥

**पाण्टाहृति-मिमताण्णश्च ।६।१।१०४॥**

आभ्यां सौवीरेषु योऽर्थस्तद्वृत्तिभ्यामपत्ये ण आयनिञ् च स्यात् । पाण्टाहृतः , पाण्टाहृतायनिर्वा सौवीरगोत्रः । एवं मैमतः , मैमतायनिर्वा ॥१०४॥

**भागवित्ति-तार्णविन्दवा-ऽऽकशापेयान्निन्दायामिकण् वा ।६।१।१०५॥**

एभ्यः सौवीरेषु यो वृद्धस्तद्वृत्तिभ्यो यूनि इकण् वा स्यात् , निन्दायां गम्यायाम् । भागवित्तिकः , भागवित्तायनो वा जाल्मः ; तार्णविन्दविकः , तार्णविन्दविर्वा ; आकशापेयिकः , आकशापेयिर्वा ॥१०५॥

**सौयामायनि-यामुन्दायनि-वार्ष्यायणेरीयश्च वा ।६।१।१०६॥**

१. च J2 P3 मध्ये एवास्ति ॥

एभ्यः सौवीरवृद्धवृत्तिभ्यो यूनि ईयेकणौ वा स्यातां निन्दायाम् । सौयामायनीयः ; सौयामायनिकः , सौयामायनिर्वा निन्द्यो युवा ; एवं यामुन्दायनीयः , यामुन्दायनिकः , यामुन्दायनिर्वा ; वार्ष्यायणीयः , वार्ष्यायणिकः , वार्ष्यायणिर्वा ॥१०६॥

**तिकादेरायनिञ् ।६।१।१०७॥**

एभ्योऽपत्ये आयनिञ् स्यात् । तैकायनिः , कैतवायनिः ॥१०७॥

**दगु-कोशल-कर्मार-च्छाग-वृषाद् यादिः ।६।१।१०८॥**

एभ्योऽपत्ये यादिरायनिञ् स्यात् । दागव्यायनिः , कौशल्यायनिः , कार्मार्य्यायणिः , छाग्यायनिः , वार्ष्यायणिः ॥१०८॥

**द्विस्वरादणः ।६।१।१०९॥**

द्विस्वरादणन्तादपत्ये आयनिञ् स्यात् । कार्त्तायणिः ॥१०९॥

**अवृद्धाद् दोर्नवा ।६।१।११०॥**

अवृद्धार्थाद् दोरपत्ये आयनिञ् वा स्यात् । आम्रगुप्तायनिः , आम्रगुप्तिः ॥११०॥

**पुत्रान्तात् ।६।१।१११॥**

पुत्रान्ताद् दोरपत्ये वा आयनिञ् स्यात् । गार्गीपुत्रायणिः , गार्गीपुत्रिः ॥१११॥

**चर्मि-वर्मि-गारेट-कार्कटय-काक-लङ्का-वाकिनाच्च कश्चान्तोऽन्त्य स्वरात् ।६।१।११२॥**

एभ्यः पुत्रान्ताच्च दोरपत्ये आयनिञ् वा स्यात् , तद्योगे कश्चान्तोऽन्त्यस्वरात् । चार्मिकायणिः , चार्मिणः ; वार्मिकायणिः , वार्मिणः ; गारेटकायनिः , गारेटिः ; कार्कटयकायनिः , कार्कटयायनः ; काककायनिः , काकिः ; लाङ्काकायनिः , लाङ्केयः ; वाकिनकायनिः , वाकिनिः ; गार्गीपुत्रकायणिः , गार्गीपुत्रिः ॥११२॥

**अदोरायनिः प्रायः ।६।१।११३॥**

अदोरपत्ये आयनिर्वा प्रायः स्यात् । ग्लुचुकायनिः , ग्लौचुकिः । प्रायः किम् ? दाक्षिः ॥११३॥

**राष्ट्र-क्षत्रियात् सरूपाद् राजा-ऽपत्ये द्रिरञ् ।६।१।११४॥**

राष्ट्र-क्षत्रियार्थाभ्यां सरूपाभ्यां यथासङ्ख्यं राजा-ऽपत्ययोरञ् स्यात् , स च द्रिः । विदेहा राजानः , अपत्यानि वा । सरूपादिति किम् ? सौराष्ट्रको राजा ॥११४॥

**गान्धारि-साल्वेयाभ्याम् ।६।१।११५॥**

आभ्यां राष्ट्र-क्षत्रियार्थाभ्यां सरूपाभ्यां यथासङ्ख्यं राज्ञ्यपत्ये च द्रिरञ् स्यात् । गान्धारयः , साल्वेया राजानोऽपत्यानि वा ॥११५॥

**पुरु-मगध-कलिङ्ग-सूरमस-द्विस्वरादण् ।६।१।११६॥**

एभ्यो द्विस्वरेभ्यश्च राष्ट्र-क्षत्रियार्थेभ्यः सरूपेभ्यो यथासङ्ख्यं राज्ञ्यपत्ये च द्रिरण् स्यात् । पुरोरपत्यं पौरवः , मागधो राजाऽपत्यं वा , एवं कालिङ्गः , सौरमसः , आङ्गः ॥११६॥

**साल्वांश-प्रत्यग्रथ-कलकूटाऽश्मकादिञ् ।६।१।११७॥**

साल्वा जनपदः , तदंशेभ्यः प्रत्यग्रथादेश्च सरूपराष्ट्र-क्षत्रियार्थेभ्यो यथासंख्यं राज्ञ्यपत्ये च द्रिरिञ् स्यात् । औदुम्बरिः राजाऽपत्यं वा , एवं प्रात्यग्रथिः , कालकूटिः , आश्मकिः ॥११७॥

**दु-नादि-कुर्वित्-कोशला-ऽजादाञ्ञ्यः ।६।१।११८॥**

दुभ्यो नादेः कुरोरिदन्तेभ्यः कोशला-ऽजादाभ्यां च सरूपराष्ट्र-क्षत्रियेभ्यो यथासंख्यं राज्ञ्यपत्ये च द्रिञ्यः स्यात् । आम्बष्ठ्यो राजाऽपत्यं वा , एवं नैषध्यः , कौरव्यः , आवन्त्यः , कौशल्यः , आजाद्यः ॥११८॥

**पाण्डोर्ड्यण् ।६।१।११९॥**

पाण्डो राष्ट्र-क्षत्रियार्थात् सरूपाद् यथासंख्यं राज्ञ्यपत्ये च द्रिर्ड्यण् स्यात् । पाण्ड्यो राजाऽपत्यं वा ॥११९॥

**शकादिभ्यो द्रेर्लुप् ।६।१।१२०॥**

एभ्यः परस्य द्रिसंज्ञस्य लुप् स्यात् । शको राजाऽपत्यं वा , एवं यवनः ॥१२०॥

**कुन्त्यवन्तेः स्त्रियाम् ।६।१।१२१॥**

आभ्यां परस्य द्रेर्ञ्यस्य लुप् स्यात् , स्त्रियामर्थे । कुन्ती अपत्यम् , एवम् अवन्ती । स्त्रियामिति किम् ? कौन्त्यः ॥१२१॥

## कुरोर्वा ।६।१।१२२॥

कुरोर्द्रेर्ञ्यस्य स्त्रियां लुप् वा स्यात् । कुरूः अपत्यम् , कौरव्यायणी ॥१२२॥

## द्रेरञणोऽप्राच्य-भर्गादेः ।६।१।१२३॥

प्राच्यान् भर्गादींश्च मुक्त्वाऽन्यस्मादञोऽणश्च द्रेः स्त्रियां लुप् स्यात् । शूरसेनी अपत्यम् , एवं मद्री । प्राच्यादिवर्जनं किम् ? पाञ्चाली , भार्गी ॥१२३॥

## बहुष्वस्त्रियाम् ।६।१।१२४॥

द्र्यन्तस्य बह्वर्थस्य यो द्रिस्तस्याऽस्त्रियां लुप् स्यात् । पञ्चाला राजानोऽपत्यानि वा । अस्त्रियामिति किम् ? पाञ्चाल्यः ॥१२४॥

## यस्कादेर्गोत्रे ।६।१।१२५॥

एभ्यो यः प्रत्ययस्तदन्तस्य बहुगोत्रार्थस्य यस्कादेर्यः स प्रत्ययस्तस्याऽस्त्रियां लुप् स्यात् । यस्काः , लह्याः । गोत्र इति किम् ? यास्काः छात्राः ॥१२५॥

## यञञोऽश्यापर्णान्त-गोपवनादेः ।६।१।१२६॥

यञञन्तस्य बहुगोत्रार्थस्य यः स प्रत्ययस्तस्याऽस्त्रियां लुप् स्यात् , न तु श्यापर्णान्तेभ्यो गोपवनादिभ्यः । गर्गाः , विदाः । अश्यापर्णेत्यादि किम् ? गौपवनाः ॥१२६॥

## कौण्डिन्या-ऽऽगस्त्ययोः कुण्डिना-ऽगस्ती च ।६।१।१२७॥

अनयोर्बहुगोत्रार्थयोर्यञोऽणश्चाऽस्त्रियां लुप् स्यात् , कुण्डिन्यगस्त्ययोः[1] कुण्डिना-ऽगस्ती चाऽऽदेशौ । कुण्डिनाः , अगस्तयः ॥१२७॥

## भृग्वङ्गिरस्-कुत्स-वशिष्ठ-गोतमा-ऽत्रेः ।६।१।१२८॥

एभ्यो यः प्रत्ययस्तदन्तस्य बहुगोत्रार्थस्य यः स प्रत्ययस्तस्याऽस्त्रियां लुप् स्यात् । भृगवः , अङ्गिरसः , कुत्साः , वशिष्ठाः , गोतमाः , अत्रयः ॥१२८॥

## प्राग्भरते बहुस्वरादिञः ।६।१।१२९॥

बहुस्वराद् य इञ् तदन्तस्य बहुप्राग्गोत्र-भरतगोत्रार्थस्य यः स प्रत्ययः तस्याऽस्त्रियां लुप् स्यात् । क्षीरकलम्भाः , उद्दालकाः । प्राग्भरत इति किम् ? बालाकयः । बहुस्वरादिति किम् ? चैङ्कयः ॥१२९॥

---

१. कुण्डिन्यागस्त्ययोः J1,3, पासं२ ॥

## वोपकादेः ।६।१।१३०॥

एभ्यो यः प्रत्ययस्तदन्तस्य बहुगोत्रार्थस्य यः स प्रत्ययः तस्याऽस्त्रियां लुप् वा स्यात् । उपकाः , औपकायनाः ; लमकाः , लामकायनाः ॥१३०॥

## तिककितवादौ द्वन्द्वे ।६।१।१३१॥

एषु द्वन्द्वेषु बहुगोत्रार्थेषु यः स प्रत्ययस्तस्याऽस्त्रियां लुप् स्यात् । तिककितवाः , उङ्भककुभाः ॥१३१॥

## द्व्यादेस्तथा ।६।१।१३२॥

द्व्यादिप्रत्ययान्तानां द्वन्द्वे बह्वर्थे यः स द्व्यादिः तस्य लुप् स्यात् , **तथा** यथा पूर्वम् । वृक-लोहध्वज-कुण्डीवृसाः[१] । तथेति किम् ? गार्गी-वत्स-वाजाः । तत्राऽस्त्रियामित्युक्ते गार्गीत्यत्र न स्यात् ॥१३२॥

## वाऽन्येन ।६।१।१३३॥

द्व्यादेरन्येन सह द्व्यादीनां द्वन्द्वेबह्वर्थे यः स द्व्यादिस्तस्य तथा वा लुप् स्यात् , यथा पूर्वम् । अङ्ग-वङ्ग-दाक्षयः , आङ्ग-वाङ्ग-दाक्षयः ॥१३३॥

## द्व्येकेषु षष्ठ्यास्तत्पुरुषे यञादेर्वा ।६।१।१३४॥

षष्ठीतत्पुरुषे यत् पदं षष्ठ्या विषये द्वयोरेकस्मिंश्च स्यात् तस्य यः स यञादिः तस्य तथा वा लुप् स्यात् । गर्गकुलम् , गार्ग्यकुलम् ; विदकुलम् , वैदकुलम् द्व्येकेष्विति किम् ? गर्गाणां कुलं गर्गकुलम् ॥१३४॥

## न प्राग्जितीये स्वरे ।६।१।१३५॥

*यस्कादेर्गोत्रे [६।१।१२५]* इत्यादिना या लुबुक्ता सा प्राग्जितीयेऽर्थे यः स्वरादिस्तद्धितः तद्विषये न स्यात् । गार्गीयाः , आत्रेयीयाः । प्राग्जितीय इति किम् ? अत्रीयः । स्वर इति किम् ? गर्गमयम् ॥१३५॥

## गर्ग-भार्गविका ।६।१।१३६॥

इयं द्वन्द्वात् प्राग्जितीये विवाहे योऽकल् तस्मिन्नणो लुबभावे स्यात् । गर्गभार्गविका ॥१३६॥

## यूनि लुप् ।६।१।१३७॥

यून्युत्पन्नस्य प्रत्ययस्य प्राग्जितीयेऽर्थे स्वरादौ प्रत्यये विषयभूते लुप् स्यात् , लुपि सत्यां यः प्राप्नोति स स्यात् । पण्टाहृतस्यापत्यं पाण्टाहृतिः , तस्यापत्यं

१. वृशाः इति J बृहद्वृत्तौ । K बृहद्वृत्तौ विशः ॥

युवा पाण्टाहृतः , तस्य च्छात्रा इति प्रागृजितीये स्वरादौ चिकीर्षिते णस्य लुप् , ततो *वृद्धेऽञः [६/३/२८]* इत्यञ् पाण्टाहृताः ॥१३७॥

**वायनणायनिञोः ।६।१।१३८॥**

अनयोर्युवार्थयोः प्राग्जितीये स्वरादौ विषये लुब् वा स्यात् । गार्गीयाः , गार्ग्यायणीया वा ; हौत्रीयाः , हौत्रायणीया वा ॥१३८॥

**द्रीञो वा ।६।१।१३९॥**

द्रीञन्तात् परस्य युवार्थस्य लुब् वा स्यात् । औदुम्बरिः , औदुम्बरायणो वा ॥१३९॥

**ञिदार्षादणिञोः ।६।१।१४०॥**

ञिद् आर्षश्च योऽपत्यप्रत्ययस्तदन्तात् परस्य यूनि अण इञश्च लुप् स्यात् । तैकायनिः पिता , तैकायनिः पुत्रः , वाशिष्ठः पिता , वाशिष्ठः पुत्रः ॥१४०॥

**अब्राह्मणात् ।६।१।१४१॥**

अब्राह्मणाद् वृद्धप्रत्ययान्ताद् युवार्थस्य लुप् स्यात् । आङ्गः पिता , आङ्गः पुत्रः । अब्राह्मणादिति किम् ? गार्ग्यः पिता , गार्ग्यायणः पुत्रः ॥१४१॥

**पैलाऽऽदेः ।६।१।१४२॥**

एभ्यो यूनि प्रत्ययस्य लुप् स्यात् । पैलः पिता , पैलः पुत्रः ; शालङ्किः पिता , शालङ्किः पुत्रः ॥१४२॥

**प्राच्येञोऽतौल्वल्यादेः ।६।१।१४३॥**

प्राच्यगोत्रे इञन्तात् तौल्वल्यादिवर्जाद् यूनि प्रत्ययस्य लुप् स्यात् । पान्नागारिः पिता , पान्नागारिः पुत्रः ; मान्थरेषणिः पिताः । मान्थरेषणिः पुत्रः । प्राच्य इति किम् ? दाक्षिः पिता , दाक्षायणः पुत्रः । तौल्वल्यादिवर्जनं किम् ? तौल्वलिः पिता , तौल्वलायनः पुत्रः ॥१४३॥

इति[आचार्यश्री**हेमचन्द्र**विरचितायां **सिद्धहेमचन्द्रा**भिधानस्वोपज्ञशब्दानुशासनलघुवृत्तौ] षष्ठस्याध्यायस्य प्रथमः पादः समाप्तः[1] ॥६।१॥

**श्रीविक्रमादित्य**नरेश्वरस्य , त्वया न किं विप्रकृतं नरेन्द्र ! ।
यशांस्यहार्षीः प्रथमं समन्तात् , क्षणादभाङ्क्षीरथ राजधानीम् ॥२१।

१. **समाप्तः** J2 P3 ॥

## [ द्वितीयः पादः ]

### रागाट्टो रक्ते ।६।२।१॥

रज्यते येन कुसुम्भादिना तदर्थात् तृतीयान्ताद् रक्तमित्यर्थे यथाविहितं प्रत्ययः स्यात् । कौसुम्भं वासः ॥१॥

### लाक्षा-रोचनादिकण् ।६।२।२॥

आभ्यां टान्ताभ्यां रक्तमित्यर्थे इकण् स्यात् । लाक्षिकम् , रौचनिकम् ॥२॥

### शकल-कर्दमाद् वा ।६।२।३॥

आभ्यां टान्ताभ्यां रक्तमित्यर्थे इकण् वा स्यात् । शाकलिकम् , शाकलम् ; कार्दमिकम् , कार्दमम् ॥३॥

### नील-पीतादकम् ।६।२।४॥

आभ्यां टान्ताभ्यां रक्तमित्यर्थे यथासङ्ख्यम् अ-कौ स्याताम् । नीलम् , पीतकम् ॥४॥

### उदितगुरोर्भाद् युक्तेऽब्दे ।६।२।५॥

उदितो बृहस्पतिर्यत्र नक्षत्रे तदर्थाट्टान्ताद् युक्तेऽब्दे यथाविहितं प्रत्ययः स्यात् । पौषं वर्षम् ॥५॥

### चन्द्रयुक्तात् काले , लुप् त्वप्रयुक्ते ।६।२।६॥

चन्द्रेण युक्तं यन्नक्षत्रं तदर्थाट्टान्ताद् युक्ते कालेऽर्थे यथाविहितं प्रत्ययः स्यात् , अप्रयुक्ते तु कालार्थे लुप् स्यात् । पौषमहः , अद्य पुष्यः ॥६॥

### द्वन्द्वादीयः ।६।२।७॥

चन्द्रयुक्तं यन्नक्षत्रं तदर्थाद् द्वन्द्वाट्टान्ताद् युक्ते कालेऽर्थे ईयः स्यात् । राधानुराधीयमहः ॥७॥

### श्रवणा-ऽश्वत्थान्नाम्न्यः ।६।२।८॥

चन्द्रयुक्तार्थात् श्रवणा-ऽश्वत्थाच्च टान्ताद् युक्ते कालेऽर्थे संज्ञायाम् अः स्यात् । श्रवणा रात्रिः , अश्वत्था पौर्णमासी । नाम्नीति किम् ? श्रावणमहः । आश्वत्थमहः[१] ॥८॥

१. आश्वत्थमहः P3सं० मध्य एव विद्यते ॥

**षष्ठ्याः समूहे ।६।२।९।।**

षष्ठ्यन्तात् समूहेऽर्थे यथाविहितं प्रत्ययाः स्युः । चाषम् , स्त्रैणम् ।।९।।

**भिक्षाऽऽदेः ।६।२।१०।।**

एभ्यः षष्ठ्यन्तेभ्यः समूहे यथाविहितं प्रत्ययः स्यात् । भैक्षम् , गार्भिणम् ।।१०।।

**क्षुद्रकमालवात् सेनानाम्नि ।६।२।११।।**

अस्मात् षष्ठ्यन्तात् समूहेऽण् स्यात् , सेनासंज्ञायाम् । क्षौद्रकमालवी सेना ।।११।।

**गोत्रोक्ष-वत्सोष्ट्र-वृद्धा-ऽजोरभ्र-मनुष्य-राज-राजन्य-राजपुत्रादकञ् ।६।२।१२।।**

गोत्रप्रत्ययान्तादुक्षादेश्च समूहेऽकञ् स्यात् । गार्गकम् , औक्षकम् , वात्सकम् , औष्ट्रकम् , वार्द्धकम् , आजकम् , औरभ्रकम् , मानुष्यकम् , राजकम् , राजन्यकम् , राजपुत्रकम् ।।१२।।

**केदाराण्ण्यश्च ।६।२।१३।।**

केदारात् समूहे ण्योऽकञ् च स्यात् । कैदार्यम् , कैदारकम् ।।१३।।

**कवचि-हस्त्यचित्ताच्चेकण् ।६।२।१४।।**

कवचि-हस्तिभ्यामचित्तार्थात् केदाराच्च समूहे इकण् स्यात् । कावचिकम् , हास्तिकम् , आपूपिकम् , कैदारिकम् ।।१४।।

**धेनोरनञः ।६।२।१५।।**

धेनोरनञ्पूर्वात् समूहे इकण् स्यात् । धैनुकम् । अनञ इति किम् ? आधैनवम् ।।१५।।

**ब्राह्मण-माणव-वाडवाद् यः ।६।२।१६।।**

एभ्यः समूहे यः स्यात् । ब्राह्मण्यम् , माणव्यम् , वाडव्यम् ।।१६।।

**गणिकाया ण्यः ।६।२।१७।।**

अस्मात् समूहे ण्यः स्यात् । गाणिक्यम् ।।१७।।

**केशाद् वा ।६।२।१८।।**

केशात् समूहे ण्यो वा स्यात् । कैश्यम् , कैशिकम् ।।१८।।

**वाऽश्वादीयः ।६।२।१९।।**

अश्वात् समूहे ईयो वा स्यात् । अश्वीयम् , आश्वम् ।।१९।।

**पर्श्वा ड्वण् ।६।२।२०।।**

पर्श्वाः समूहे ड्वण् स्यात् । पार्श्वम् ।।२०।।

**ईनोऽह्नः क्रतौ ।६।२।२१।।**

अह्नः समूहे क्रतावीनः स्यात् । अहीनः क्रतुः , आह्नमन्यत् ।।२१।।

**पृष्ठाद् यः ।६।२।२२।।**

पृष्ठात् समूहे क्रतौ यः स्यात् । पृष्ठ्यः क्रतुः ।।२२।।

**चरणाद् धर्मवत् ।६।२।२३।।**

कठादेर्धर्मे इव समूहे प्रत्ययाः स्युः । यथा कठानां धर्मः काठकं तथा समूहेऽपि ।।२३।।

**गो-रथ-वातात् त्रल्-कटयलूलम् ।६।२।२४।।**

एभ्यः समूहे यथासङ्ख्यमेते स्युः । गोत्रा , रथकट्या , वातूलः ।।२४।।

**पाशादेश्च ल्यः ।६।२।२५।।**

अस्माद् गवादेश्च समूहे ल्यः स्यात् । पाश्या , तृण्या , गव्या , रथ्या , वात्या ।।२५।।

**श्वादिभ्योऽञ् ।६।२।२६।।**

एभ्यः समूहेऽञ् स्यात् । शौवम् , आह्नम् ।२६।।

**खलादिभ्यो लिन् ।६।२।२७।।**

एभ्यः समूहे लिन् स्यात् । खलिनी , ऊकिनी ।।२७।।

**ग्राम-जन-बन्धु-गज-सहायात् तल् ।६।२।२८।।**

एभ्यः समूहे तल् स्यात् । ग्रामता , जनता , बन्धुता , गजता , सहायता ।।२८।।

## पुरुषात् कृत-हित-वध-विकारे चैयञ् ।६।२।२९।।

एषु समूहे च पुरुषादेयञ् स्यात् । पौरुषेयो ग्रन्थः , पौरुषेयं पथ्यम् , पौरुषेयो वधो विकारो वा , पौरुषेयः समूहः ।।२९।।

## विकारे ।६।२।३०।।

षष्ठ्यन्ताद् विकारे यथाविहितं प्रत्ययाः स्युः । आश्मनः , आश्मः ।।३०।।

## प्राण्यौषधि-वृक्षेभ्योऽवयवे च ।६।२।३१।।

एभ्यः षष्ठ्यन्तेभ्यो विकारेऽवयवे च यथाविहितं प्रत्ययाः स्युः । कापोतं सक्थि मांसं वा , दौर्वं काण्डं भस्म वा , एवं बैल्वम् ।।३१।।

## तालाद् धनुषि ।६।२।३२।।

तालाद् धनुषि विकारेऽण् स्यात् । तालं धनुः । धनुषीति किम् ? तालमयं काण्डम् ।।३२।।

## त्रपु-जतोः षोन्तश्च ।६।२।३३।।

आभ्यां विकारेऽण् स्यात् , षान्तः । त्रापुषम् , जातुषम् ।।३३।।

## शम्या लः ।६।२।३४।।

शम्या विकारेऽवयवे चाऽण् स्यात् , तद्योगे लान्तः । शामीलं भस्म , शामीली शाखा ।।३४।।

## पयो-द्रोर्यः ।६।२।३५।।

आभ्यां विकारे यः स्यात् । पयस्यम् , द्रव्यम् ।।३५।।

## उष्ट्रादकञ् ।६।२।३६।।

उष्ट्राद् विकारेऽवयवे चाऽकञ् स्यात् । औष्ट्रकं मांसमङ्गं वा ।।३६।।

## उमोर्णाद् वा ।६।२।३७।।

आभ्यां विकारेऽवयवे चाऽकञ् वा स्यात् । औमकम् , औमम् । और्णकम् , और्णः कम्बलः ।।३७।।

## एण्या एयञ् ।६।२।३८।।

एण्या विकारेऽवयवे चैयञ् स्यात् । ऐणेयं मांसमङ्गं वा ।।३८।।

## कौशेयम् ।६।२।३९।।

कोशाद् विकारे एयञ् स्यात् । कौशेयं वस्त्रं सूत्रं वा ॥३९॥

**परशव्याद् यलुक् च ।६।२।४०॥**

अस्माद् विकारेऽण् स्यात् , यस्य लुक् च । पारशवम् ॥४०॥

**कंसीयाञ्ञ्यः ।६।२।४१॥**

अस्माद् विकारे ञ्यः स्यात् , तद्योगे यलुक् च । कांस्यम् ॥४१॥

**हेमार्थान्माने ।६।२।४२॥**

अस्मान्माने विकारेऽण् स्यात् । हाटको निष्कः । मान इति किम् ? हाटकमयी यष्टिः ॥४२॥

**द्रोर्वयः ।६।२।४३॥**

द्रोर्माने विकारे वयः स्यात् । द्रुवयं मानम् ॥४३॥

**मानात् क्रीतवत् ।६।२।४४॥**

मानं सङ्ख्यादि , तदर्थाद् विकारे क्रीते इव प्रत्ययाः स्युः । यथा शतेन क्रीतः शत्यः शतिको वा तथा तद्विकारेऽपि ॥४४॥

**हेमादिभ्योऽञ् ।६।२।४५॥**

एभ्यो यथायोगं विकारेऽवयवे चाऽञ् स्यात् । हैमी यष्टिः , राजतः ॥४५॥

**अभक्ष्या-ऽऽच्छादने वा मयट् ।६।२।४६॥**

षष्ठ्यन्ताद् भक्ष्याऽऽच्छादनवर्जे यथायोगं विकारेऽवयवे च मयड् वा स्यात् । भस्ममयम् , भास्मनम् । अभक्ष्या-ऽऽच्छादन इति किम् ? मौद्गः सूपः , कार्पासः पटः ॥४६॥

**शर-दर्भ-कूदी-तृण-सोम-वल्वजात् ।६।२।४७॥**

एभ्योऽभक्ष्या-ऽऽच्छादने विकारेऽवयवे च नित्यं मयट् स्यात् । शरमयम् , दर्भमयम् , कूदीमयम् , तृणमयम् , सोममयम् , वल्वजमयम् ॥४७॥

**एकस्वरात् ।६।२।४८॥**

अस्माद् भक्ष्या-ऽऽच्छादनवर्जे विकारेऽवयवे च नित्यं मयट् स्यात् । वाङ्मयम् ॥४८॥

**दोरप्राणिनः ।६।२।४९॥**

अप्राण्यर्थाद् दोरभक्ष्या-ऽऽच्छादने विकारेऽवयवे च मयट् स्यात् । आम्रमयम् । अप्राणिन इति किम् ? चाषम् , चाषमयम् ।।४९।।

**गोः पुरीषे ।६।२।५०।।**

गोः पुरीषेऽर्थे मयट् स्यात् । गोमयम् , पयस्तु गव्यम् ।।५०।।

**व्रीहेः पुरोडाशे ।६।२।५१।।**

व्रीहेः पुरोडाशे विकारे नित्यं मयट् स्यात् । व्रीहिमयः पुरोडाशः । पुरोडाश इति किम् ? व्रैह ओदनः , व्रैहं भस्म ।।५१।।

**तिल-यवादनाम्नि ।६।२।५२।।**

आभ्यां विकारेऽवयवे चाऽनाम्नि मयट् स्यात् । तिलमयम् , यवमयम् । अनाम्नीति किम् ? तैलम् , यावः ।।५२।।

**पिष्टात् ।६।२।५३।।**

पिष्टाद् विकारेऽवयवे[1] चानाम्नि मयट् स्यात् । पिष्टमयम् ।।५३।।

**नाम्नि कः ।६।२।५४।।**

पिष्टाद् विकारे नाम्नि कः स्यात् । पिष्टिका ।।५४।।

**ह्योगोदोहादीनञ् हियङ्गुश्चास्य ।६।२।५५।।**

अस्माद् विकारे नाम्नि ईनञ् स्यात् , तद्योगे च प्रकृतेर्हियङ्गुः । हैयङ्गवीनं नवनीतं घृतं वा । नाम्नीत्येव-ह्यौगोदोहं तक्रम् ।।५५।।

**अपो यञ् वा ।६।२।५६।।**

अपो विकारे यञ् वा स्यात् । आप्यम् , अम्मयम् ।।५६।।

**लुब् बहुलं पुष्प-मूले ।६।२।५७।।**

विकारा-ऽवयवार्थस्य पुष्पे मूले चार्थे प्रत्ययस्य बहुलं लुप् स्यात् । मल्लिका पुष्पम् , विदारी मूलम् । बहुलमिति किम् ? वारणं पुष्पम् , ऐरण्डं मूलम् ।।५७।।

**फले ।६।२।५८।।**

विकारेऽवयवे वा फलेऽर्थे प्रत्ययस्य लुप् स्यात् । आमलकम् ।।५८।।

**प्लक्षादेरण् ।६।२।५९।।**

---

१. ऽवयवे चा॰ इति पाठः P3सं॰ J3 मध्ये बृहद्वृत्तौ च नास्ति ।।

एभ्यो विकारेऽवयवे वा फलेऽण् स्यात् । प्लाक्षम् , आश्वत्थम् ॥५९॥

**जम्ब्वा वा ।६।२।६०॥**

जम्ब्वा विकारेऽवयवे वा फलेऽण् वा स्यात् । जाम्बवम् , जम्बु , जम्बूः ॥६०॥

**न द्विरद्रुवय-गोमय-फलात् ।६।२।६१॥**

द्रुवय-गोमयौ फलार्थं च मुक्त्वाऽन्यस्माद् विकारावयवयोर्द्विः प्रत्ययो न स्यात् । कापोतस्य विकारोऽवयवो वेति मयट् न स्यात् । अद्रुवेत्यादि[1] किम् ? द्रौवयं खण्डम् , गौमयं भस्म , कापित्थो रसः ॥६१॥

**पितृ-मातुर्व्य-डुलं भ्रातरि ।६।२।६२॥**

आभ्यां भ्रातर्यर्थे यथासङ्ख्यं व्य-डुलौ स्याताम् । पितृव्यः , मातुलः ॥६२॥

**पित्रोर्डामहट् ।६।२।६३॥**

पितृ-मातृभ्यां माता-पित्रोर्डामहट् स्यात् । पितामहः , पितामही ; मातामहः , मातामही ॥६३॥

**अवेर्दुग्धे सोढ-दूस-मरीसम् ।६।२।६४॥**

अवेर्दुग्धेऽर्थे एते स्युः । अविसोढम् , अविदूसम् , अविमरीसम् ॥६४॥

**राष्ट्रेऽनङ्गादिभ्यः ।६।२।६५॥**

अङ्गादिवर्जात् षष्ठ्यन्ताद् राष्ट्रेऽर्थेऽण् स्यात् । शैवम् । अङ्गादिवर्जनं किम् ? अङ्गानां वङ्गानां वा राष्ट्रमिति वाक्यमेव ॥६५॥

**राजन्यादिभ्योऽकञ् ।६।२।६६॥**

एभ्यो राष्ट्रेऽकञ् स्यात् । राजन्यकम् , दैवयातवकम् ॥६६॥

**वसातेर्वा ।६।२।६७॥**

अस्माद् राष्ट्रेऽकञ् वा स्यात् । वासातकम् , वासातं राष्ट्रम् ॥६७॥

**भौरिक्यैषुकार्यादेर्विध-भक्तम् ।६।२।६८॥**

भौरिक्यादे राष्ट्रे विधः ऐषुकार्यादेश्च भक्तः स्यात् । भौरिकिविधम् , भौलिकिविधम् ; ऐषुकारिभक्तम् , सारस्यायनभक्तम् ॥६८॥

---

१. अद्रुवेत्यादिति किम् इति सर्वत्र पाठः । अद्रुवयेत्यादीति किम् P3सं० ॥

## निवासा-ऽदूरभव इति देशे नाम्नि ।६।२।६९।।

षष्ठ्यन्तान्निवासा-ऽदूरभवयोर्यथाविहितं प्रत्ययः स्यात् , तदन्तं चेद् रूढं देशनाम । शैवम् , वैदिशं पुरम् ।।६९।।

## तदत्राऽस्ति ।६।२।७०।।

**तदि**ति प्रथमान्ताद् , **अत्रे**ति सप्तम्यर्थे यथाविहितं प्रत्ययः स्यात् , प्रथमान्तं चेदस्तीति प्रत्ययान्तं चेद् देशनाम । औदुम्बरं पुरम् ।।७०।।

## तेन निर्वृत्ते च ।६।२।७१।।

**तेने**ति तृतीयान्तात् निर्वृत्तेऽर्थे यथाविहितं प्रत्ययः स्यात् , देशनाम्नि । कौशाम्बी ।।७१।।

## नद्यां मतुः ।६।२।७२।।

निवासाद्यर्थचतुष्के यथायोगं मतुः स्यात् , नद्यां देशनाम्नि । उदुम्बरावती ।।७२।।

## मध्वादेः ।६।२।७३।।

एभ्यश्चातुरर्थिको देशनाम्नि मतुः स्यात् । मधुमान् , विसवान् ।।७३।।

## नड-कुमुद-वेतस-महिषाड्डित् ।६।२।७४।।

एभ्यो डित् मतुश्चातुरर्थिको देशनाम्नि स्यात् । नड्वान् , कुमुद्वान् , वेतस्वान् , महिष्मान् ।।७४।।

## नड-शादाद् वलः ।६।२।७५।।

आभ्यां चातुरर्थिको डिद् वलो देशनाम्नि स्यात् । नड्वलम् , शाद्वलम् ।।७५।।

## शिखायाः ।६।२।७६।।

अस्मात् चातुरर्थिको देशनाम्नि वलः स्यात् । शिखावलं पुरम् ।।७६।।

## शिरीषादिक-कणौ ।६।२।७७।।

अस्मात् देशनाम्नि चातुरर्थिकाविक-कणौ स्याताम् । शिरीषिकः , शैरीषकः ।।७७।।

## शर्कराया इकणीया-ऽण् च ।६।२।७८।।

अस्माच्चातुरर्थिका देशनाम्नि[१] एते इक-कणौ च स्युः । शार्करिकः , शर्करीयः , शार्करः , शर्करिकः , शार्करकः ॥७८॥

**रोऽश्मादेः ।६।२।७९॥**

चातुरर्थिको देशनाम्नि[२] स्यात् । अश्मरः , यूषरः ॥७९॥

**प्रेक्षादेरिन् ।६।२।८०॥**

चातुरर्थिको देशनाम्नि स्यात् । प्रेक्षी , फलकी ॥८०॥

**तृणादेः सल् ।६।२।८१॥**

चातुरर्थिको देशनाम्नि स्यात् । तृणसा , नदसा ॥८१॥

**काशादेरिलः ।६।२।८२॥**

चातुरर्थिको देशनाम्नि स्यात् । काशिलम् , वाशिलम् ॥८२॥

**अरीहणादेरकण् ।६।२।८३॥**

चातुरर्थिको देशनाम्नि स्यात् । आरीहणकम् , खाण्डवकम् ॥८३॥

**सुपन्थ्यादेर्ञ्यः ।६।२।८४॥**

चातुरर्थिको देशनाम्नि स्यात् । सौपन्थ्यम् , सौवन्थ्यम् ॥८४॥

**सुतङ्गमादेरिञ् ।६।२।८५॥**

चातुरर्थिको देशनाम्नि स्यात् । सौतङ्गमिः , मौनिचित्तिः ॥८५॥

**बलादेर्यः ।६।२।८६॥**

चातुरर्थिको देशनाम्नि स्यात् । बल्यम् , बुल्यम् ॥८६॥

**अहरादिभ्योऽञ् ।६।२।८७॥**

चातुरर्थिको देशनाम्नि स्यात् । आह्नम् , लौमम् ॥८७॥

**सख्यादेरेयण् ।६।२।८८॥**

चातुरर्थिको देशनाम्नि स्यात् । साखेयः , साखिदत्तेयः ॥८८॥

**पन्थ्यादेरायनण् ।६।२।८९॥**

चातुरर्थिको देशनाम्नि स्यात् । पान्थायनः , पाक्षायणः ॥८९॥

---

१. देशे नाम्नि इकण् ईय अण् चकारादिक कण् इत्येते स्युः, शर्कराः सन्त्यस्मिन् देशे शार्करिकः J3 ॥ २. देशनाम्नि रः स्यात् P3सं० J3 ॥

**कर्णादेरायनिञ् ।६।२।९०।।**

चातुरर्थिको देशनाम्नि स्यात् । कार्णायनिः , वासिष्ठायनिः ।।९०।।

**उत्करादेरीयः ।६।२।९१।।**

चातुरर्थिको देशनाम्नि स्यात् । उत्करीयः , सङ्करीयः ।।९१।।

**नडादेः कीयः ।६।२।९२।।**

चातुरर्थिको देशनाम्नि स्यात् । नडकीयः , प्लक्षकीयः ।।९२।।

**कृशाश्वादेरीयण् ।६।२।९३।।**

चातुरर्थिको देशनाम्नि स्यात् । कार्शाश्वीयः , आरिष्टीयः ।।९३।।

**ऋश्यादेः कः ।६।२।९४।।**

चातुरर्थिको देशनाम्नि स्यात् । ऋश्यकः , न्यग्रोधकः ।।९४।।

**वराहादेः कण् ।६।२।९५।।**

चातुरर्थिको देशनाम्नि स्यात् । वाराहकम् , पालाशकम् ।।९५।।

**कुमुदादेरिकः ।६।२।९६।।**

चातुरर्थिको देशनाम्नि स्यात् । कुमुदिकम् । इक्कटिकम् ।।९६।।

**अश्वत्थादेरिकण् ।।६।२।९७।।**

चातुरर्थिको देशनाम्नि स्यात् । आश्वत्थिकम् , कौमुदिकम् ।।९७।।

**साऽस्य पौर्णमासी ।६।२।९८।।**

**से**ति प्रथमान्ताद**स्ये**ति षष्ठ्यर्थे यथाविहितं नाम्नि प्रत्ययः स्यात् , प्रथमान्तं चेत् पौर्णमासी । पौषो मासोऽर्द्धमासो वा ।।९८।।

**आग्रहायण्यश्वत्थादिकण् ।६।२।९९।।**

आभ्यां प्रथमान्ताभ्यां षष्ठ्यर्थे इकण् स्यात् , तच्चेत् पौर्णमासी , नाम्नि । आग्रहायणिको मासोऽर्द्धमासो वा , एवमाश्वत्थिकः ।।९९।।

**चैत्री-कार्त्तिकी-फाल्गुनी-श्रवणाद् वा ।६।२।१००।।**

एभ्यः साऽस्य पौर्णमासीति विषये नाम्नि इकण् वा स्यात् । चैत्रिकः , चैत्रो मासोऽर्द्धमासो वा ; एवं कार्त्तिकिकः , कार्त्तिकः ; फाल्गुनिकः , फाल्गुनः ; श्रावणिकः , श्रावणः ।।१००।।

**देवता ।६।२।१०१॥**

देवतार्थात् प्रथमान्तात् षष्ठ्यर्थे यथाविहितं प्रत्ययः स्यात् । जैनः , आग्नेयः , आदित्यः ॥१०१॥

**पैङ्गाक्षीपुत्रादेरीयः ।६।२।१०२॥**

एभ्यः साऽस्य देवतेति विषये ईयः स्यात् । पैङ्गाक्षीपुत्रीयम् , तार्णबिन्दवीयं हविः ॥१०२॥

**शुक्रादियः ।६।२।१०३॥**

शुक्रात् साऽस्य देवतेति विषये इयः स्यात् । शुक्रियं हविः ॥१०३॥

**शतरुद्रात् तौ ।६।२।१०४॥**

अस्मात् साऽस्य देवतेति विषये ईय इयश्च स्यात् । शतरुद्रीयम् , शतरुद्रियम् ॥१०४॥

**अपोनपादपान्नपातस्तृ चाऽऽतः ।६।२।१०५॥**

आभ्यां साऽस्य देवतेति विषये[1] इयेयौ स्याताम् , तद्योगे चाऽऽतस्तृः । अपोनप्त्रीयम् , अपोनप्त्रियम् ; अपान्नप्त्रीयम् , अपान्नप्त्रियम् ॥१०५॥

**महेन्द्राद् वा ।६।२।१०६॥**

अस्मात् साऽस्य देवतेति विषये तौ वा स्याताम् । महेन्द्रीयम् , महेन्द्रियम् , माहेन्द्रं वा हविः ॥१०६॥

**क-सोमाट्ट्यण्**

आभ्यां साऽस्य देवतेति विषये ट्यण् स्यात् । कायम् , सौम्यं हविः ॥१०७॥

**द्यावापृथिवी-शुनासीरा-ऽग्नीषोम-मरुत्वद्-वास्तोष्पति-गृहमेधादीय-यौ ।६।२।१०८॥**

एभ्यः साऽस्य देवतेति विषये ईय-यौ स्याताम् । द्यावापृथिवीयम् , द्यावापृथिव्यम् ; शुनासीरीयम् , शुनासीर्यम् ; अग्नीषोमीयम् ; अग्नीषोम्यम् ; मरुत्वतीयम् , मरुत्वत्यम् ; वास्तोष्पतीयम् ; वास्तोष्पत्यम् ; गृहमेधीयम् , गृहमेध्यम् ॥१०८॥

**वाय्वृतु-पित्रुषसो यः ।६।२।१०९॥**

---

१. विषये तौ स्याताम् P3 ॥

एभ्यः साऽस्य देवतेति विषये यः स्यात् । वायव्यम् , ऋतव्यम् , पित्र्यम् , उषस्यम् ॥१०९॥

**महाराज-प्रोष्ठपदादिकण् ।६।२।११०॥**

आभ्यां साऽस्य देवतेति विषये इकण् स्यात् । माहाराजिकः , प्रौष्ठपदिकः ॥११०॥

**कालाद् भववत् ।६।२।१११॥**

कालविशेषार्थेभ्यो यथा भवे प्रत्यया वक्ष्यन्ते तथा साऽस्य देवतेति विषयेऽपि स्युः । यथा मासे भवं मासिकम् , प्रावृषि प्रावृषेण्यम् , तथा मासप्रावृट्देवताकमपि ॥१११॥

**आदेः छन्दसः प्रगाथे ।६।२।११२॥**

प्रथमान्तादादेः छन्दसोऽस्येति षष्ठ्यर्थे प्रगाथेऽर्थे यथाविहितं प्रत्ययः स्यात् । पाङ्क्तः प्रगाथः । आदेरिति किम् ? अनुष्टुब् मध्यमस्य प्रगाथस्य ॥११२॥

**योद्धृ-प्रयोजनाद् युद्धे ।६।२।११३॥**

प्रथमान्ताद् योद्ध्रर्थात् प्रयोजनार्थाच्च षष्ठ्यर्थे युद्धे यथाविहितं प्रत्ययः स्यात् । वैद्याधरं युद्धम् , सौभद्रं युद्धम् ॥११३॥

**भावघञोऽस्यां णः ।६।२।११४॥**

भावे घञन्तात् प्रथमान्तादस्यामित्यर्थे णः स्यात् । प्रापाता तिथिः । भावेति किम् ? प्राकारोऽस्याम् ॥११४॥

**श्यैनम्पाता-तैलम्पाता ।६।२।११५॥**

श्येन-तिलयोर्भावे घञन्ते पाते परे मोऽन्तः स्यात् । श्यैनम्पाता , तैलम्पाता तिथिः क्रियाभूमिः क्रीडा वा ॥११५॥

**प्रहरणात् क्रीडायां णः ।६।२।११६॥**

प्रहरणार्थात् प्रथमान्तादस्यामिति क्रीडायां णः स्यात् । दाण्डा क्रीडा । क्रीडायामिति किम् ? खड्गः प्रहरणमस्यां सेनायाम् ॥११६॥

**तद् वेत्त्यधीते ।६।२।११७॥**

तदिति द्वितीयान्ताद् वेत्ति अधीते वा इत्यर्थयोर्यथाविहितं प्रत्ययः स्यात् ।

मौहूर्त्तः , छान्दसः[1] ॥११७॥

**न्यायादेरिकण् ।६।२।११८॥**

एभ्यो वेत्त्यधीते वेत्यर्थे इकण् स्यात् । नैयायिकः , नैयासिकः ॥११८॥

**पद-कल्प-लक्षणान्त-क्रत्वाख्याना-ऽऽख्यायिकात् ।६।२।११९॥**

पद-कल्प-लक्षणान्तेभ्यः क्रत्वाद्यर्थेभ्यश्च वेत्त्यधीते वेत्यर्थे इकण् स्यात् । पौर्वपदिकः , मातृकल्पिकः , गौलक्षणिकः , आग्निष्टोमिकः , यावक्रीतिकः , वासवदत्तिकः ॥११९॥

**अकल्पात् सूत्रात् ।६।२।१२०॥**

कल्पवर्जात् परो यः सूत्रस्तदन्ताद् वेत्त्यधीते वेत्यर्थे इकण् स्यात् । वार्त्तिसूत्रिकः । अकल्पादिति किम् ? सौत्रः , काल्पसौत्रः ॥१२०॥

**अधर्म-क्षत्र-त्रि-संसर्गा-ऽङ्गाद् विद्यायाः ।६।२।१२१॥**

धर्मादिवर्जात् परो यो विद्याशब्दस्तदन्ताद् वेत्त्यधीते वेत्यर्थे इकण् स्यात् । वायसविद्यिकः । अधर्मादेरिति किम् ? वैद्यः , धार्मविद्यः , क्षात्रविद्यः , त्रैविद्यः , सांसर्गविद्यः , आङ्गविद्यः ॥१२१॥

**याज्ञिकौक्थिक-लौकायितिकम् ।६।२।१२२॥**

एते वेत्त्यधीते वेत्यर्थे इकणन्ता निपात्यन्ते । याज्ञिकः , औक्थिकः , लौकायितिकः ॥१२२॥

**अनुब्राह्मणादिन् ।६।२।१२३॥**

अस्माद् वेत्त्यधीते वेत्यर्थे इन् स्यात् । अनुब्राह्मणी ॥१२३॥

**शत-षष्टेः पथ इकट् ।६।२।१२४॥**

आभ्यां परो यः पन्थास्तदन्ताद् वेत्त्यधीते वेत्यर्थे इकट् स्यात् । शतपथिकी , षष्टिपथिकः ॥१२४॥

**पदोत्तरपदेभ्य इकः ।६।२।१२५॥**

पदशब्द उत्तरपदं यस्य तस्मात् पदात् , पदोत्तरपदाच्च वेत्त्यधीते वेत्यर्थे इकः स्यात् । पूर्वपदिकः , पदिकः , पदोत्तरपदिकः ॥१२५॥

---

१. छान्दसः P3सं० मध्ये एव वर्तते ॥

## पद-क्रम-शिक्षा-मीमांसा-साम्नोऽकः ।६।२।१२६॥

एभ्यो वेत्त्यधीते वेत्यर्थेऽकः स्यात्। पदकः, क्रमकः, शिक्षकः, मीमांसकः, सामकः ॥१२६॥

## स-सर्वपूर्वात् लुप् ।६।२।१२७॥

सपूर्वात् सर्वपूर्वाच्च वेत्त्यधीते वेत्यर्थे प्रत्ययस्य लुप् स्यात्। सवार्त्तिकः, सर्ववेदः ॥१२७॥

## सङ्ख्याकात् सूत्रे ।६।२।१२८॥

सङ्ख्यायाः परो यः कस्तदन्तात् सूत्रार्थाद् वेत्त्यधीते वेत्यर्थे प्रत्ययस्य लुप् स्यात्। अष्टकाः पाणिनीयाः ॥१२८॥

## प्रोक्तात् ।६।२।१२९॥

प्रोक्तार्थप्रत्ययान्ताद् वेत्त्यधीते वेत्यर्थे प्रत्ययस्य लुप् स्यात्। गोतमेन प्रोक्तं गौतमम्, तद्वेत्त्यधीते वा गौतमः ॥१२९॥

## वेदेन्ब्राह्मणमत्रैव ।६।२।१३०॥

प्रोक्तप्रत्ययान्तं वेदवाचि, इन्नन्तं ब्राह्मणवाचि चाऽत्रैव वेत्त्यधीते वेति विषये एव प्रयुज्यते। कठेन प्रोक्तं वेदं विदन्त्यधीयते वा कठाः, ताण्ड्येन प्रोक्तं ब्राह्मणं विदन्त्यधीयते वा ताण्डिनः ॥१३०॥

## तेन च्छन्ने रथे ।६।२।१३१॥

तेनेति तृतीयान्तात्, छन्ने रथेऽर्थे यथाविहितं प्रत्ययः स्यात्। वास्त्रो रथः ॥१३१॥

## पाण्डुकम्बलादिन् ।६।२।१३२॥

अस्मात् टान्तात् छन्ने रथे इन् स्यात्। पाण्डुकम्बली रथः ॥१३२॥

## दृष्टे साम्नि नाम्नि ।६।२।१३३॥

तेनेति टान्तात्, दृष्टं सामेत्यर्थे यथाविहितं प्रत्ययः स्यात्, संज्ञायाम्। क्रौञ्चं साम, कालेयम् ॥१३३॥

## गोत्रादङ्कवत् ।६।२।१३४॥

गोत्रवाचिनष्टान्ताद् दृष्टं सामेत्यर्थेऽङ्के इव प्रत्ययः स्यात्। औपगवकं साम

॥१३४॥

**वामदेवाद् यः ।६।२।१३५॥**

अस्माद्दृष्टान्ताद् दृष्टे साम्नि यः स्यात् । वामदेव्यं साम ॥१३५॥

**डिद् वाऽण् ।६।२।१३६॥**

दृष्टं सामेत्यर्थेऽण् डिद् वा स्यात् । औशनम् , औशनसम् ॥१३६॥

**वा जाते द्विः ।६।२।१३७॥**

जातेऽर्थे योऽण् द्विर्विहितः स डिद्वा स्यात् । शातभिषः , शातभिषजः । द्विरिति किम् ? हैमवतः ॥१३७॥

**तत्रोद्धृते पात्रेभ्यः ।६।२।१३८॥**

तत्रेति सप्तम्यन्तात् पात्रार्थादुद्धृतेऽर्थे यथाविहितं प्रत्ययः स्यात् । शाराव ओदनः ॥१३८॥

**स्थण्डिलाच्छेते व्रती ।६।२।१३९॥**

स्थण्डिलात् सप्तम्यन्तात् शेते व्रतीत्यर्थे यथाविहितं प्रत्ययः स्यात् । स्थाण्डिलो भिक्षुः ॥१३९॥

**संस्कृते भक्ष्ये ।६।२।१४०॥**

सप्तम्यन्तात् संस्कृते भक्ष्ये यथाविहितं प्रत्ययः स्यात् । भ्राष्ट्रा अपूपाः ॥१४०॥

**शूलोखाद् यः ।६।२।१४१॥**

आभ्यां सप्तम्यन्ताभ्यां संस्कृते भक्ष्ये यः स्यात् । शूल्यम् , उख्यं मांसम् ॥१४१॥

**क्षीरादेयण् ।६।२।१४२॥**

क्षीरात् सप्तम्यन्तात् संस्कृते भक्ष्ये एयण् स्यात् । क्षैरेयी यवागूः ॥१४२॥

**दध्न इकण् ।६।२।१४३॥**

दध्नः सप्तम्यन्तात् संस्कृते भक्ष्ये इकण् स्यात् । दाधिकम् ॥१४३॥

**वोदश्वितः ।६।२।१४४॥**

उदश्वितः सप्तम्यन्तात् संस्कृते भक्ष्ये इकण् वा स्यात् । औदश्वित्कम् , औदश्वितम् ॥१४४॥

## क्वचित् ।६।२।१४५।।

अपत्यादिभ्योऽन्यत्राप्यर्थे क्वचिद् यथाविहितं प्रत्ययः स्यात् । चाक्षुषं रूपम् , आश्वो रथः ।।१४५।।

इति [आचार्यश्री**हेमचन्द्र**विरचितायां
**सिद्धहेमचन्द्रा**भिधानस्वोपज्ञशब्दानुशासनलघुवृत्तौ]
षष्ठस्याध्यायस्य द्वितीयः पादः समाप्तः[१] ।।६।२।।

मृदित्वा दोःकण्डूं समरभुवि वैरिक्षितिभुजां
भुजादण्डे दध्रुः कति न नवखण्डां वसुमतीम् ।
यदेवं साम्राज्ये विजयिनि वितृष्णेन मनसा
यशो योगीशानां पिबसि नृप ! तत् कस्य सदृशम् ।।२२।।

१. समाप्तः J2 P3 मध्ये नास्ति ।।

## [ तृतीयः पादः ]

**शेषे ।६।३।१।।**

अपत्यादिभ्योऽन्यस्मिन् प्राग्जितीयेऽर्थे इतोऽनुक्रम्यमाणं वेदितव्यम् ।।१।।

**नद्यादेरेयण् ।६।३।२।।**

एभ्यः प्राग्जितीये शेषेऽर्थे एयण् स्यात् । नादेयः , वानेयः । शेष इत्येव-समूहे नादिकम् ।।२।।

**राष्ट्रादियः ।६।३।३।।**

[राष्ट्रशब्दात् शेषे प्राग्जितीयेऽर्थे इयः स्यात् ।][1] राष्ट्रियः ।।३।।

**दूरादेत्यः ।६।३।४।।**

[दूरात् शेषेऽर्थे एत्यः स्यात् ।] दूरेत्यः ।।४।।

**उत्तरादाहञ् ।६।३।५।।**

[उत्तरशब्दात् शेषेऽर्थे आहञ् स्यात् ।] औत्तराहः ।।५।।

**पारावारादीनः ।६।३।६।।**

[पारावारशब्दात् शेषेऽर्थे ईनः स्यात् ।] पारावारीणः ।।६।।

**व्यस्त-व्यत्यस्तात् ।६।३।७।।**

पारावारात् शेषे ईनः स्यात् । पारीणः , अवारीणः , अवारपारीणः ।।७।।

**द्यु-प्रागपागुदक्-प्रतीचो यः ।६।३।८।।**

[दिव्शब्दात् प्राच् अपाच् उदच् प्रत्यच् इत्येतेभ्यश्चाव्ययाऽनव्ययेभ्यः शेषेऽर्थे यः स्यात् ।] दिव्यम् , प्राच्यम् , अपाच्यम् , उदीच्यम् , प्रतीच्यम् ।।८।।

**ग्रामादीनञ् च ।६।३।९।।**

[ग्रामात्] शेषेऽर्थे [ईनञ्] यश्च स्यात् । ग्रामीणः , ग्राम्यः ।।९।।

**कत्र्यादेश्चैयकञ् ।६।३।१०।।**

[कत्र्यादिभ्यो] ग्रामाच्च शेषे [एयकञ्] स्यात् । कात्रेयकः , पौष्करेयकः , ग्रामेयकः ।।१०।।

**कुण्ड्यादिभ्यो यलुक् च ।६।३।११।।**

१. अस्मिन् पादे [ ] एतदन्तर्गताः पाठाः P3सं० मध्ये एव सन्ति ।।

[कुण्ड्यादिभ्यः] शेषे[ऽर्थे] एयकञ् स्यात् , तद्योगे च यो लुक् । कौण्डेयकः , कौणेयकः ॥११॥

**कुल-कुक्षि-ग्रीवाच्छ्वाऽस्यलङ्कारे ।६।३।१२॥**

[एभ्यः] शेषेऽर्थे यथासंख्यमेयकञ् स्यात् । कौलेयकः श्वा , कौक्षेयकोऽसिः , ग्रैवेयकोऽलङ्कारः ॥१२॥

**दक्षिणा-पश्चात्-पुरसस्त्यण् ।६।३।१३॥**

[एभ्यः शेषेऽर्थे त्यण् स्यात् ।] दाक्षिणात्यः , पाश्चात्त्यः , पौरस्त्यः ॥१३॥

**वहल्यूर्दि-पर्दि-कापिश्याष्टायनण् ।६।३।१४॥**

[एभ्यः शेषेऽर्थे टायनण् स्यात् ।] वाह्लायनः , और्दायनः , पार्दायनः , कापिशायनी द्राक्षा ॥१४॥

**रङ्कोः प्राणिनि वा ।६।३।१५॥**

[रङ्कुशब्दात्] प्राणिनि [विशिष्टे] शेषेऽर्थे टायनण् वा स्यात् । राङ्कवायणः , राङ्कवो गौः ; कम्बलस्तु राङ्कवः ॥१५॥

**क्वेहाऽमा-त्र-तसस्त्यच् ।६।३।१६॥**

[क्व इह अमा इत्येतेभ्यः , त्र-तसुप्रत्ययान्तेभ्यश्च शेषेऽर्थे त्यच् स्यात् ।] क्वत्यः , इहत्यः , अमात्यः , तत्रत्यः , कुतस्त्यः ॥१६॥

**नेर्ध्रुवे ।६।३।१७॥**

[निशब्दाद् ध्रुवेऽर्थे] त्यच् स्यात् । नित्यं ध्रुवम् ॥१७॥

**निसो गते ।६।३।१८॥**

[निसुशब्दाद् गतेऽर्थे] त्यच् स्यात् । निष्टयश्चण्डालः ॥१८॥

**ऐषमो-ह्यस्-श्वसो वा ।६।३।१९॥**

[एभ्यः] शेषेऽर्थे त्यच् वा स्यात् । ऐषमस्त्यम् , ऐषमस्तनम् ; ह्यस्त्यम् , ह्यस्तनम् ; श्वस्त्यम् , श्वस्तनम् ॥१९॥

**कन्थाया इकण् ।६।३।२०॥**

**कन्था** ग्रामविशेषः, [कन्थाशब्दाच्छेषेऽर्थे इकण् स्यात् ।] कान्थिकः ॥२०॥

**वर्णावकञ् ।६।३।२१॥**

वर्णुदेशे या कन्था ततः शेषे[ऽर्थे]ऽकञ् स्यात् । कान्थकः ॥२१॥

**रूप्योत्तरपदा-ऽरण्याण्णः ।६।३।२२॥**

[रूप्योत्तरपदादरण्याच्च शेषेऽर्थे णः स्यात् ।] वार्करूप्यः , आरण्याः सुमनसः ॥२२॥

**दिक्पूर्वादनाम्नः ।६।३।२३॥**

[दिक्पूर्वपदादनाम्नोऽसंज्ञाविषयात्] शेषे[ऽर्थे] णः स्यात् । पौर्वशालः । अनाम्न इति किम् ? पूर्वकार्ष्णमृत्तिकी ॥२३॥

**मद्रादञ् ।६।३।२४॥**

मद्रान्ताद् दिक्पूर्वपदात् शेषे[ऽर्थे]ऽञ् स्यात् । पौर्वमद्री ॥२४॥

**उदग्ग्रामाद् यकृल्लोम्नः ।६।३।२५॥**

[उदग्ग्रामवाचिनो यकृल्लोमन्शब्दात्] शेषे[ऽर्थे]ऽञ् स्यात् । याकृल्लोमः । उदग्ग्रामादिति किम् ? अन्यस्मादण्-याकृल्लोमनः ॥२५॥

**गौष्ठी-तैकी-नैकेती-गोमती-शूरसेन-वाहीक-रोमक-पटच्चरात् ।६।३।२६॥**

एभ्यः शेषे[ऽर्थे]ऽञ् स्यात् । गौष्ठः , तैकः , नैकेतः , गौमतः , शौरसेनः , वाहीकः , रौमकः , पाटच्चरः ॥२६॥

**शकलादेर्यञः ।६।३।२७॥**

अस्माद् यञन्तात् शेषे[ऽर्थे]ऽञ् स्यात् । शाकलाः , काण्वाः ॥२७॥

**वृद्धेञः ।६।३।२८॥**

वृद्धेञन्तात् शेषे[ऽर्थे]ऽञ् स्यात् । दाक्षाः । वृद्धेति किम् ? सौतङ्गमीयः ॥२८॥

**न द्विस्वरात् प्राग्-भरतात् ।६।३।२९॥**

प्राग्गोत्रार्थाद् भरतगोत्रार्थाच्च वृद्धे[1]ञन्तादञ् न स्यात् । चैङ्कीयाः , काशीयाः । द्विस्वरादिति किम् ? पान्नागाराः ॥२९॥

**भवतोरिकणीयसौ ।६।३।३०॥**

१. वृद्धेञन्ताच्छेषेऽञ् न स्यात् J1,3 । "वृद्धेञन्ताद् द्विस्वरादञ् प्रत्ययो न भवति" इति बृहद्वृत्तौ ॥

[भवच्छशब्दाच्छेषेऽर्थे इकणीयसौ स्याताम् ।] भावत्कम् , भवदीयम् ॥३०॥

**पर-जन-राज्ञोऽकीयः ।६।३।३१॥**

[एभ्यः शेषेऽर्थेऽकीयः स्यात् ।] परकीयः , जनकीयः , राजकीयः ॥३१॥

**दोरीयः ।६।३।३२॥**

[दुसंज्ञकाच्छेषेऽर्थे ईयः स्यात् ।] देवदत्तीयः , तदीयः ॥३२॥

**उष्णादिभ्यः कालात् ।६।३।३३॥**

उष्णादिपूर्वपदात् कालान्ताच्छेषेऽर्थे ईयः स्यात् । उष्णकालीयम् ॥३३॥

**व्यादिभ्यो णिकेकणौ ।६।३।३४॥**

एभ्यो यः कालस्तदन्ताच्छेषे[ऽर्थे] णिक[1] इकण् च स्यात् । वैकालिका , वैकालिकी ; आनुकालिका , आनुकालिकी ॥३४॥

**काश्यादेः ।६।३।३५॥**

एभ्यो दुभ्यः शेषे णिकेकणौ स्याताम् । काशिका , काशिकी ; चैदिका , चैदिकी ॥३५॥

**वाहीकेषु ग्रामात् ।६।३।३६॥**

एषु ग्रामाद् दोः शेषेऽर्थे णिकेकणौ स्याताम् । कारन्तपिका , कारन्तपिकी ॥३६॥

**वोशीनरेषु ।६।३।३७॥**

एषु ग्रामार्थाद् दोः शेषेऽर्थे णिकेकणौ वा स्याताम् । आह्वजालिका , आह्वजालिकी , आह्वजालीयः ॥३७॥

**वृजि-मद्राद् देशात् कः ।६।३।३८॥**

[वृजि-मद्रशब्दाभ्यां देशवाचिभ्यां शेषेऽर्थे कः स्यात् ।] वृजिकः , मद्रकः ॥३८॥

**उवर्णादिकण् ।६।३।३९॥**

उवर्णान्ताद् देशार्थाच्छेषे इकण् स्यात् । शाबरजम्बुकः ॥३९॥

**दोरेव प्राचः ।६।३।४०॥**

---

१. **णिकेकणौ स्याताम्** पा२ ॥

प्राग्देशार्थादुवर्णान्ताद् दोरेवेकण् स्यात् । आषाढजम्बुकः ॥४०॥

**ईतोऽकञ् ।६।३।४१॥**

ईदन्तात् प्राग्देशार्थाद् दोः शेषेऽकञ् स्यात् । काकन्दकः ॥४१॥

**रोपान्त्यात् ।६।३।४२॥**

रोपान्त्यात् प्राचो दोः शेषेऽकञ् स्यात् । पाटलिपुत्रकः ॥४२॥

**प्रस्थ-पुर-वहान्त-योपान्त्य-धन्वार्थात् ।६।३।४३॥**

प्रस्थ-पुर-वहान्तेभ्यो युपान्त्याद् धन्वार्थाच्च देशवृत्तेर्दोः शेषेऽकञ् स्यात् । मालाप्रस्थकः , नान्दीपुरकः , पैलुवहकः , साङ्काश्यकः , पारेधन्वकः ॥४३॥

**राष्ट्रेभ्यः ।६।३।४४॥**

राष्ट्रार्थेभ्यो दुभ्यः शेषेऽकञ् स्यात् । आभिसारकः ॥४४॥

**बहुविषयेभ्यः ।६।३।४५॥**

राष्ट्रेभ्यो बहुविषयेभ्यः शेषेऽकञ् स्यात् । आङ्गकः ॥४५॥

**धूमादेः ।६।३।४६॥**

अस्माद् देशवृत्तेः शेषेऽकञ् स्यात् । धौमकः , षाडण्डकः ॥४६॥

**सौवीरेषु कूलात् ।६।३।४७॥**

सौवीरदेशार्थात् कूलात् शेषेऽकञ् स्यात् । कौलकः ॥४७॥

**समुद्रान्नृ-नावोः ।६।३।४८॥**

समुद्राद् देशार्थाच्छेषेऽकञ् स्यात् , नरि नावि चार्थे । सामुद्रको ना , सामुद्रिका नौः । सामुद्रमन्यत् ॥४८॥

**नगरात् कुत्सा-दाक्ष्ये ।६।३।४९॥**

नगराद् देशार्थाच्छेषेऽकञ् स्यात् , कुत्सायां दाक्ष्ये च गम्ये । चौरा हि नागरकाः , दक्षा हि नागरकाः ॥४९॥

**कच्छा-ऽग्नि-वक्त्र-वर्त्तोत्तरपदात् ।६।३।५०॥**

कच्छाद्युत्तरपदाद् देशार्थाच्छेषेऽकञ् स्यात् । भारुकच्छकः , काण्डाग्नकः , ऐन्दुवक्त्रकः , बाहुवर्त्तकः ॥५०॥

**अरण्यात् पथि-न्याया-ऽध्यायेभ-नर-विहारे ।६।३।५१॥**

अरण्याद् देशार्थात् पथ्यादौ शेषेऽकञ् स्यात् । आरण्यकः पन्था न्यायोऽध्याय इभो नरो विहारो वा ॥५१॥

**गोमये वा ।६।३।५२॥**

अरण्याद् देशाच्छेषे गोमयेऽर्थेऽकञ् वा स्यात् । आरण्यका गोमयाः , आरण्या वा ॥५२॥

**कुरु-युगन्धराद् वा ।६।३।५३॥**

आभ्यां देशार्थाभ्यां शेषेऽकञ् वा स्यात् । कौरवकः , कौरवः ; यौगन्धरकः , यौगन्धरः ॥५३॥

**साल्वाद् गो-यवाग्वपत्तौ ।६।३।५४॥**

साल्वाद् देशार्थाद् गवि यवाग्वां पत्तिवर्जे च मनुष्ये शेषेऽर्थेऽकञ् स्यात् । साल्वको गौः , साल्विका यवागूः , साल्वको ना ॥५४॥

**कच्छादेर्नृ-नृस्थे ।६।३।५५॥**

अस्माद्[१] देशार्थाद् नरि नृस्थे च शेषेऽर्थेऽकञ् स्यात् । काच्छको ना , काच्छकमस्य स्मितम् ॥५५॥

**कोपान्त्याच्चाऽण् ।६।३।५६॥**

कुपान्त्यात् कच्छादेश्च देशार्थाच्छेषेऽण् स्यात् । आर्षिकः , काच्छः , सैन्धवः ॥५६॥

**गर्त्तोत्तरपदादीयः ।६।३।५७॥**

अस्माद् देशार्थाच्छेषे ईयः स्यात् । श्वाविद्गर्त्तीयः ॥५७॥

**कटपूर्वात् प्राचः ।६।३।५८॥**

कटपूर्वपदात् प्राग्देशार्थाच्छेषे ईयः स्यात् । कटग्रामीयः ॥५८॥

**क-खोपान्त्य-कन्था-पलद-नगर-ग्राम-ह्रदोत्तरपदाद् दोः ।६।३।५९॥**

कुपान्त्यात् खुपान्त्यात् कन्थाद्युत्तरपदाच्च देशार्थाद् दोः शेषेऽर्थे ईयः स्यात् । आरीहणकीयः , कौटशिखीयः , दाक्षिकन्थीयः , दाक्षिपलदीयः , दाक्षिनगरीयः , माहकिग्रामीयः , दाक्षिह्रदीयः ॥५९॥

---

१. अस्माद् P3 मध्ये नास्ति ॥

**पर्वतात् ।६।३।६०॥**

अस्माद् देशार्थाच्छेषे ईयः स्यात् । पर्वतीयो राजा ॥६०॥

**अनरे वा ।६।३।६१॥**

पर्वताद् देशार्थान्नृवर्जे शेषे ईयो वा स्यात् । पर्वतीयानि , पार्वतानि फलानि ॥६१॥

**पर्ण-कृकणाद् भारद्वाजात् ।६।३।६२॥**

आभ्यां भारद्वाजदेशार्थाभ्यां शेषे ईयः स्यात् । पर्णीयः , कृकणीयः ॥६२॥

**गहादिभ्यः ।६।३।६३॥**

एभ्यो यथासम्भवं देशार्थेभ्यः शेषे ईयः स्यात् । गहीयः , अन्तस्थीयः ॥६३॥

**पृथीवीमध्यान्मध्यमश्चास्य ।६।३।६४॥**

अस्मात् देशार्थाच्छेषे ईयः स्यात् , प्रकृतेश्च मध्यमादेशः । मध्यमीयः ॥६४॥

**निवासाच्चरणेऽण् ।६।३।६५॥**

पृथिवीमध्यान्निवासदेशार्थाच्चरणे निवस्तरि शेषेऽर्थेऽण् स्यात् , मध्यमश्चास्य । माध्यमाश्चरणाः ॥६५॥

**वेणुकादिभ्य ईयण् ।६।३।६६॥**

एभ्यो यथायोगं देशार्थेभ्यः शेषे ईयण् स्यात् । वैणुकीयः , चैत्रकीयः[1] ॥६६॥

**वा युष्मदस्मदोऽञीनञौ युष्माका-ऽस्माकं चास्यैकत्वे तु तवक-ममकम् ।६।३।६७॥**

आभ्यां शेषेऽर्थेऽञीनञौ वा स्याताम् , तद्योगे च यथासंख्यं युष्माका-ऽस्माकौ एकार्थयोस्तु तवक-ममकौ । यौष्माकी , यौष्माकीणः , आस्माकी , आस्माकीनः

१. सिद्धहेमचन्द्रशब्दानुशासनस्य लघुवृत्तेर्बृहद्वृत्तेश्च हस्तलिखितादर्शेषु अत्र **'चैत्रकीयः'** इति पाठः । P3 मध्ये ''वेणवः सन्त्यत्र *ऋश्यादेः कः* [६।२।९८] । चित्रस्य तुल्यः, *तस्य तुल्ये कः* [७।१।१०८] वेणुके चित्रके वा भवः'' इति टिप्पनमपि वर्तते । किञ्च, जैनेन्द्रव्याकरणस्य अभयनन्दिप्रणीतायां जैनेन्द्रमहावृत्तौ अपि [३।२।११४] 'चैत्रकीयम्' इति पाठः । शाकटायनव्याकरणस्य स्वोपज्ञवृत्तावपि [३।१।५६] 'चैत्रकीयः' इत्येव पाठः । किन्तु पाणिनीयव्याकरणस्य [४।२।१३८] काशिकायां वृत्तौ चान्द्रव्याकरणवृत्तौ [३।२।६१] सरस्वतीकण्ठाभरणे [४।३।९२] च 'वैत्रकीयः' इति पाठः । वस्तुतो हस्तलिखितादर्शेषु 'च-व' इत्यनयोरक्षरयोः समानप्रायत्वात् पाठनिर्णयः दुष्करः ॥ ६।२।९२ सूत्रे नडादिगणे वेणु-वेत्र इति पाठः ॥

; युष्मदीयः , अस्मदीयः ; तावकः , तावकीनः , मामकः , मामकीनः ; त्वदीयः , मदीयः ॥६७॥

**द्वीपादनुसमुद्रं ण्यः ।६।३।६८॥**

समुद्रसमीपे यो द्वीपः तदर्थात् शेषेऽर्थे ण्यः स्यात् । द्वैप्यो ना तद्वासो वा ॥६८॥

**अर्धाद् यः ।६।३।६९॥**

[अर्धशब्दाच्छेषे यः स्यात् ।] अर्ध्यम् ॥६९॥

**सपूर्वादिकण् ।६।३।७०॥**

सपूर्वपदादर्धाच्छेषेऽर्थे इकण् स्यात् । पौष्करार्धिकः ॥७०॥

**दिक्पूर्वात् तौ ।६।३।७१॥**

दिगर्थपूर्वपदादर्धाच्छेषेऽर्थे येकणौ स्याताम् । पूर्वार्ध्यम् , पौर्वार्धिकम् ॥७१॥

**ग्राम-राष्ट्रांशादणिकणौ ।६।३।७२॥**

ग्राम-राष्ट्रयोर्भागार्थादर्धात् दिक्पूर्वाच्छेषेऽणिकणौ स्याताम् । ग्रामस्य राष्ट्रस्य वा पौर्वार्धः , पौर्वार्धिकः ॥७२॥

**परा-ऽवरा-ऽधमोत्तमादेर्यः ।६।३।७३॥**

परादिपूर्वादर्धाच्छेषेऽर्थे यः स्यात् । परार्ध्यम् , अवरार्ध्यम् , अधमार्ध्यम् , उत्तमार्ध्यम् ॥७३॥

**अमोऽन्ता-ऽवो-ऽधसः ।६।३।७४॥**

अन्तादेः शेषेऽर्थेऽमः स्यात् । अन्तमः , अवमः , अधमः ॥७४॥

**पश्चादाद्यन्ता-ऽग्रादिमः ।६।३।७५॥**

[एभ्यः शेषेऽर्थे इमः स्यात् ।] पश्चिमः , आदिमः , अन्तिमः , अग्रिमः ॥७५॥

**मध्यान्मः ।६।३।७६॥**

[मध्यशब्दाच्छेषेऽर्थे मः स्यात् ।] मध्ये जातो मध्यमः ॥७६॥

**मध्य उत्कर्षा-ऽपकर्षयोरः ।६।३।७७॥**

अनयोर्मध्यार्थान्मध्याच्छेषेऽर्थे अः स्यात् । नात्युत्कृष्टो नात्यपकृष्टो मध्यपरि[1]-णामो मध्यो विद्वान् ॥७७॥

**अध्यात्मादिभ्य इकण् ।६।३।७८॥**

एभ्यः शेषेऽर्थे इकण् स्यात् । आध्यात्मिकम् , आधिदैविकम् ॥७८॥

**समानपूर्व-लोकोत्तरपदात् ।६।३।७९॥**

समानशब्दपूर्वपदेभ्यो लोकशब्दोत्तरपदेभ्यश्च शेषेऽर्थे इकण् स्यात् । सामानग्रामिकः , ऐहलौकिकः ॥७९॥

**वर्षा-कालेभ्यः ।६।३।८०॥**

वर्षायाः कालविशेषार्थाच्च शेषेऽर्थे इकण् स्यात् । वार्षिकः , मासिकः ॥८०॥

**शरदः श्राद्धे कर्मणि ।६।३।८१॥**

अस्मात् पितृकार्ये शेषेऽर्थे इकण् स्यात् । शारदिकं श्राद्धम् ॥८१॥

**नवा रोगा-ऽऽतपे ।६।३।८२॥**

शरदो रोगे आतपे च शेषेऽर्थे इकण् वा स्यात् । शारदिकः , शारदो रोग आतपो वा ॥८२॥

**निशा-प्रदोषात् ।६।३।८३॥**

आभ्यां शेषेऽर्थे इकण् वा स्यात् । नैशिकः , नैशः ; प्रादोषिकः , प्रादोषः ॥८३॥

**श्वसस्तादिः ।६।३।८४॥**

श्वसः कालार्थाच्छेषेऽर्थे तादिरिकण् वा स्यात् । शौवस्तिकः ; श्वस्त्यः ॥८४॥

**चिर-परुत्-परारेस्त्नः ।६।३।८५॥**

एभ्यः शेषेऽर्थे त्नो वा स्यात् । चिरत्नम् , परुत्नम् , परारित्नम् ; चिरंतनम् , प्ररुत्तनम् , परारितनम् ॥८५॥

**पुरो नः ।६।३।८६॥**

पुराशब्दात् कालार्थाच्छेषेऽर्थे नो वा स्यात् । पुराणम् , पुरातनम् ॥८६॥

**पूर्वाह्णा-ऽपराह्णात् तनट् ।६।३।८७॥**

---

१. मध्यमपरि° पा२ ॥

आभ्यां शेषेऽर्थे तनड् वा स्यात् । पूर्वाह्णेतनः , अपराह्णेतनः ; पौर्वाह्णिकः , आपराह्णिकः ॥८७॥

**सायं-चिरं-प्राह्णे-प्रगे-ऽव्ययात् ।६।३।८८॥**

एभ्योऽव्ययाच्च कालार्थाच्छेषेऽर्थे तनड् नित्यं स्यात् । सायंतनम् , चिरन्तनम् , प्राह्णेतनम् , प्रगेतनम् , दिवातनम् ॥८८॥

**भर्तु-सन्ध्यादेरण् ।६।३।८९॥**

भं नक्षत्रम् , तदर्थाद् , ऋत्वर्थात् सन्ध्यादेश्च कालार्थाच्छेषेऽर्थेऽण् स्यात् । पौषः , ग्रैष्मः , सान्ध्यः , आमावास्यः ॥८९॥

**संवत्सरात् फल-पर्वणोः ।६।३।९०॥**

अस्मात् फले पर्वणि च शेषेऽर्थेऽण् स्यात् । सांवत्सरं फलं पर्व वा ॥९०॥

**हेमन्ताद् वा , तलुक् च ।६।३।९१॥**

अस्माच्छेषेऽर्थेऽण् वा स्यात् , तद्योगे च तो वा लुक् । हैमनम् , हैमन्तम् , हैमन्तिकम् ॥९१॥

**प्रावृष एण्यः ।६।३।९२॥**

अस्माच्छेषेऽर्थे एण्यः स्यात् । प्रावृषेण्यः ॥९२॥

**स्थामा-ऽजिनान्ताल्लुप् ।६।३।९३॥**

स्थामान्तादजिनान्ताच्च परस्य शैषिकस्य लुप् स्यात् । अश्वत्थामा , सिंहाजिनः ॥९३॥

**तत्र कृत-लब्ध-क्रीत-सम्भूते ।६।३।९४॥**

तत्रेति सप्तम्यन्तादेष्वर्थेषु यथायोगमणादय एयणादयश्च स्युः । स्रौघ्नः , औत्सः , बाह्यः , नादेयः , राष्ट्रियः ॥९४॥

**कुशले ।६।३।९५॥**

सप्तम्यन्तात् कुशलेऽर्थे यथाविहितमणेयणादयः स्युः । माथुरः , नादेयः ॥९५॥

**पथोऽकः ।६।३।९६॥**

सप्तम्यन्तात् पथः कुशलेऽकः स्यात् । पथकः ॥९६॥

**कोऽश्मादेः ।६।३।९७॥**

अस्मात् सप्तम्यन्तात् कुशले कः स्यात् । अश्मकः , अशनिकः ॥९७॥

**जाते ।६।३।९८॥**

सप्तम्यन्ताज्जातेऽर्थे यथाविहितमणेयणादयः स्युः । माथुरः , औत्सः , बाह्यः , नादेयः , राष्ट्रियः ॥९८॥

**प्रावृष इकः ।६।३।९९॥**

अस्मात् सप्तम्यन्ताज्जाते इकः स्यात् । प्रावृषिकः ॥९९॥

**नाम्नि शरदोऽकञ् ।६।३।१००॥**

शरदः सप्तम्यन्ताज्जातेऽकञ् स्यात् , नाम्नि । शारदका दर्भाः । नाम्नीति किम् ? शारदं सस्यम् ॥१००॥

**सिन्ध्वपकरात् का-ऽणौ ।६।३।१०१॥**

आभ्यां सप्तम्यन्ताभ्यां जाते कोऽण् च ना[1]म्नि स्यात् । सिन्धुकः , सैन्धवः , अपकरकः , आपकरः ॥१०१॥

**पूर्वाह्णा-ऽपराह्णा-ऽऽर्द्रा-मूल-प्रदोषा-ऽवस्करादकः ।६।३।१०२॥**

एभ्यः सप्तम्यन्तेभ्यो जातेऽको नाम्नि स्यात् । पूर्वाह्णकः , अपराह्णकः , आर्द्रकः , मूलकः , प्रदोषकः , अवस्करकः ॥१०२॥

**पथः पन्थ च ।६।३।१०३॥**

पथः सप्तम्यन्ताज्जातेऽको नाम्नि स्यात् , तद्योगे प[2]न्थ् च । पन्थकः ॥१०३॥

**अश्च वाऽमावास्यायाः ।६।३।१०४॥**

अस्मात् सप्तम्यन्ताज्जाते अः , अकश्च नाम्नि वा स्यात् । अमावास्यः , अमावास्यकः , आमावास्यः ॥१०४॥

**श्रविष्ठा-ऽषाढादीयण् च ।६।३।१०५॥**

आभ्यां सप्तम्यन्ताभ्यां जाते ईयण् अश्च नाम्नि स्यात् । श्राविष्ठीयः , श्रविष्ठः ; आषाढीयः , अ[3]षाढः ॥१०५॥

**फल्गुन्याष्टः ।६।३।१०६॥**

अस्मात् सप्तम्यन्ताज्जाते टो नाम्नि स्यात् । फल्गुनः ॥१०६॥

१. नाम्नि P3 मध्ये नास्ति ॥ २. पन्थ च P3 । पथः J1 । पन्थः J3 ॥ ३. आषाढः P3सं० J2सं० J3 विना सर्वत्र । "अणमपीच्छन्त्येके-श्राविष्ठः आषाढः" इति बृहद्वृत्तौ ॥

**बहुला-ऽनुराधा-पुष्यार्थ-पुनर्वसु-हस्त-विशाखा-स्वातेर्लुप् ।६।३।१०७।।**

एभ्यः सप्तम्यन्तेभ्यः परस्य भाऽणो जातेऽर्थे लुप् स्यात् , नाम्नि । बहुलः , अनुराधः , पुष्यः , पुनर्वसुः , हस्तः , विशाखः , स्वातिः शिशुः ।।१०७।

**चित्रा-रेवती-रोहिण्याः स्त्रियाम् ।६।३।१०८।।**

एभ्यः सप्तम्यन्तेभ्यो भाऽणो जाते स्त्रियां नाम्नि लुप् स्यात् । चित्रा स्त्री , रेवती , रोहिणी ।।१०८।।

**बहुलमन्येभ्यः ।६।३।१०९।।**

श्रविष्ठादिभ्योऽन्येभ्यो भार्थेभ्यः सप्तम्यन्तेभ्यो भाणो जातेऽर्थे लुब् बहुलं नाम्नि स्यात् । अभिजित् , आभिजितः ; अश्वयुक् , आश्वयुजः । क्वचिन्नित्यम् -अश्विनः । क्वचिन्न स्यात्-माघः ।।१०९।।

**स्थानान्त-गोशाल-खरशालात् ।६।३।११०।।**

एभ्यः सप्तम्यन्तेभ्यः परस्य जाते प्रत्ययस्य नाम्नि लुप् स्यात् । गोस्थानः , गोशालः , खरशालः शिशुः ।।११०।।

**वत्सशालाद्वा ।६।३।१११।।**

अस्मात् सप्तम्यन्ताज्जाते प्रत्ययस्य नाम्नि लुब् वा स्यात् । वत्सशालः , वात्सशालः ।।१११।।

**सोदर्य-समानोदर्यौ ।६।३।११२।।**

एतौ जातेऽर्थे यान्तौ निपात्येते । सोदर्यः , समानोदर्यो भ्राता ।।११२।।

**कालाद् देये ऋणे ।६।३।११३।।**

सप्तम्यन्तात् कालार्थाद् देये ऋणेऽर्थे यथाविहितं प्रत्ययः स्यात् । मासिकमृणम् ।।११३।।

**कलाप्यश्वत्थ-यवबुसोमाव्यासैषमसोऽकः ।६।३।११४।।**

एभ्यः सप्तम्यन्तेभ्यो देये ऋणेऽकः स्यात् । कलापकम् , अश्वत्थकम् , यवबुसकम् , उमाव्यासकम् , ऐषमकमृणम् ।।११४।।

**ग्रीष्मा-ऽवरसमादकञ् ।६।३।११५।।**

आभ्यां कालार्थाभ्यां सप्तम्यन्ताभ्यां देये ऋणेऽकञ् स्यात् । ग्रैष्मकम् , आवरसमकमृणम् ॥११५॥

**संवत्सरा-ऽऽग्रहायण्या इकण् च ।६।३।११६॥**

आभ्यां सप्तम्यन्ताभ्यां देये ऋणे इकण् अकञ् च स्यात् । सांवत्सरिकम् , सांवत्सरकं फलं पर्व वा , आग्रहायणिकम् , आग्रहायणकम् ॥११६॥

**साधु-पुष्यत्-पच्यमाने ।६।३।११७॥**

सप्तम्यन्तात् कालविशेषार्थाद् एषु यथाविहितं प्रत्ययाः स्युः । हैमनं , हैमन्तमनुलेपनम् ; वासन्त्यः कुन्दलताः , शारदाः शालयः ॥११७॥

**उप्ते ।६।३।११८॥**

सप्तम्यन्तात् कालार्थादुप्तेऽर्थे यथाविहितं प्रत्ययः स्यात् । शारदा यवाः , हैमनाः ॥११८॥

**आश्वयुज्या अकञ् ।६।३।११९॥**

अस्मात् सप्तम्यन्तादुप्तेऽर्थेऽकञ् स्यात् । आश्वयुजका माषाः ॥११९॥

**ग्रीष्म-वसन्ताद् वा ।६।३।१२०॥**

आभ्यां सप्तम्यन्ताभ्यामुप्तेऽर्थेऽकञ् वा स्यात् । ग्रैष्मकम् , ग्रैष्मं सस्यम् । वासन्तकम् , वासन्तम् ॥१२०॥

**व्याहरति मृगे ।६।३।१२१॥**

सप्तम्यन्तात् कालार्थाद् व्याहरति मृगेऽर्थे यथाविहितं प्रत्ययः स्यात् । नैशिको नैशो वा शृगालः , प्रादोषिकः , प्रादोषो वा । मृग इति किम् ? वसन्ते व्याहरति कोकिलः ॥१२१॥

**जयिनि च ।६।३।१२२॥**

सप्तम्यन्तात् कालार्थाज्जयिन्यर्थे यथाविहितं प्रत्ययः स्यात् । निशाभवमध्ययनं निशा , तत्र जयी नैशिकः , नैशः , प्रादोषिकः , प्रादोषः , वार्षिकः ॥१२२॥

**भवे ।६।३।१२३॥**

सप्तम्यन्ताद् भवेऽर्थे यथाविहितमणेयणादयः स्युः । स्रौघ्नः , औत्सः , नादेयः , ग्राम्यः ॥१२३॥

**दिगादिदेहांशाद् यः ।६।३।१२४॥**

दिगादेर्देहावयवार्थाच्च सप्तम्यन्ताद् भवे यः स्यात् । दिश्यः , अप्सव्यः , मूर्धन्यः ॥१२४॥

**नाम्न्युदकात् ।६।३।१२५॥**

उदकात् सप्तम्यन्ताद् भवेऽर्थे यो नाम्नि स्यात् । उदक्या रजस्वला ॥१२५॥

**मध्याद् दिनण्-णेया मोऽन्तश्च ।६।३।१२६॥**

मध्यात् सप्तम्यन्ताद् भवे एते स्युः , तद्योगे च मन्तः । माध्यन्दिनाः , माध्यमः , मध्यमीयः ॥१२६॥

**जिह्वामूला-ऽङ्गुलेश्चेयः ।६।३।१२७॥**

आभ्यां सप्तम्यन्ताभ्यां मध्याच्च भवे ईयः स्यात् । जिह्वामूलीयः , अङ्गुलीयः , मध्यीयः ॥१२७॥

**वर्गान्तात् ।६।३।१२८॥**

अस्मात् सप्तम्यन्ताद् भवे ईयः स्यात् । कवर्गीयो वर्णः ॥१२८॥

**ईन-यौ चाशब्दे ।६।३।१२९॥**

वर्गान्तात् सप्तम्यन्ताद् भवे एतावीयश्च स्युः , न तु शब्दे । भरतवर्गीणः , भरतवर्ग्यः , भरतवर्गीयः । शब्दे तु कवर्गीयः ॥१२९॥

**दृति-कुक्षि-कलशि-वस्त्यहेरेयण् ।६।३।१३०॥**

एभ्यः सप्तम्यन्तेभ्यो भवे एयण् स्यात् । दार्त्तेयं जलम् , कौक्षेयो व्याधिः , कालशेयं तक्रम् , वास्तेयं पुरीषम् , आहेयं विषम् ॥१३०॥

**आस्तेयम् ।६।३।१३१॥**

अस्तेर्धन-विद्यमानार्थात् तत्र भवे एयण् स्यात् , असृजो वा अस्त्यादेशश्च । आस्तेयम् ॥१३१॥

**ग्रीवातोऽण् च ।६।३।१३२॥**

अतो भवेऽणेयणौ स्याताम् । ग्रैवम् , ग्रैवेयम् ॥१३२॥

**चतुर्मासान्नाम्नि ।६।३।१३३॥**

अस्मात् तत्र भवेऽण् स्यात् , नाम्नि । चातुर्मासी आषाढ्यादिपौर्णमासी ॥१३३॥

**यज्ञे ञ्यः ।६।३।१३४॥**

चतुर्मासात् तत्र भवे यज्ञे ञ्यः स्यात् । चातुर्मास्या यज्ञाः ॥१३४॥

**गम्भीर-पञ्चजन-बहिर्देवात् ।६।३।१३५॥**

एभ्यस्तत्र भवे ञ्यः स्यात् । गाम्भीर्यः , पाञ्चजन्यः , बाह्यः , दैव्यः ॥१३५॥

**परिमुखादेरव्ययीभावात् ।६।३।१३६॥**

अस्मात् तत्र भवे ञ्यः स्यात् । पारिमुख्यः , पारिहनव्यः ॥१३६॥

**अन्तःपूर्वादिकण् ।६।३।१३७॥**

अन्तःपूर्वपदादव्ययीभावात् तत्र भवे इकण् स्यात् । आन्तरगारिकः ॥१३७॥

**पर्यनोर्ग्रामात् ।६।३।१३८॥**

आभ्यां परो यो ग्रामस्तदन्तादव्ययीभावाद् भवे इकण् स्यात् । पारिग्रामिकः , आनुग्रामिकः ॥१३८॥

**उपाज्जानु-नीवि-कर्णात् प्रायेण ।६।३।१३९॥**

उपाद् ये जान्वादयस्तदन्तादव्ययीभावादिकण् स्यात् , प्रायेण तत्र भवे । औपजानुकः सेवकः , औपनीविकं ग्रीवादाम , औपकर्णिकः सूचकः ॥१३९॥

**रूढावन्तःपुरादिकः ।६।३।१४०॥**

अस्मात् तत्र भवे इकः स्यात् , रूढौ गम्यायाम् । अन्तःपुरिका । रूढाविति किम् ? आन्तःपुरः ॥१४०॥

**कर्ण-ललाटात् कल् ।६।३।१४१॥**

आभ्यां तत्र भवे कल् स्यात् , तदन्तस्य रूढौ । कर्णिका कर्णाभरणम् , ललाटिका ललाटमण्डनम् ॥१४१॥

**तस्य व्याख्याने च ग्रन्थात् ।६।३।१४२॥**

तस्येति षष्ठ्यन्ताद् व्याख्यानेऽर्थे , सप्तम्यन्ताच्च भवे ग्रन्थार्थाद् यथाविहितं प्रत्ययः स्यात् । कार्त्तम् , प्रातिपदिकीयं व्याख्यानं भवं वा ॥१४२॥

**प्रायो बहुस्वरादिकण् ।६।३।१४३॥**

बहुस्वराद् ग्रन्थार्थात् तस्य व्याख्याने , तत्र भवे च प्राय इकण् स्यात् ।

षात्वणत्विकम् । प्रायोग्रहणात् सांहितम् ॥१४३॥

**ऋगृद्-द्विस्वर-यागेभ्यः ।६।३।१४४॥**

ऋच ऋदन्ताद् द्विस्वराद् यागार्थेभ्यश्च ग्रन्थवृत्तिभ्यस्तस्य व्याख्याने तत्र भवे चेकण् स्यात् । आर्चिकम् , चातुर्होतृकम् , आङ्गिकम् , राजसूयिकम् ॥१४४॥

**ऋषेरध्याये ।६।३।१४५॥**

ऋष्यर्थाद् ग्रन्थवृत्तेस्तस्य व्याख्याने तत्र भवे चाऽध्याये इकण् स्यात् । वाशिष्ठिकोऽध्यायः । अध्याय इति किम् ? वाशिष्ठी ऋक् ॥१४५॥

**पुरोडाश-पौरोडाशादिकेकटौ ।६।३।१४६॥**

आभ्यां ग्रन्थार्थाभ्यां तस्य व्याख्याने तत्र भवे चेक इकट् च स्यात् । पुरोडाशिका , पुरोडाशिकी ; पौरोडाशिका , पौरोडाशिकी ॥१४६॥

**छन्दसो यः ।६।३।१४७॥**

अस्माद् ग्रन्थार्थात् तस्य व्याख्याने तत्र भवे च यः स्यात् । छन्दस्यः ॥१४७॥

**शिक्षादेश्चाण् ।६।३।१४८॥**

एभ्यो ग्रन्थार्थेभ्यः छन्दसश्च तस्य व्याख्याने तत्र भवे चाऽण् स्यात् । शैक्षः , आर्गयनः , छान्दसः ॥१४८॥

**तत आगते ।६।३।१४९॥**

तत इति पञ्चम्यन्ताद् आगतेऽर्थे यथाविहितमण्-एयणादयः स्युः । स्रौघ्नः , गव्यः , नादेयः , ग्राम्यः ॥१४९॥

**विद्या-योनिसम्बन्धादकञ् ।६।३।१५०॥**

विद्याकृतो योनिकृतश्च सम्बन्धो येषां तदर्थात् पञ्चम्यन्तादाऽऽगतेऽर्थेऽकञ् स्यात् । आचार्यकम् , पैतामहकम् ॥१५०॥

**पितुर्यो वा ।६।३।१५१॥**

पितुर्योनिसम्बन्धार्थात् पञ्चम्यन्तादागते यो वा स्यात् । पित्र्यम् , पैतृकम् ॥१५१॥

**ऋत इकण् ।६।३।१५२॥**

ऋदन्ताद् विद्या-योनिसम्बन्धार्थात् तत आगते इकण् स्यात् । हौतृकम् ,

मातृकम् ॥१५२॥

**आयस्थानात् ।६।३।१५३॥**

स्वामिग्राह्यो भागो यत्रोत्पद्यते तदर्थात् तत आगते इकण् स्यात् । आतरिकम् ॥१५३॥

**शुण्डिकादेरण् ।६।३।१५४॥**

एभ्यस्तत आगतेऽण् स्यात् । शौण्डिकम् , औदपानम् ॥१५४॥

**गोत्रादङ्कवत् ।६।३।१५५॥**

गोत्रार्थात् तत आगतेऽङ्के इव प्रत्ययः स्यात् । बैदम् , औपगवकम् ॥१५५॥

**नृ-हेतुभ्यो रूप्य-मयटौ वा ।६।३।१५६॥**

पुमर्थाद् हेत्वर्थाच्च तत आगते एतौ वा स्याताम् । चैत्ररूप्यम् , चैत्रमयम् , चैत्रीयम् ; समरूप्यम् , सममयम् , समीयम् ॥१५६॥

**प्रभवति ।६।३।१५७॥**

पञ्चम्यन्तात् प्रागुपलभ्ये यथाविहितं प्रत्ययाः स्युः । हैमवती गङ्गा ॥१५७॥

**वैडूर्यः ।६।३।१५८॥**

विडूरात् ततः प्रभवति ञ्यः स्यात् । वैडूर्यो मणिः ॥१५८॥

**त्यदादेर्मयट् ।६।३।१५९॥**

एभ्यस्ततः प्रभवति मयट् स्यात् । तन्मयम् , भवन्मयी ॥१५९॥

**तस्येदम् ।६।३।१६०॥**

तस्येति षष्ठ्यन्ताद् इदमित्यर्थे यथाविहितं प्रत्ययाः स्युः । माथुरम् , दैत्यम् , कालेयम् , नादेयम् , पारीणः , भानवीयः ॥१६०॥

**हल-सीरादिकण् ।६।३।१६१॥**

आभ्यां तस्येदमर्थे इकण् स्यात् । हालिकम् , सैरिकम् ॥१६१॥

**समिध आधाने टेन्यण् ।६।३।१६२॥**

समिधस्तस्येदमाधानमित्यर्थे टेन्यण् स्यात् । सामिधेन्यो मन्त्रः ॥१६२॥

**विवाहे द्वन्द्वादकल् ।६।३।१६३॥**

द्वन्द्वात् तस्येदमर्थे विवाहेऽकल् स्यात् । अत्रिभरद्वाजिका ॥१६३॥

**अदेवासुरादिभ्यो वैरे ।६।३।१६४।।**

देवासुरादिवर्जाद् द्वन्द्वात् तस्येदमर्थे वैरे अकल् स्यात् । बाभ्रवशालङ्कायनिका । अदेवादीति किम् ? दैवाऽसुरम् , राक्षोऽसुरम् ।।१६४।।

**नटान्नृत्ते ञ्यः ।६।३।१६५।।**

नटात् तस्येदमर्थे नृत्ते ञ्यः स्यात् । नाटचम् ।।१६५।।

**छन्दोगौक्थिक-याज्ञिक-बह्वृचाच्च धर्मा-ऽऽम्नाय-संघे ।६।३।१६६।।**

एभ्यो नटाच्च तस्येदमर्थे धर्मादौ ञ्यः स्यात् । छान्दोग्यं धर्मादि , औक्थिक्यम् , याज्ञिक्यम् , बाह्वृच्यम् , नाटचम् ।।१६६।।

**आथर्वणिकादणिकलुक् च ।६।३।१६७।।**

अस्मात् तस्येदमर्थे धर्मादौ अण् स्यात् , इकलुक् च । आथर्वणः ।।१६७।।

**चरणादकञ् ।६।३।१६८।।**

**चरणः** कठादिः , तदर्थात् तस्येदमर्थे धर्मादावकञ् स्यात् । काठको धर्मादिः , चारककः ।।१६८।।

**गोत्राददण्डमाणव-शिष्ये ।६।३।१६९।।**

गोत्रार्थात् तस्येदमर्थे दण्डमाणव-शिष्यवर्जेऽकञ् स्यात् । औपगवकम् । अदण्डेत्यादि किम् ? काण्वा दण्डमाणवाः शिष्या वा ।।१६९।।

**रैवतिकादेरीयः ।६।३।१७०।।**

एभ्यो गोत्राऽर्थेभ्यस्तस्येदमर्थे[1] ईयः स्यात् । रैवतिकीयाः शिष्याः , गौरग्रीवीयं शकटम् ।।१७०।।

**कौपिञ्जल-हास्तिपदादण् ।६।३।१७१।।**

आभ्यां गोत्रार्थाभ्यां तस्येदमर्थेऽण् स्यात् । कौपिञ्जलाः शिष्याः , हास्तिपदाः ।।१७१।।

**सङ्घ-घोषा-ऽङ्क-लक्षणेऽञ्-यञिञः ।६।३।१७२।।**

एतदन्ताद् गोत्रार्थात् तस्येदमर्थे सङ्घादावण् स्यात् । बैदः सङ्घादिः , बैदं लक्षणम् , एवं गार्गः , गार्गम् , दाक्षः , दाक्षम् ।।१७२।।

---

१. °दमित्यर्थे J2 ।।

**शाकलादकञ् च ।६।३।१७३।।**

अस्मात् तस्येदमर्थे सङ्घादावकञ्[१] अण् च स्यात् । शाकलकः , शाकलः सङ्घादिः , शाकलकम् , शाकलं लक्षणम् ।।१७३।।

**गृहेऽग्नीधो रण् धश्च ।६।३।१७४।।**

अग्नीधस्तस्येदमर्थे गृहे रण् स्यात् , ध् च । आग्नीध्रम् ।।१७४।।

**रथात् साऽऽदेश्च वोढ्रङ्गे ।६।३।१७५।।**

रथात् केवलात् सपूर्वाच्च तस्येदमर्थे रथस्य वोढरि अङ्गे एव च प्रत्ययः स्यात् । रथ्योऽश्वः , रथ्यं चक्रम् , द्विरथोऽश्वः , आश्वरथं चक्रम् ।।१७५।।

**यः ।६।३।१७६।।**

रथात् केवलात् सादेश्च तस्येदमर्थे यः स्यात् । रथ्यः , द्विरथः ।।१७६।।

**पत्रपूर्वादञ् ।६।३।१७७।।**

वाहनपूर्वाद् रथात् तस्येदमर्थेऽञ् स्यात् । आश्वरथं चक्रम् ।।१७७।।

**वाहनात् ।६।३।१७८।।**

वाहनार्थात् तस्येदमर्थेऽञ् स्यात् । औष्ट्रो रथः , [हास्तः][२] ।।१७८।।

**वाह्य-पथ्युपकरणे ।६।३।१७९।।**

वाहनादुक्तः प्रत्ययो वाह्यादावेव स्यात् । आश्वो रथः पन्था वा , आश्वं पल्ययनम् , आश्वी कशा । अन्यत्र तु वाक्यमेव , अश्वानां घासः ।।१७९।।

**वहेस्तुरिश्चादिः ।६।३।१८०।।**

वहेर्यस्तृशब्दस्तदन्तात् तस्येदमर्थेऽञ् स्यात् , तुरादिरिश्च । सांवहित्रम् ।।१८०।।

**तेन प्रोक्ते ।६।३।१८१।।**

**तेने**ति टान्तात् प्रोक्ते यथाविहितं प्रत्ययाः स्युः । भाद्रबाहवं शास्त्रम् , पाणिनीयम् , बार्हस्पत्यम् ।।१८१।।

**मौदादिभ्यः ।६।३।१८२।।**

---

१. संघादावणकञ्च स्यात् । शाकलः शाकलकः संघादिः । शाकलं शाकलकं लक्षणम् P3 विना ।। २. [ ] P3सं० मध्ये वर्तते ।।

एभ्यस्तेन प्रोक्ते यथाविहितमण् स्यात् । मौदेन प्रोक्तं वेदं विदन्त्यधीयते वा मौदाः , पैप्पलादाः ॥१८२॥

**कठादिभ्यो वेदे लुप् ।६।३।१८३॥**

एभ्यः प्रोक्ते वेदे प्रत्ययस्य लुप् स्यात् । कठाः , चरकाः ॥१८३॥

**तित्तिरि-वरतन्तु-खण्डिकोखादीयण् ।६।३।१८४॥**

एभ्यस्तेन प्रोक्ते वेदे ईयण् स्यात् । तैत्तिरीयाः , वारतन्तवीयाः , खाण्डिकीयाः , औखीयाः ॥१८४॥

**छगलिनो णेयिन् ।६।३।१८५॥**

तेन प्रोक्ते वेदे णेयिन् स्यात् । छागलेयिनः ॥१८५॥

**शौनकादिभ्यो णिन् ।६।३।१८६॥**

तेन प्रोक्ते वेदे णिन् स्यात् । शौनकिनः , शाङ्गरविणः ॥१८६॥

**पुराणे कल्पे ।६।३।१८७॥**

टान्तात् प्रोक्ते पुराणे कल्पे णिन् स्यात् । पैङ्गी कल्पः ॥१८७॥

**काश्यप-कौशिकाद् वेदवच्च ।६।३।१८८॥**

आभ्यां तेन प्रोक्ते पुराणे कल्पे णिन् स्यात् , वेदवच्च कार्यमस्मिन् । काश्यपिनः , कौशिकिनः , काश्यपको धर्मः ॥१८८॥

**शिलालि-पाराशर्यान्नट-भिक्षुसूत्रे ।६।३।१८९॥**

आभ्यां तेन प्रोक्ते यथासंख्यं नटसूत्रे भिक्षुसूत्रे च णिन् स्यात् , वेदवच्च कार्यमस्मिन् । शैलालिनो नटाः , पाराशरिणो भिक्षवः ॥१८९॥

**कृशाश्व-कर्मन्दादिन् ।६।३।१९०॥**

आभ्यां तेन प्रोक्ते यथासंख्यं नटसूत्रे भिक्षुसूत्रे च इन् स्यात् , वेदवच्च कार्यमस्मिन् । कृशाश्विनो नटाः , कर्मन्दिनो भिक्षवः ॥१९०॥

**उपज्ञाते ।६।३।१९१॥**

प्रागुपदेशाद् विना वा ज्ञाते टान्ताद् यथाविहितं प्रत्ययः स्यात् । पाणिनीयं शास्त्रम् ॥१९१॥

**कृते ।६।३।१९२॥**

टान्तात् कृतेऽर्थे यथाविहितं प्रत्ययाः स्युः । शैवो ग्रन्थः , सिद्धसेनीयः स्तवः ॥१९२॥

**नाम्नि मक्षिकादिभ्यः ।६।३।१९३॥**

एभ्यष्टान्तेभ्यो यथाविहितं नाम्नि [कृते] प्रत्ययः स्यात् । माक्षिकं मधु , सारघम् ॥१९३॥

**कुलालादेरकञ् ।६।३।१९४॥**

एभ्यस्तेन कृतेऽकञ् स्यात् , नाम्नि । कौलालकं घटादिभाण्डम् , वारुटकं शूर्पपिटकादि[1] ॥१९४॥

**सर्वचर्मण ईनेनञौ ।६।३।१९५॥**

तेन कृते नाम्नि स्याताम् । सर्वचर्मीणः , सार्वचर्मीणः ॥१९५॥

**उरसो या-ऽणौ ।६।३।१९६॥**

तेन कृते स्याताम् , नाम्नि । उरस्यः , औरसः ॥१९६॥

**छन्दस्यः ।६।३।१९७॥**

छन्दसस्तेन कृते यो नाम्नि निपात्यः ॥१९७॥

**अमोऽधिकृत्य ग्रन्थे ।६।३।१९८॥**

द्वितीयान्तादधिकृत्य कृते ग्रन्थे यथाविहितं प्रत्ययः स्यात् । भाद्रः ॥१९८॥

**ज्योतिषम् ।६।३।१९९॥**

ज्योतिषोऽमोऽधिकृत्य कृते ग्रन्थेऽण् , वृद्ध्यभावश्च निपात्यः ॥१९९॥

**शिशुक्रन्दादिभ्य ईयः ।६।३।२००॥**

एभ्योऽमोऽधिकृत्य कृते[2] ग्रन्थे ईयः स्यात् । शिशुक्रन्दीयः , यमसभीयो ग्रन्थः ॥२००॥

**द्वन्द्वात् प्रायः ।६।३।२०१॥**

द्वन्द्वादमोऽधिकृत्य कृते ग्रन्थे प्राय ईयः स्यात् । वाक्यपदीयम् । प्रायः[3] किम् ? दैवासुरम् ॥२०१॥

---

१. पिटिकादि J1,2,3 ॥ २. कृतेऽर्थे पा२ । ग्रन्थे कृतेऽर्थे J1 । अमोऽर्थे P3मू०, अमोऽधिकृत्य कृते ग्रन्थेऽर्थे P3सं० ॥ ३. प्राय इति किम् P3सं० ॥

## अभिनिष्क्रामति द्वारे ।६।३।२०२।।

अमन्ताद् द्वा[1]रे निर्गच्छत्यर्थे यथाविहितं प्रत्ययः स्यात् । माथुरम् , नादेयम् , राष्ट्रियं द्वारम् ।।२०२।।

## गच्छति पथि दूते ।६।३।२०३।।

अमन्तात् पथि दूते च गच्छत्यर्थे यथोक्तं प्रत्ययः स्यात् । स्रौघ्नः पन्था दूतो वा , ग्राम्यः ।।२०३।।

## भजति ।६।३।२०४।।

अमो भजत्यर्थे यथोक्तं प्रत्ययः स्यात् । स्रौघ्नः , राष्ट्रियः ।।२०४।।

## महाराजादिकण् ।६।३।२०५।।

अतोऽमो भजतीकण् स्यात् । माहाराजिकः ।।२०५।।

## अचित्तादेशकालात् ।६।३।२०६।।

देशकालवर्जं यदचेतनं तदर्थादमो भजतीकण् स्यात् । आपूपिकः । अचित्तादिति किम् ? दैवदत्तः । अदेशेत्यादि किम् ? स्रौघ्नः , हैमनः ।।२०६।।

## वासुदेवा-ऽर्जुनादकः ।६।३।२०७।।

आभ्याममन्ताभ्यां भजत्यकः स्यात् । वासुदेवकः , अर्जुनकः ।।२०७।।

## गोत्र-क्षत्रियेभ्योऽकञ् प्रायः ।६।३।२०८।।

गोत्रार्थात् क्षत्रियार्थाच्चाऽमन्ताद् भजत्यकञ् प्रायः स्यात् । औपगवकः , नाकुलकः । प्रायः किम् ? पाणिनीयः ।।२०८।।

## सरूपाद् द्रेः सर्वं राष्ट्रवत् ।६।३।२०९।।

राष्ट्रक्षत्रियार्थात् सरूपाद् यो द्रिरुक्तः तदन्तस्याऽमो भजत्यर्थे सर्वं प्रकृतिः प्रत्ययश्च राष्ट्रस्येव स्यात् । वार्ज्यं माद्रं पाण्ड्यं वा भजति वृजिकः , मद्रकः , पाण्डवकः । सरूपादिति किम् ? पौरवीयम् ।।२०९।।

## टस्तुल्यदिशि ।६।३।२१०।।

ट इति तृतीयान्तात् तुल्यदिक्केऽर्थे यथोक्तं प्रत्ययः स्यात् । सौदामनी विद्युत् ।।२१०।।

---

१. द्वारे भिनिर्ग° J3 ।।

**तसिः ।६।३।२११।।**

टाऽन्तात् तुल्यदिक्के तसिः स्यात् । सुदामतो विद्युत् ।।२११।।

**यश्चोरसः ।६।३।२१२।।**

अतः टाऽन्तात् तुल्यदिक्के य-तसी स्याताम् । उरस्यः , उरस्तः ।।२१२।।

**सेर्निवासादस्य ।६।३।२१३।।**

**सेः**रिति प्रथमान्तान्निवासार्थाद् , **अस्ये**ति षष्ठ्यर्थे यथोक्तं[1] प्रत्ययः स्यात् । स्रौघ्नः , नादेयः ।।२१३।।

**आभिजनात् ।६।३।२१४।।**

**अभिजनः** पूर्वबान्धवाः , तन्निवासार्थात् स्यन्तात् षष्ठ्यर्थे यथोक्तं प्रत्ययः स्यात् । स्रौघ्नः , राष्ट्रियः ।।२१४।।

**शण्डिकादेर्ण्यः ।६।३।२१५।।**

अस्मात् स्यन्तादाभिजननिवासार्थाद् अस्येत्यर्थे ण्यः स्यात् । शाण्डिक्यः ; कौचवार्यः ।।२१५।।

**सिन्ध्वादेरञ् ।६।३।२१६।।**

अस्मात् स्यन्तादाभिजननिवासार्थाद् षष्ठ्यर्थेऽञ् स्यात् । सैन्धवः , वार्णवः ।।२१६।।

**सलातुरादीयण् ।६।३।२१७।।**

अस्मात् स्यन्तादाभिजननिवासार्थात् षष्ठ्यर्थे ईयण् स्यात् । सालातुरीयः पाणिनिः ।।२१७।।

**तूदी-वर्मत्या एयण् ।६।३।२१८।।**

आभ्यां स्यन्ताभ्यामाभिजननिवासार्थाभ्यां षष्ठ्यर्थे एयण् स्यात् । तौदेयः , वार्मतेयः ।।२१८।।

**गिरेरीयोऽस्त्राजीवे ।६।३।२१९।।**

गिरिर्य आभिजनो निवासस्तदर्थात् स्यन्तात् षष्ठ्यर्थेऽस्त्राजीवे ईयः स्यात् । हृद्गोलीयः ।।२१९।।

---

१. यथाविहितं J2 ।।

[इत्याचार्यश्रीहेमचन्द्रविरचितायां
**सिद्धहेमचन्द्रा**भिधानस्वोपज्ञशब्दानुशासनलघुवृत्तौ]
षष्ठस्याध्यायस्य तृतीयः पादः समाप्तः[1] ॥६।३॥

जयस्तम्भान् सीमन्यनुजलधिवेलं निहितवान् ,
वितानैर्ब्रह्माण्डं शुचिगुणगरिष्ठैः पिहितवान् ।
यशस्तेजोरूपैरलिपत जगन्त्यर्घघुसृणैः ,
कृतो यात्रानन्दो विरमति न किं **सिद्ध**नृपतिः ? ॥२३॥

१. **समाप्तः** पा२ J2 विना नास्ति ॥

## [ चतुर्थ पादः ]

**इकण् ।६।४।१।।**

आ पादान्ताद् यदनुक्तं स्यात् तत्राऽयमधिकृतो ज्ञेयः ।।१।।

**तेन जित-जयद्-दीव्यत्-खनत्सु ।६।४।२।।**

**तेने**ति टान्तादेष्वर्थेष्विकण् स्यात् । आक्षिकम् , आक्षिकः , आभ्रिकः ।।२।।

**संस्कृते ।६।४।३।।**

टान्तात् संस्कृते इकण् स्यात् । दाधिकम् , वैद्यिकः ।।३।।

**कुलत्थ-कोपान्त्यादण् ।६।४।४।।**

कुलत्थात् कोपान्त्याच्च तेन संस्कृतेऽण् स्यात् । कौलत्थम् , तैत्तिडीकम् ।।४।।

**संसृष्टे ।६।४।५।।**

टान्तात् संसृष्टेऽर्थे इकण् स्यात् । दाधिकम् ।।५।।

**लवणादः ।६।४।६।।**

अस्मात् तेन संसृष्टेऽर्थे अः स्यात् । लवणः सूपः ।।६।।

**चूर्ण-मुद्गाभ्यामिनणौ ।६।४।७।।**

आभ्यां तेन संसृष्टे यथासंख्यमिनणौ स्याताम् । चूर्णिनोऽपूपाः , मौद्गी यवागूः ।।७।।

**व्यञ्जनेभ्य उपसिक्ते ।६।४।८।।**

**व्यञ्जनं** सूपादि , तदर्थाट्टान्तादुपसिक्ते इकण् स्यात् । तैलिकं शाकम् ।।८।।

**तरति ।६।४।९।।**

टान्तात् तरत्यर्थे इकण् स्यात् । औडुपिकः ।।९।।

**नौ-द्विस्वरादिकः ।६।४।१०।।**

नावो द्विस्वराच्च टान्तात् तरत्यर्थे इकः स्यात् । नाविका , बाहुका ।।१०।।

**चरति ।६।४।११।।**

टान्ताच्चरतीकण् स्यात् । हास्तिकः , दाधिकः ।।११।।

**पर्पादेरिकट् ।६।४।१२।।**

अस्माट्टान्ताच्चरति इकट् स्यात् । पर्पिकी , अश्विकी ।।१२।।

**पदिकः ।६।४।१३॥**

पादाच्चरतीकट् स्यात् , पच्चाऽस्य । पदिकः ॥१३॥

**श्वगणाद् वा ।६।४।१४॥**

अस्माच्चरतीकट् वा स्यात् । श्वगणिकी , श्वागणिकः ॥१४॥

**वेतनादेर्जीवति ।६।४।१५॥**

अस्माट्टान्ताज्जीवतीकण् स्यात् । वैतनिकः , वाहिकः ॥१५॥

**व्यस्ताच्च क्रय-विक्रयादिकः ।६।४।१६॥**

अस्मात् समस्ताद् व्यस्ताच्च तेन जीवति इकः स्यात् । क्रयविक्रयिकः , क्रयिकः , विक्रयिकः ॥१६॥

**वस्नात् ।६।४।१७॥**

वस्नात् तेन जीवतीकः स्यात् । वस्निकः ॥१७॥

**आयुधादीयश्च ।६।४।१८॥**

अस्मात् तेन जीवति ईय इकश्च स्यात् । आयुधीयः , आयुधिकः ॥१८॥

**व्रातादीनञ् ।६।४।१९॥**

व्रातात् तेन जीवति ईनञ् स्यात् । व्रातीनाभार्यः ॥१९॥

**निर्वृत्तेऽक्षद्यूतादेः ।६।४।२०॥**

अस्माट्टान्तान्निर्वृत्ते इकण् स्यात् । आक्षद्यूतिकम् , जाङ्घाप्रहतिकं वैरम् ॥२०॥

**भावादिमः ।६।४।२१॥**

भावार्थात् तेन निर्वृत्ते इमः स्यात् । पाकिमम् ॥२१॥

**याचिता-ऽपमित्यात् कण् ।६।४।२२॥**

आभ्यां तेन निर्वृत्ते कण् स्यात् । याचितकम् , आपमित्यकम् ॥२२॥

**हरत्युत्सङ्गादेः ।६।४।२३॥**

अस्माट्टान्ताद् हरति इकण् स्यात् । औत्सङ्गिकः , औत्तुपिकः ॥२३॥

**भस्त्रादेरिकट् ।६।४।२४॥**

अस्माट्टान्ताद् हरति इकट् स्यात् । भस्त्रिकी , भरटिकी ॥२४॥

**विवध-वीवधाद् वा ।६।४।२५॥**

आभ्यां तेन हरतीकट् वा स्यात् । विवधिकी , वीवधिकी , वैवधिकः[1] ॥२५॥

**कुटिलिकाया अण् ।६।४।२६॥**

अस्माट्टान्ताद् हरति अण् स्यात् । कौटिलिकः कर्मारादिः ॥२६॥

**ओजस्-सहो-ऽम्भसो वर्तते ।६।४।२७॥**

एभ्यष्टान्तेभ्यो वर्तते इत्यर्थे इकण् स्यात् । औजसिकः , साहसिकः , आम्भसिकः ॥२७॥

**तं प्रत्यनोर्लोमेप-कूलात् ।६।४।२८॥**

तमिति द्वितीयान्तात् प्रत्यनुपूर्वलोमेपकूलान्ताद् वर्तते इत्यर्थे इकण् स्यात् । प्रातिलोमिकः , आनुलोमिकः , प्रातीपिकः , आन्वीपिकः , प्रातिकूलिकः , आनुकूलिकः ॥२८॥

**परेर्मुख-पार्श्वात् ।६।४।२९॥**

परिपूर्वमुख-पार्श्वान्ताद् द्वितीयान्ताद् वर्तते इत्यर्थे इकण् स्यात् । पारिमुखिकः , पारिपार्श्विकः ॥२९॥

**रक्षदुञ्छतोः ।६।४।३०॥**

द्वितीयान्तादनयोरिकण् स्यात् । नागरिकः , बादरिकः ॥३०॥

**पक्षि-मत्स्य-मृगार्थाद् घ्नति ।६।४।३१॥**

पक्ष्याद्यर्थाद् द्वितीयान्ताद् घ्नत्यर्थे इकण् स्यात् । पाक्षिकः , मात्स्यिकः , मार्गिकः ॥३१॥

**परिपन्थात् तिष्ठति च ।६।४।३२॥**

अस्माद् द्वितीयान्तात् तिष्ठति घ्नति चेकण् स्यात् । पारिपन्थिकश्चौरः ॥३२॥

**परिपथात् ।६।४।३३॥**

अस्माद् द्वितीयान्तात् तिष्ठति इकण् स्यात् । पारिपथिकः ॥३३॥

**अवृद्धेर्गृह्णति गर्ह्ये ।६।४।३४॥**

द्वितीयान्ताद् वृद्धिवर्जात् निन्द्ये गृह्णति इकण् स्यात् । द्वैगुणिकः ॥३४॥

**कुसीदादिकट् ।६।४।३५॥**

---

१. वैवधिकी J2 ॥

अस्माद् द्वितीयान्तान्निन्द्ये गृह्णति इकट् स्यात् । कुसीदिकी ॥३५॥

**दशैकादशादिकश्च ।६।४।३६॥**

अस्माद् द्वितीयान्तान्निन्द्ये गृह्णति इक इकट् च स्यात् । दशैकादशिका , दशैकादशिकी ॥३६॥

**अर्थ-पद-पदोत्तर-ललाम-प्रतिकण्ठात् ।६।४।३७॥**

अर्थात् , पदात् , पदशब्द उत्तरपदं यस्य तस्मात् , ललाम-प्रतिकण्ठाभ्यां च द्वितीयान्ताभ्यां गृह्णति इकण् स्यात् । आर्थिकः , पादिकः , पौर्वपदिकः , लालामिकः , प्रातिकण्ठिकः ॥३७॥

**परदारादिभ्यो गच्छति ।६।४।३८॥**

एभ्यो द्वितीयान्तेभ्यो गच्छत्यर्थे इकण् स्यात् । पारदारिकः , गौरुदारिकः ॥३८॥

**प्रतिपथादिकश्च ।६।४।३९॥**

अस्माद् द्वितीयान्ताद् गच्छति इक इकण् च स्यात् । प्रतिपथिकः , प्रातिपथिकः ॥३९॥

**माथोत्तरपद-पदव्याक्रन्दाद् धावति ।६।४।४०॥**

माथ उत्तरपदं यस्य तस्मात् , पदव्याक्रन्दाभ्यां च द्वितीयान्ताभ्यां धावत्यर्थे इकण् स्यात् । दाण्डमाथिकः , पादविकः , आक्रन्दिकः ॥४०॥

**पश्चात्यनुपदात् ।६।४।४१॥**

पश्चादर्थादनुपदाद् द्वितीयान्ताद् धावति इकण् स्यात् । आनुपदिकः ॥४१॥

**सुस्नातादिभ्यः पृच्छति ।६।४।४२॥**

एभ्यो द्वितीयान्तेभ्यः पृच्छत्यर्थे इकण् स्यात् । सौस्नातिकः , सौखरात्रिकः ॥४२॥

**प्रभूतादिभ्यो ब्रुवति ॥६।४।४३॥**

एभ्यो द्वितीयान्तेभ्यो ब्रुवत्यर्थे इकण् स्यात् । प्राभूतिकः , पार्याप्तिकः ॥४३॥

**माशब्द इत्यादिभ्यः ।६।४।४४॥**

एभ्यो ब्रुवति इकण् स्यात् । माशब्दिकः , कार्यशब्दिकः ॥४४॥

**शाब्दिक-दार्दरिक-लालाटिक-कौक्कुटिकम् ।६।४।४५।।**

एते इकणन्ता निपात्यन्ते । शाब्दिको वैयाकरणः , दार्दरिको वादित्रकृत् , लालाटिकः प्रमत्तः सेवाकृत् , कौक्कुटिको भिक्षुः ।।४५।।

**समूहार्थात् समवेते ।६।४।४६।।**

अस्माद् द्वितीयान्तात् समवेतेऽर्थे इकण् स्यात् । सामूहिकः , सामाजिकः ।।४६।।

**पर्षदो ण्यः ।६।४।४७।।**

अस्माद् द्वितीयान्तात् समवेते ण्यः स्यात् । पार्षद्यः ।।४७।।

**सेनाया वा ।६।४।४८।।**

अस्माद् द्वितीयान्तात् समवेते ण्यो वा स्यात् । सैन्यः , सैनिकः ।।४८।।

**धर्मा-ऽधर्माच्चरति ।६।४।४९।।**

आभ्यां द्वितीयान्ताभ्यां चरत्यर्थे इकण् स्यात् । धार्मिकः , आधर्मिकः ।।४९।।

**षष्ठ्या धर्म्ये ।६।४।५०।।**

षष्ठ्यन्ताद् धर्मादनपेते इकण् स्यात् । शौल्कशालिकम् ।।५०।।

**ऋन्नरादेरण् ।६।४।५१।।**

ऋदन्तान्नरादेश्च षष्ठ्यन्ताद् धर्म्येऽर्थेऽण् स्यात् । नारम् , नरस्य धर्म्यं नारम् , माहिषम् ।।५१।।

**विभाजयितृ-विशसितुर्णीड्लुक् च ।६।४।५२।।**

आभ्यां षष्ठ्यन्ताभ्यां धर्म्येऽण् स्यात् , तद्योगे च विभाजयितुर्णिलुक् विशसितुश्चेड्लुक् । वैभाजित्रम् , वैशस्त्रम् ।५२।।

**अवक्रये ।६।४।५३।।**

षष्ठ्यन्तादवक्रये भाटकेऽर्थे इकण् स्यात् । आपणिकः ।।।५३।।

**तदस्य पण्यम् ।६।४।५४।।**

**तद**िति प्रथमान्ताद् विक्रेयार्थाद् **अस्ये**ति षष्ठ्यर्थे इकण् स्यात् । आपूपिकः ।।५४।।

**किशरादेरिकट् ।६।४।५५।।**

एभ्यस्तदस्य पण्यमिति विषये इकट् स्यात् । किशरिकी , तगरिकः ॥५५॥

**शलालुनो वा ।६।४।५६॥**

अस्मात् तदस्य पण्यमिति विषये इकट् वा स्यात् । शलालुकी , शालालुकी ॥५६॥

**शिल्पम् ।६।४।५७॥**

प्रथमान्तादस्येत्यर्थे इकण् स्यात् , तच्छिल्पं चेत् । नार्त्तिकः ॥५७॥

**मड्डुक-झर्झराद् वाऽण् ।६।४।५८॥**

आभ्यां तदस्य शिल्पमिति विषयेऽण् वा स्यात् । माड्डुकः , माड्डुकिकः ; झार्झरः , झार्झरिकः ॥५८॥

**शीलम् ।६।४।५९॥**

प्रथमान्तात् शीलार्थात् षष्ठ्यर्थे इकण् स्यात् । आपूपिकः ॥५९॥

**अङ्स्थाच्छत्राऽऽदेरञ् ।६।४।६०॥**

अङन्तात् स्थः , छत्रादेश्च तदस्य शीलमिति विषयेऽञ् स्यात् । आस्थः , छात्रः , तापसः ॥६०॥

**तूष्णीकः ।६।४।६१॥**

तूष्णीमस्तदस्य शीलमिति विषये को मूलुक् च स्यात् । तूष्णीकः ॥६१॥

**प्रहरणम् ।६।४।६२॥**

प्रथमान्तात् षष्ठ्यर्थे इकण् स्यात् , तत् प्रहरणं चेत् । आसिकः ॥६२॥

**परश्वधाद् वाऽण् ।६।४।६३॥**

अस्मात् तदस्य प्रहरणमिति विषयेऽण् वा स्यात् । पारश्वधः , पारश्वधिकः ॥६३॥

**शक्ति-यष्टेष्टीकण् ।६।४।६४॥**

आभ्यां तदस्य प्रहरणमिति विषये टीकण् स्यात् । शाक्तीकी , याष्टीकी ॥६४॥

**वेष्ट्यादिभ्यः ।६।४।६५॥**

एभ्यस्तदस्य प्रहरणमित्यर्थे टीकण् वा स्यात् । ऐष्टीकी , ऐष्टिकी ; ऐषीकः , ऐषिकः ॥६५॥

**नास्तिका-ऽऽस्तिक-दैष्टिकम् ।६।४।६६॥**

एते तदस्येत्यर्थे इकणन्ता निपात्यन्ते । नास्तिकः , आस्तिकः , दैष्टिकः ॥६६॥

**वृत्तोऽपपाठोऽनुयोगे ।६।४।६७॥**

प्रथमान्तात् षष्ठ्यर्थे इकण् स्यात् , तच्चेदनुयोगविषये वृत्तोऽपपाठः । ऐकान्यिकः ॥६७॥

**बहुस्वरपूर्वादिकः ।६।४।६८॥**

बहुस्वरं पूर्वपदं यस्य तस्मात् प्रथमान्तात् षष्ठ्यर्थे इकः स्यात् , तच्चेत् परीक्षायां वृत्तोऽपपाठः । एकादशान्यिकः ॥६८॥

**भक्ष्यं हितमस्मै ।६।४।६९॥**

प्रथमान्ताद् अस्मै इति चतुर्थ्यर्थे इकण् स्यात् , तच्चेत् भक्ष्यं हितम् । आपूपिकः ॥६९॥

**नियुक्तं दीयते ।६।४।७०॥**

प्रथमान्तात् चतुर्थ्यर्थे इकण् स्यात् , तच्चेत् नियुक्तमव्यभिचारेण नित्यं वा दीयते । आग्रभोजनिकः ॥७०॥

**श्राणा-मांसौदनादिको वा ।६।४।७१॥**

आभ्यां तदस्मै नियुक्तं दीयते इति विषये इको वा स्यात् । श्राणिका , श्राणिकी । मांसौदनिका , मांसौदनिकी ॥७१॥

**भक्तौदनाद्वाऽणिकट् ।६।४।७२॥**

आभ्यां यथासंख्यमण्-इकटौ वा स्याताम् , तदस्मै नियुक्तं दीयते इति विषये । भाक्तः , ओदनिकी ; भाक्तिकः , औदनिकः ॥७२॥

**नवयज्ञादयोऽस्मिन् वर्तन्ते ।६।४।७३॥**

एभ्यः प्रथमान्तेभ्यो वर्त्तन्ते इत्युपाधिभ्योऽस्मिन्निति सप्तम्यर्थे इकण् स्यात् । नावयज्ञिकः , पाकयज्ञिकः ॥७३॥

**तत्र नियुक्ते ।६।४।७४॥**

तत्रेति सप्तम्यन्ताद् नियुक्तेऽर्थे इकण् स्यात् । शौल्कशालिकः ।।७४।।

**अगारान्तादिकः ।६।४।७५।।**

अस्मात् तत्र नियुक्ते इकः स्यात् । देवागारिकः ।।७५।।

**अदेश-कालादध्यायिनि ।६।४।७६।।**

अध्ययनस्य यौ प्रतिषिद्धौ देश-कालौ तदर्थात् सप्तम्यन्तादध्यायिन्यर्थे इकण् स्यात् । आशुचिकः , सान्ध्यिकः ।।७६।।

**निकटादिषु वसति ।६।४।७७।।**

एभ्यः सप्तम्यन्तेभ्यो वसत्यर्थे इकण् स्यात् । नैकटिकः , आरण्यिको भिक्षुः , वार्क्षमूलिकः ।।७७।।

**सतीर्थ्यः ।६।४।७८।।**

समानतीर्थात् तत्र वसत्यर्थे यो निपात्यते [1][समानस्य च सभावः] । सतीर्थ्यः ।।७८।।

**प्रस्तार-संस्थान-तदन्त-कठिनान्तेभ्यो व्यवहरति ।६।४।७९।।**

प्रस्तार-संस्थानाभ्यां तदन्तेभ्यः कठिनान्ताच्च व्यवहरत्यर्थे इकण् स्यात् । प्रास्तारिकः , सांस्थानिकः , कांस्यप्रस्तारिकः , गौसंस्थानिकः , वांसकठिनिकः ।।७९।।

**संख्यादेश्चाऽऽर्हदलुचः ।६।४।८०।।**

अर्हदर्थमभिव्याप्य या प्रकृतिर्वक्ष्यते तस्याः केवलायाः संख्यापूर्वायाश्च वक्ष्यमाणः प्रत्ययः स्यादिति ज्ञेयम् , न चेत् सा लुगन्ता । चान्द्रायणिकः , द्वैचन्द्रायणिकः । अलुच इति किम् ? द्विशूर्पेण क्रीतेन क्रीतं द्विशौर्पिकम् ।।८०।।

**गोदानादीनां ब्रह्मचर्ये ।६।४।८१।।**

एभ्यः षष्ठ्यन्तेभ्यो ब्रह्मचर्येऽर्थे इकण् स्यात् । गौदानिकम् , आदित्यव्रतिकम् ।।८१।।

**चन्द्रायणं च चरति ।६।४।८२।।**

अस्माद् द्वितीयान्ताद् गोदानादेश्च चरत्यर्थे इकण् स्यात् । चान्द्रायणिकः , गौदानिकः ।।८२।।

१. [ ] P3सं० ।।

**देवव्रतादीन् डिन् ।६।४।८३।।**

एभ्यो निर्देशादेव द्वितीयान्तेभ्यश्चरत्यर्थे डिन् स्यात् । देवव्रती , महाव्रती ।।८३।।

**डकश्चाष्टाचत्वारिंशतं वर्षाणाम् ।६।४।८४।।**

वर्षाणामष्टाचत्वारिंशतो द्वितीयान्ताच्चरत्यर्थे डको डिन् च स्यात् । अष्टाचत्वारिंशकः , अष्टाचत्वारिंशी ।।८४।।

**चातुर्मास्यं तौ यलुक् च ।६।४।८५।।**

अस्माद् द्वितीयान्तात् चरत्यर्थे डक-डिनौ स्याताम् , यलुक् च । चातुर्मासकः , चातुर्मासी ।।८५।।

**क्रोश-योजनपूर्वाच्छताद् योजनाच्चाऽभिगमार्हे ।६।४।८६।।**

क्रोशपूर्वाद् योजनपूर्वाच्च शताद् योजनाच्च पञ्चम्यन्तादभिगमार्हेऽर्थे इकण् स्यात् । क्रौशशतिको मुनिः , यौजनशतिकः , यौजनिकः ।।८६।।

**तद् यात्येभ्यः ।६।४।८७।।**

**तदिति** द्वितीयान्तेभ्य **एभ्यः** क्रोशशत-योजनशत-योजनेभ्यो **याति** गच्छत्यर्थे इकण् स्यात् । क्रौशशतिकः , यौजनशतिकः , यौजनिको दूतः ।।८७।।

**पथ इकट् ।६।४।८८।।**

पथो द्वितीयान्ताद् यात्यर्थे इकट् स्यात् । पथिकी ।।८८।।

**नित्यं णः पन्थश्च ।६।४।८९।।**

पथो द्वितीयान्ताद् नित्यं यात्यर्थे णः स्यात् , पन्थ् चास्य । पान्थः[१] ।।८९।।

**शङ्कूत्तर-कान्तारा-ऽज-वारि-स्थल-जङ्गलादेस्तेनाऽऽहृते च ।६।४।९०।।**

शङ्क्वादिपूर्वपदात् पथिन्नन्तात् , तेनेति तृतीयान्तादाहृते याति चार्थे इकण् स्यात् । शाङ्कुपथिकः , औत्तरपथिकः , कान्तारपथिकः , आजपथिकः , वारिपथिकः , स्थालपथिकः , जाङ्गलपथिकः ।।९०।।

**स्थलादेर्मधुक-मरिचेऽण् ।६।४।९१।।**

स्थलपूर्वपदात् पथिन्नन्तादाहृते मधुके मरिचे चार्थेऽण् स्यात् । स्थालपथं मधुकम्

१. पान्था स्त्री, पान्थः पासं२, J3 ।।

, मरिचं वा ॥९१॥

**तुरायण-पारायणं यजमाना-ऽधीयाने ।६।४।९२॥**

आभ्यां द्वितीयान्ताभ्यां यथासंख्यं यजमाना-ऽधीयानयोरिकण् स्यात् । तौरायणिकः , पारायणिकः ॥९२॥

**संशयं प्राप्ते ज्ञेये ।६।४।९३॥**

संशयमिति द्वितीयान्तात् प्राप्ते ज्ञेयेऽर्थे इकण् स्यात् । सांशयिकोऽर्थः ॥९३॥

**तस्मै योगादेः शक्ते ।६।४।९४॥**

एभ्यस्तस्मै इति चतुर्थ्यन्तेभ्यः शक्तेऽर्थे इकण् स्यात् । यौगिकः , सान्तापिकः ॥९४॥

**योग-कर्मभ्यां योकञौ ।६।४।९५॥**

आभ्यां चतुर्थ्यन्ताभ्यां शक्तेऽर्थे यथासंख्यं योकञौ स्याताम् । योग्यः , कार्मुकम् ॥९५॥

**यज्ञानां दक्षिणायाम् ।६।४।९६॥**

एभ्यः षष्ठ्यन्तेभ्यो दक्षिणायामर्थे इकण् स्यात् । आग्निष्टोमिकी ॥९६॥

**तेषु देये ।६।४।९७॥**

यज्ञार्थेभ्यः सप्तम्यन्तेभ्यो देयेऽर्थे इकण् स्यात् । वाजपेयिकं भक्तम् ॥९७॥

**काले कार्ये च भववत् ।६।४।९८॥**

कालार्थात् सप्तम्यन्ताद् देये कार्ये चार्थे भवे इव प्रत्ययाः स्युः । यथा वर्षासु भवं वार्षिकम् , तथा कार्यं देयं च ॥९८॥

**व्युष्टादिष्वण् ।६।४।९९॥**

एभ्यः सप्तम्यन्तेभ्यो देये कार्ये चाऽण् स्यात् । वैयुष्टम् , नैत्यम् ॥९९॥

**यथाकथाचाण्णः ।६।४।१००॥**

अस्माद् देये कार्ये चार्थे णः स्यात् । याथाकथाचम् ॥१००॥

**तेन हस्ताद् यः ।६।४।१०१॥**

तेनेति तृतीयान्ताद् हस्ताद् देये कार्ये च यः स्यात् । हस्त्यम् ॥१०१॥

**शोभमाने ।६।४।१०२॥**

टान्ताच्छोभमाने इकण् स्यात् । कार्णवेष्टकिकं मुखम् ॥१०२॥

**कर्म-वेषाद् यः ।६।४।१०३॥**

आभ्यां टान्ताभ्यां शोभमानेऽर्थे यः स्यात् । कर्मण्यं शौर्यम् , वेष्यो नटः ॥१०३॥

**कालात् परिजय्य-लभ्य-कार्य-सुकरे ।६।४।१०४॥**

कालविशेषार्थाट्टान्तात् परिजय्यादावर्थे इकण् स्यात् । मासिको व्याधिः पटः चान्द्रायणं प्रासादो वा ॥१०४॥

**निर्वृत्ते ।६।४।१०५॥**

कालार्थाट्टान्ताद् निर्वृत्तेऽर्थे इकण् स्यात् । आह्निकम् ॥१०५॥

**तं भावि-भूते ।६।४।१०६॥**

**तमिति** द्वितीयान्तात् कालार्थाद् भाविनि भूते चार्थे इकण् स्यात् । मासिक उत्सवः ॥१०६॥

**तस्मै भृता-ऽधीष्टे च ।६।४।१०७॥**

**तस्मै** इति चतुर्थ्यन्तात् कालार्थाद् भृतेऽधीष्टे चार्थे इकण् स्यात् । मासिकः कर्मकरः , उपाध्यायो वा ॥१०७॥

**षण्मासादवयसि ण्येकौ ।६।४।१०८॥**

अस्मात् कालार्थात् तेन निर्वृत्ते , तं भाविनि भूते , तस्मै भृताऽधीष्टे चेति विषये ण्य इकश्च स्याद् , अवयसि गम्यमाने । षाण्मास्यः , षण्मासिकः ॥१०८॥

**समाया ईनः ।६।४।१०९॥**

अस्मात् तेन निर्वृत्ते इत्यादिपञ्चद्विषये ईनः स्यात् । समीनः ॥१०९॥

**रात्र्यहः-संवत्सराच्च द्विगोर्वा ।६।४।११०॥**

रात्र्याद्यन्तात् समान्ताच्च द्विगोस्तेन निर्वृत्त इत्यादिपञ्चद्विषये ईनो वा स्यात् । द्विरात्रीणः , द्वैरात्रिकः ; द्व्यहीनः , द्वैयह्निकः ; द्विसंवत्सरीणः , द्विसांवत्सरिकः ; द्विसमीनः , द्वैसमिकः ॥११०॥

**वर्षादश्च वा ।६।४।१११॥**

कालवाचिवर्षान्ताद् द्विगोस्तेन निर्वृत्ते इत्यादिपञ्चद्विषये अ ईनश्च वा स्यात्

। द्विवर्षः , द्विवर्षीणः , द्विवार्षिकः ॥१११॥

**प्राणिनि भूते ।६।४।११२॥**

कालार्थवर्षान्ताद् द्विगोर्भूते प्राणिन्यर्थे अः स्यात् । द्विवर्षो वत्सः । प्राणिनीति किम् ? द्विवर्षः , द्विवर्षीणः , द्विवार्षिकः सरकः ॥११२॥

**मासाद् वयसि यः ।६।४।११३॥**

मासान्ताद् द्विगोर्भूतेऽर्थे यः स्यात् , वयसि गम्ये । द्विमास्यः शिशुः । वयसीति किम् ? द्वैमासिको व्याधिः ॥११३॥

**ईनञ् च ।६।४।११४॥**

मासाद् भूतेऽर्थे ईनञ् यश्च स्यात् , वयसि गम्ये । मासीनः , मास्यः शिशुः ॥११४॥

**षण्मासाद् य-यणिकण् ।६।४।११५॥**

अस्मात् कालार्थाद् भूतेऽर्थे एते स्युः , वयसि गम्ये । षण्मास्यः , षाण्मास्यः , षाण्मासिकः शिशुः ॥११५॥

**सोऽस्य ब्रह्मचर्य-तद्वतोः ।६।४।११६॥**

**स** इति प्रथमान्तात् कालार्था**दस्येति** षष्ठ्यर्थे , ब्रह्मचर्ये ब्रह्मचारिणि चेकण् स्यात् । मासिकं ब्रह्मचर्यम् , मासिकस्तद्वान् ॥११६॥

**प्रयोजनम् ।६।४।११७॥**

प्रथमान्तात् षष्ठ्यर्थे इकण् स्यात् , प्रथमान्तं चेत् प्रयोजनम् । जैनमहिकं देवागमनम् ॥११७॥

**एकागाराच्चौरे ।६।४।११८॥**

अस्मात् तदस्य प्रयोजनमिति विषये चौरेऽर्थे इकण् स्यात् । ऐकागारिकः ॥११८॥

**चूडादिभ्योऽण् ।६।४।११९॥**

एभ्यस्तदस्य प्रयोजनमिति विषयेऽण् स्यात् । चौडं श्राद्धम् ॥११९॥

**विशाखा-ऽषाढान्मन्थ-दण्डे ।६।४।१२०॥**

आभ्यां तदस्य प्रयोजनमिति विषये यथासंख्यं मन्थे दण्डे चाऽर्थेऽण् स्यात्

। वैशाखो मन्थः , आषाढो दण्डः ॥१२०॥

**उत्थापनादेरीयः ।६।४।१२१॥**

एभ्यस्तदस्य प्रयोजनमिति विषये ईयः स्यात् । उत्थापनीयः , उपस्थापनीयः ॥१२१॥

**विशि-रुहि-पदि-पूरि-समापेरनात् सपूर्वपदात् ।६।४।१२२॥**

एभ्योऽनडन्तेभ्यः सपूर्वपदेभ्यस्तदस्य प्रयोजनमित्यर्थे ईयः स्यात् । गृहप्रवेशनीयम् , आरोहणीयम् , गोप्रपदनीयम् , प्रपापूरणीयम् , अङ्गसमापनीयम् ॥१२२॥

**स्वर्ग-स्वस्तिवाचनादिभ्यो य-लुपौ ।६।४।१२३॥**

स्वर्गादेः स्वस्तिवाचनादेश्च तदस्य प्रयोजनमित्यर्थे यथासंख्यं यो लुप् च स्यात् । स्वर्ग्यम् , आयुष्यम् , स्वस्तिवाचनम् , शान्तिवाचनम् ॥१२३॥

**समयात् प्राप्तः ।६।४।१२४॥**

समयात् प्रथमान्तात् षष्ठ्यर्थे इकण् स्यात् , चेत् समयः प्राप्तः । सामयिकं कार्यम् ॥१२४॥

**ऋत्वादिभ्योऽण् ।६।४।१२५॥**

एभ्यः प्रथमान्तेभ्यः सोऽस्य प्राप्त इत्यर्थेऽण् स्यात् । आर्त्तवं फलम् , औपवस्त्रम् ॥१२५॥

**कालाद् यः ।६।४।१२६॥**

कालात् सोऽस्य प्राप्त इत्यर्थे यः स्यात् । काल्या मेघाः ॥१२६॥

**दीर्घः ।६।४।१२७॥**

कालात् प्रथमान्तादस्येत्यर्थे इकण् स्यात् , प्रथमान्तश्चेद् दीर्घः । कालिकमृणम् ॥१२७॥

**आकालिकमिकश्चाद्यन्ते ।६।४।१२८॥**

आकालाद् इक इकण् च भवत्यर्थे स्यात् , आदिरेव यदि अन्तः । आकालिकोऽनध्यायः , पूर्वेद्युर्यस्मिन् काले प्रवृत्तोऽपरेद्युरपि आ तस्मात् कालाद् भवतीत्यर्थः ; आकालिकी , आकालिका वा विद्युत् , आजन्मकालमेव[1] स्यात् , जन्मान्तरनाशिनीत्यर्थः ॥१२८॥

१. °मेव सती जन्मान्तर° J2 ॥

## त्रिंशद्-विंशतेर्डकोऽसंज्ञायामाऽर्हदर्थे ।६।४।१२९।।

आभ्यामा अर्हदर्थाद् योऽर्थो वक्ष्यते तस्मिन् डकः स्यात् , असंज्ञाविषये । त्रिंशकम् , विंशकम् , त्रिंशकः , विंशकः । असंज्ञायामिति किम् ? त्रिंशत्कम् , विंशतिकम् ।।१२९।।

## सङ्ख्या-डतेश्चाऽशत्-ति-ष्टेः कः ।६।४।१३०।।

शदन्त-त्यन्त-ष्ट्यन्तवर्जसंख्याया डत्यन्तात् त्रिंशद्विंशतिभ्यां चाऽऽर्हदर्थे कः स्यात् । द्विकम् , कतिकम् , त्रिंशत्कम् , विंशतिकम् । अशत्तिष्टेरिति किम् ? चात्वारिंशत्कम् , साप्ततिकम् , षाष्टिकम् ।।१३०।।

## शतात् केवलादतस्मिन् येकौ ।६।४।१३१।।

शतात् केवलादाऽर्हदर्थे येकौ स्याताम् , स चेदर्थः प्रकृत्यर्थाद् नाऽभिन्नः । शत्यम् , शतिकम् । केवलादिति किम् ? द्विशतकम् । अतस्मिन्निति किम् ? शतकं स्तोत्रम् ।।१३१।।

## वाऽतोरिकः ।६।४।१३२।।

अत्वन्तसंख्याया आऽर्हदर्थे इको वा स्यात् । यावतिकम् , यावत्कम् ।।१३२।।

## कार्षापणादिकट् प्रतिश्चास्य वा ।६।४।१३३।।

अस्मादाऽर्हदर्थे इकट् स्यात् , अस्य च प्रतिर्वा । कार्षापणिकी , प्रतिकी ।।१३३।।

## अर्धात् पल-कंस-कर्षात् ।६।४।१३४।।

अर्धपूर्वात् पलाद्यन्तादाऽर्हदर्थे इकट् स्यात् । अर्धपलिकम् , अर्धकंसिकम् , अर्धकर्षिकी ।।१३४।।

## कंसा-ऽर्धात् ।६।४।१३५।।

आभ्यामाऽर्हदर्थे इकट् स्यात् । कंसिकी , अर्धिकी ।।१३५।।

## सहस्र-शतमानादण् ।६।४।१३६।।

आभ्यामाऽर्हदर्थेऽण् स्यात् । साहस्रः , शातमानः ।।१३६।।

## शूर्पाद् वाऽञ् ।६।४।१३७।।

आऽर्हदर्थे वाऽञ् स्यात् । शौर्पम् , शौर्पिकम् ।।१३७।।

**वसनात् ।६।४।१३८।।**

आऽर्हदर्थेऽञ् स्यात् । वासनम् ।।१३८।।

**विंशतिकात् ।६।४।१३९।।**

आऽर्हदर्थेऽञ् स्यात् । वैंशतिकम् ।।१३९।।

**द्विगोरीनः ।६।४।१४०।।**

विंशतिकान्ताद् द्विगोराऽर्हदर्थे ईनः स्यात् । द्विविंशतिकीनम् ।।१४०।।

**अनाम्न्यद्विः प्लुप् ।६।४।१४१।।**

द्विगोराऽर्हदर्थे जातस्य प्रत्ययस्य पित् लुप् स्यात् , न तु द्विः अनाम्नि । द्विकंसम् । अनाम्नीति किम् ? पाञ्चलोहितिकम् । अद्विरिति किम् ? द्विशूर्पेण क्रीतं द्विशौर्पिकम् ।।१४१।।

**नवाऽणः ।६।४।१४२।।**

द्विगोः परस्याऽऽर्हदर्थेऽणः पित् लुब् वा स्यात् , न तु द्विः । द्विसहस्रम् , द्विसाहस्रम् ।।१४२।।

**सुवर्ण-कार्षापणात् ।६।४।१४३।।**

एतदन्ताद् द्विगोः परस्याऽऽर्हदर्थे प्रत्ययस्य लुब् वा स्यात् , न तु द्विः । द्विसुवर्णम् , द्विसौवर्णिकम् ; द्विकार्षापणम् , द्विकार्षापणिकम् ।।१४३।।

**द्वि-त्रि-बहोर्निष्क-विस्तात् ।६।४।१४४।।**

एभ्यः परौ यौ निष्क-विस्तौ तदन्ताद् द्विगोराऽर्हदर्थे प्रत्ययस्य लुब् वा स्यात् , अद्विः । द्विनिष्कम् , द्विनैष्किकम् ; त्रिनिष्कम् , त्रिनैष्किकम् ; बहुनिष्कम् , बहुनैष्किकम् ; द्विविस्तम् , द्विवैस्तिकम् ; त्रिविस्तम् , त्रिवैस्तिकम् ; बहुविस्तम् , बहुवैस्तिकम् ।।१४४।।

**शताद् यः ।६।४।१४५।।**

शतान्ताद् द्विगोराऽर्हदर्थे यो वा स्यात् । द्विशत्यम् , द्विशतम् ।।१४५।।

**शाणात् ।६।४।१४६।।**

शाणान्ताद् द्विगोराऽर्हदर्थे यो वा स्यात् । पञ्चशाण्यम् , पञ्चशाणम् ।।१४६।।

**द्वि-त्र्यादेर्याऽण् वा ।६।४।१४७।।**

द्वित्रिपूर्वो यः शाणस्तदन्ताद् द्विगोराऽर्हदर्थे या-ऽणौ वा स्याताम्। द्विशाण्यम्, द्वैशाणम्; द्विशाणम्, त्रिशाण्यम्, त्रैशाणम्, त्रिशाणम् ॥१४७॥

**पण-पाद-माषाद् यः ।६।४।१४८॥**

पणाद्यन्ताद् द्विगोराऽर्हदर्थे यः स्यात्। द्विपण्यम्, द्विपाद्यम्[1], अध्यर्धमाष्यम् ॥१४८॥

**खारी-काकणीभ्यः कच् ।६।४।१४९॥**

एतदन्ताद् द्विगोराभ्यां चाऽऽर्हदर्थे कच् स्यात्। द्विखारीकम्, द्विकाकणीकम्, खारीकम्, काकणीकम् ॥१४९॥

**मूल्यैः क्रीते ।६।४।१५०॥**

मूल्यार्थाट्टान्तात् क्रीतेऽर्थे यथोक्तं प्रत्ययाः स्युः। प्रास्थिकम्, त्रिंशकम् ॥१५०॥

**तस्य वापे ।६।४।१५१॥**

**तस्येति** षष्ठ्यन्ताद् वापेऽर्थे यथोक्तं प्रत्ययाः स्युः। प्रास्थिकम्, खारीकम् ॥१५१॥

**वात-पित्त-श्लेष्म-सन्निपाताच्छमन-कोपने ।६।४।१५२॥**

एभ्यः षष्ठ्यन्तेभ्यः शमने कोपने चार्थे यथोक्तमिकण् स्यात्। वातिकम्, पैत्तिकम्, श्लैष्मिकम्, सान्निपातिकम् ॥१५२॥

**हेतौ संयोगोत्पाते ।६।४।१५३॥**

षष्ठ्यन्ताद् हेतावर्थे यथोक्तं प्रत्ययः स्यात्, चेद् हेतुः संयोग उत्पातो वा। शत्यः, शतिको दातृसंयोगः, सोमग्रहणिको भूमिकम्पः ॥१५३॥

**पुत्राद् येयौ ।६।४।१५४॥**

पुत्रात् षष्ठ्यन्ताद् हेतावर्थे येयौ स्याताम्, चेद्धेतुः संयोग उत्पातो वा। पुत्र्यः, पुत्रीयः ॥१५४॥

**द्विस्वर-ब्रह्मवर्चसाद् योऽसङ्ख्या-परिमाणा-ऽश्वादेः ।६।४।१५५॥**

संख्या-परिमाणा-ऽश्वादिवर्जात् द्विस्वराद् ब्रह्मवर्चसाच्च षष्ठ्यन्ताद् हेतौ संयोगे उत्पाते वा यः स्यात्। धन्यः, ब्रह्मवर्चस्यः। संख्यादिवर्जनं किम्? पञ्चकः

१. त्रिपाद्यम् P2 विना ॥

, प्रास्थिकः , [1]आश्विकः ॥१५५॥

**पृथिवी-सर्वभूमेरीश-ज्ञातयोश्चाञ् ।६।४।१५६॥**

आभ्यां षष्ठ्यन्ताभ्यामीश-ज्ञातयोरर्थयोस्तस्य हेतुः संयोगोत्पात इति विषये चाऽञ् स्यात् । पार्थिवः , सार्वभौम ईशो ज्ञातः संयोगोत्पातरूपो हेतुर्वा ॥१५६॥

**लोक-सर्वलोकाज्ज्ञाते ।६।४।१५७॥**

आभ्यां षष्ठ्यन्ताभ्यां ज्ञातेऽर्थे यथोक्तं प्रत्ययः स्यात् । लौकिकः , सार्वलौकिकः ॥१५७॥

**तदत्राऽस्मै वा वृद्ध्याय-लाभोपदा-शुल्कं देयम् ।६।४।१५८॥**

**तदि**ति प्रथमान्ताद् **अत्रे**ति सप्तम्यर्थे**ऽस्मै** इति चतुर्थ्यर्थे वा यथोक्तं प्रत्ययः स्यात् , तच्चेत् प्रथमान्तं वृद्ध्यादि देयं च स्यात् । [2]वृद्धि-पञ्चकं शतम् , [3]आय-पञ्चको ग्रामः , [4]लाभ-पञ्चकः पटः , उपदा [5]लञ्चा— पञ्चको व्यवहारः , [6]शुल्क-पञ्चकं शतम् , एवं शत्यं , शतिकम् ॥१५८॥

**पूरणा-ऽर्धादिकः ।६।४।१५९॥**

पूरणप्रत्ययान्तादर्धाच्च प्रथमान्ताद् अस्मिन् अस्मै वा दीयते इत्यर्थयोरिकः स्यात् , प्रथमान्तं चेद् वृद्ध्यादि । द्वितीयिकः , अर्धिका ॥१५९॥

**भागाद् येकौ ।६।४।१६०।**

भागात् तदस्मिन्नस्मै वा वृद्ध्याद्यन्यतमं देयमिति विषये येकौ स्याताम् । भाग्यः , [7]भागिका ॥१६०॥

**तं पचति द्रोणाद् वाऽञ् ।६।४।१६१॥**

तमिति द्वितीयान्ताद् द्रोणात् पचत्यर्थे वाऽञ् स्यात् । द्रौणी , द्रौणिकी स्थाली ॥१६१॥

**सम्भवदहरतोश्च ।६।४।१६२॥**

द्वितीयान्तात् पचत्-सम्भवदवहरत्सु यथोक्तं प्रत्ययः स्यात् । आधेयस्य प्रमाणानतिरेकेण धारणं **सम्भवः** , अतिरेकेणावहारः । प्रास्थिकी स्थाली ॥१६२॥

**पात्रा-ऽऽचिता-ऽऽढकादीनो वा ।६।४।१६३॥**

१. **आश्विकः गाणिकः** पा२ ॥ २. **वृद्धिः** J2मू P3मू विना ॥ ३. **आयः** J2मू० P3मू० विना ॥ ४. **लाभः** J2मू० विना ॥ ५. **लञ्चः** J2 P3विना ॥ ६. **शुल्कः** J2सं० J1,J3 । **शुल्कं** P3 ॥ ७. **भागिकः** पा२ J1,3 ॥

एभ्यो द्वितीयान्तेभ्यः पचदाद्यर्थे ईनो वा स्यात् । पात्रीणा , पात्रिकी ; आचितीना , आचितिकी ; आढकीना , आढकिकी ॥१६३॥

## द्विगोरीनेकटौ वा ।६।४।१६४॥

पात्रा-ऽऽचिता-ऽऽढकान्ताद् द्विगोर्द्वितीयान्तात् पचदाद्यर्थे ईनेकटौ वा स्याताम् , पक्षे इकण् , तस्य चानाम्नीत्यादिना प्लुप् न अनयोर्विधानबलात् । द्विपात्रीणा , द्विपात्रिकी , द्विपात्री ; द्व्याचितीना , द्व्याचितिकी , द्व्याचिता ; द्व्याढकीना , द्व्याढकिकी , द्व्याढकी ॥१६४॥

## कुलिजाद् वा लुप् च ।६।४।१६५॥

कुलिजान्ताद् द्विगोर्द्वितीयान्तात् पचदाद्यर्थे ईनेकटौ वा स्याताम् , पक्षे इकण् तस्य च वा लुप् । द्विकुलिजीना , द्विकुलिजिकी , द्विकुलिजी , द्वैकुलिजिकी ॥१६५॥

## वंशादेर्भाराद्धरद्-वहदावहत्सु ।६।४।१६६॥

एभ्यः परो यो भारस्तदन्ताद् द्वितीयान्तादेष्वर्थेषु यथोक्तं प्रत्ययः स्यात् । वांशभारिकः , कौटभारिकः ॥१६६॥

## द्रव्य-वस्नात् केकम् ।६।४।१६७॥

आभ्यां द्वितीयान्ताभ्यां हरदाद्यर्थे यथासंख्यं क इकश्च स्यात् । द्रव्यकः , वस्निकः ॥१६७॥

## सोऽस्य भृति-वस्नांशम् ।६।४।१६८॥

**स** इति प्रथमान्ताद् भृत्याद्यर्थाद् **अस्येति** षष्ठ्यर्थे यथोक्तं प्रत्ययः स्यात् । पञ्चकः कर्मकृत् पटो ग्रामो वा , साहस्रः ॥१६८॥

## मानम् ।६।४।१६९॥

प्रथमान्तात् षष्ठ्यर्थे यथोक्तं प्रत्ययः स्यात् ,स्यन्तं चेद् मानम् । द्रौणिकः , खारीको राशिः ॥१६९॥

## जीवितस्य सन् ।६।४।१७०॥

जीवितमानार्थात् स्यन्तात् षष्ठ्यर्थे यथोक्तं प्रत्ययः स्यात् , तस्य च न लुप् । द्विषाष्टिको ना ॥१७०॥

## सङ्ख्यायाः संघ-सूत्र-पाठे ।६।४।१७१॥

अस्मात् स्यन्ताद् अस्य मानमित्यर्थे यथोक्तं प्रत्ययः स्यात् , षष्ठ्यर्थश्चेत् सङ्घः सूत्रं पाठो वा । पञ्चकः सङ्घः , अष्टकं पाणिनीयं सूत्रम् , अष्टकः पाठः ॥१७१॥

**नाम्नि ।६।४।१७२॥**

संख्यार्थात् तदस्य मानमित्यर्थे यथोक्तं प्रत्ययः स्यात् , नाम्नि । पञ्चकाः शकुनयः ॥१७२॥

**विंशत्यादयः ।६।४।१७३॥**

एते तदस्य मानमित्यर्थे साधवः स्युः , नाम्नि । द्वौ दशतौ मानमेषां विंशतिः , त्रिंशत् ॥१७३॥

**त्रैंश-चात्वारिंशम् ।६।४।१७४॥**

त्रिंशच्चत्वारिंशद्भ्यां तदस्य मानमित्यर्थे डण् स्यात् , नाम्नि । त्रैंशानि , चात्वारिंशानि ब्राह्मणानि ॥१७४॥

**पञ्चद्-दशद् वर्गे वा ।६।४।१७५॥**

एतौ तदस्य मानमिति विषये वर्गेऽर्थेऽदन्तौ वा निपात्यौ । पञ्चत् , दशत् , पञ्चकः दशको वर्गः ॥१७५॥

**स्तोमे डट् ।६।४।१७६॥**

संख्यार्थात् तदस्य मानमिति विषये स्तोमेऽर्थे डट् स्यात् । विंशः स्तोमः ॥१७६॥

**तमर्हति ।६।४।१७७॥**

तमिति द्वितीयान्तादर्हत्यर्थे यथोक्तं प्रत्ययः स्यात् । वैषिकः , साहस्रः ॥१७७॥

**दण्डादेर्यः ।६।४।१७८॥**

एभ्यो द्वितीयान्तेभ्योऽर्हत्यर्थे यः स्यात् । दण्ड्यः , अर्घ्यः ॥१७८॥

**यज्ञादियः ।६।४।१७९॥**

द्वितीयान्तात् यज्ञादर्हति इयः स्यात् । यज्ञियो देशः ॥१७९॥

**पात्रात् तौ ।६।४।१८०॥**

द्वितीयान्तात् पात्राद् अर्हति येयौ स्याताम् । पात्र्यः , पात्रियः ॥१८०॥

**दक्षिणा-कडङ्गर-स्थालीबिलादीय-यौ ।६।४।१८१।।**

एभ्यो द्वितीयान्तेभ्योऽर्हत्यर्थे ईय-यौ स्याताम् । दक्षिणीयो , दक्षिण्यो गुरुः ; कडङ्गरीयः , कडङ्गर्यो गौः ; स्थालीबिलीयाः , स्थालीबिल्यास्तण्डुलाः ।।१८१।।

**छेदादेर्नित्यम् ।६।४।१८२।।**

अस्माद् द्वितीयान्तान्नित्यमर्हति यथोक्तं प्रत्ययः स्यात् । छैदिकः , भैदिकः ।।१८२।।

**विरागाद् विरङ्गश्च ।६।४।१८३।।**

अस्माद् द्वितीयान्तान्नित्यमर्हति यथोक्तं प्रत्ययः स्यात् , तद्योगे चास्य विरङ्गः । वैरङ्गिकः ।।१८३।।

**शीर्षच्छेदाद् यो वा ।६।४।१८४।।**

अस्माद् द्वितीयान्तान्नित्यमर्हति यो वा स्यात् । शीर्षच्छेद्यः , शैर्षच्छेदिकश्चौरः ।।१८४।।

**शालीन-कौपीना-ऽऽर्त्विजीनम् ।६।४।१८५।।**

एते तमर्हतीत्यर्थे ईनञन्ता निपात्याः । शालीनोऽधृष्टः , कौपीनं पा[१]पकर्मादि , आर्त्विजीनो यजमान ऋत्विग् वा ।।१८५।।

इत्याचार्यश्री**हेमचन्द्र**विरचितायां

**सिद्धहेमचन्द्रा**भिधानस्वोपज्ञशब्दानुशासनलघुवृत्तौ

षष्ठोऽध्यायः स[२]माप्तः ।।६।४।।

भूमिं कामगवि ! स्वगोमयरसैरासिञ्च रत्नाकराः !
मुक्तास्वस्तिकमातनुध्वमुडुप ! त्वं पूर्णकुम्भीभव ।
धृत्वा कल्पतरोर्दलानि सरलैर्दिग्वारणास्तोरणा-
न्याधत्त स्वकरैर्विजित्य जगतीं नन्वेति **सिद्धाधिपः** ।।२४।।

१. कर्मादिः J3 ।। २. समाप्तः— नास्ति पा२ ।।

## [ अथ सप्तमाध्यायस्य ]
## प्रथमः पादः

### यः ।७।१।१।।

यदित ऊर्ध्वमनुक्रमिष्यामस्तत्र ईयादर्वाग् य इत्यधिकृतं ज्ञेयम् ।।१।।

### वहति रथ-युग-प्रासङ्गात् ।७।१।२।।

तमिति वर्तते , एभ्यो द्वितीयान्तेभ्यो वहत्यर्थे यः स्यात् । द्विरथ्यः , युग्यः , **प्रासङ्गो** वत्सदमनस्कन्धकाष्ठम् , प्रासङ्ग्यः ।।२।।

### धुरो यैयण् ।७।१।३।।

धुरो द्वितीयान्ताद् वहत्यर्थे एतौ स्याताम् । धुर्यः , धौरेयः ।।३।।

### वामाद्यादेरीनः ।७।१।४।।

वामादिपूर्वाद् धुरन्तादमन्ताद् वहत्यर्थे ईनः स्यात् । वामधुरीणः , सर्वधुरीणः ।।४।।

### अश्चैकादेः ।७।१।५।।

एकपूर्वाद् धुरन्तादमन्ताद् वहत्यर्थे अ ईनश्च स्यात् । एकधुरः , एकधुरीणः ।।५।।

### हल-सीरादिकण् ।७।१।६।।

आभ्यां तं वहत्यर्थे इकण् स्यात् । हालिकः , सैरिकः ।।६।।

### शकटादण् ।७।१।७।।

अस्मात् तं वहत्यर्थेऽण् स्यात् । शाकटो गौः ।।७।।

### विध्यत्यनन्येन ।७।१।८।।

द्वितीयान्ताद् विध्यत्यर्थे यः स्यात् , न चेदात्मनोऽन्येन करणेन विध्यते । पद्याः शर्कराः । अनन्येनेति किम् ? चौरं विध्यति चैत्रः ।।८।।

### धनगणाल्लब्धरि ।७।१।९।।

आभ्याममन्ताभ्यां लब्धर्यर्थे यः स्यात् । धन्यः , गण्यः ।।९।।

### णोऽन्नात् ।७।१।१०।।

अन्नाद् अमन्तात् लब्धरि णः स्यात् । आन्नः ।।१०।।

**हृद्य-पद्य-तुल्य-मूल्य-वश्य-पथ्य-वयस्य-धेनुष्या-गार्हपत्य-जन्य-धर्म्यम् ।७।१।११॥**

एतेऽर्थविशेषेषु यान्ता निपात्याः । हृद्यमौषधम् , पद्यः पङ्कः , तुल्यं भाण्डं सट्टक् च , मूल्यं धान्यं पटादिविक्रयाल्लभ्यं च , वश्यो गौः , पथ्यमोदनादि , वयस्यः सखा , धेनुष्या पीतदुग्धा गौः , गार्हपत्यो नामाग्निः , जन्या वरवयस्याः , धर्म्यं सुखम् ॥११॥

**नौ-विषेण तार्य-वध्ये ।७।१।१२॥**

आभ्यां निर्देशाट्टान्ताभ्यां यथासङ्ख्यं तार्ये वध्ये चार्थे यः स्यात् । नाव्या नदी , विष्यो गजः ॥१२॥

**न्याया-ऽर्थादनपेते ।७।१।१३॥**

आभ्यां पञ्चम्यन्ताभ्यामनपेतेऽर्थे यः स्यात् । न्याय्यम् , अर्थ्यम् ॥१३॥

**मत-मदस्य करणे ।७।१।१४॥**

आभ्यां षष्ठ्यन्ताभ्यां करणे यः स्यात् । मत्यम् , मद्यम् ॥१४॥

**तत्र साधौ ।७।१।१५॥**

तत्रेति ङ्यन्तात् साधावर्थे यः स्यात् । सभ्यः ॥१५॥

**पथ्यतिथि-वसति-स्वपतेरेयण् ।७।१।१६॥**

एभ्यस्तत्र साधावेयण् स्यात् । पाथेयम् , आतिथेयम् , वासतेयम् , स्वापतेयम् ॥१६॥

**भक्ताण्णः ।७।१।१७॥**

भक्तात् तत्र साधौ णः स्यात् । भाक्तः शालिः ॥१७॥

**पर्षदो ण्य-णौ ।७।१।१८॥**

तत्र साधौ स्याताम् । पार्षद्यः , पार्षदः ॥१८॥

**सर्वजनाण्ण्येनञौ ।७।१।१९॥**

तत्र साधौ स्याताम् । सार्वजन्यः , सार्वजनीनः ॥१९॥

**प्रतिजनादेरीनञ् ।७।१।२०॥**

तत्र साधौ स्यात् । प्रातिजनीनः , आनुजनीनः ॥२०॥

**कथादेरिकण् ।७।१।२१॥**

तत्र साधौ स्यात् । काथिकः , वैकथिकः ॥२१॥

**देवतान्तात् तदर्थे ।७।१।२२॥**

देवतान्तात् तदर्थे यः स्यात् । अग्निदेवत्यं हविः ॥२२॥

**पाद्या-ऽर्घ्ये ।७।१।२३॥**

एतौ तदर्थे यान्तौ निपात्यौ । पाद्यं जलम् , अर्घ्यं रत्नम् ॥२३॥

**ण्योऽतिथेः ।७।१।२४॥**

तदर्थेऽर्थे स्यात् । आतिथ्यम् ॥२४॥

**सादेश्चा तदः ।७।१।२५॥**

*तद् [७।१।५०]* इति सूत्रं यावत् केवलस्य सादेश्च वक्ष्यमाणो विधिर्ज्ञेयः ॥२५॥

**हलस्य कर्षे ।७।१।२६॥**

हलात् षष्ठ्यन्तात् कर्षेऽर्थे यः स्यात् । हल्या , द्विहल्या ॥२६॥

**सीतया संगते ।७।१।२७॥**

अस्माट्टाऽन्तात् सङ्गतेऽर्थे यः स्यात् । सीत्यम् , त्रिसीत्यम् ॥२७॥

**ईयः ।७।१।२८॥**

आ तदो वक्ष्यमाणार्थेषु ईयोऽधिकृतो ज्ञेयः ॥२८॥

**हविरन्नभेदा-ऽपूपादेर्यो वा ।७।१।२९॥**

हविर्भेदादन्नभेदादपूपादेश्चाऽऽतदोऽर्थेषु वा योऽधिक्रियते । आमिक्ष्यम् , आमिक्षीयम् ; ओदन्याः , ओदनीयास्तण्डुलाः ; अपूप्यम् , अपूपीयम् ; यवापूप्यम् , यवापूपीयम् ॥२९॥

**उवर्ण-युगादेर्यः ।७।१।३०॥**

उवर्णान्ताद् युगादेश्चाऽऽतदोऽर्थेषु यः स्यात् । शङ्कव्यं दारु , युग्यं , हविष्यम् ॥३०॥

**नाभेर्नभ् चादेहांशात् ।७।१।३१॥**

अदेहांशार्थान्नाभेरा तदोऽर्थेषु यः स्यात् , नभ् चाऽस्य । नभ्योऽक्षः ।

अदेहांशादिति किम् ? नाभ्यं तैलम् ॥३१॥

**न् चोधसः ।७।१।३२॥**

आ तदोऽर्थेषु ऊधसो यः स्यात् , न् चान्तस्य । ऊधन्यम् ॥३२॥

**शुनो वश्चोदूत् ।७।१।३३॥**

आ तदोऽर्थेषु शुनो यः स्यात् , वश्च उदूद्रूपः । शुन्यम् , शून्यम् ॥३३॥

**कम्बलान्नाम्नि ।७।१।३४॥**

अस्माद् आ तदोऽर्थेषु नाम्नि यः स्यात् । कम्बल्यम् ऊर्णापलशतम् । नाम्नीति किम् ? कम्बलीया ऊर्णा ॥३४॥

**तस्मै हिते ।७।१।३५॥**

**तस्मै** इति चतुर्थ्यन्तात् हितेऽर्थे यथाधिकृतं प्रत्ययः स्यात् । वत्सीयः , आमिक्ष्यः , आमिक्षीयः युग्यः ॥३५॥

**न राजा-ऽऽचार्य-ब्राह्मण-वृष्णः ।७।१।३६॥**

एभ्यश्चतुर्थ्यन्तेभ्यो हितेऽधिकृतः प्रत्ययो न स्यात् । राज्ञे , आचार्याय , ब्राह्मणाय , वृष्णे वा हित इति वाक्यमेव ॥३६॥

**प्राण्यङ्ग-रथ-तिल-यव-वृष-ब्रह्म-माषाद् यः ।७।१।३७॥**

प्राण्यङ्गार्थेभ्यो रथादिभ्यश्चतुर्थ्यन्तेभ्यो हिते यः स्यात् । दन्त्यम् , रथ्या भूमिः , खल्यम् , तिल्यम् , यव्यम् , वृष्यं क्षीरम् , ब्रह्मण्यो देशः , माष्यः , राजमाष्यः ॥३७॥

**अव्यजात् थ्यप् ।७।१।३८॥**

आभ्यां तस्मै हिते थ्यप् स्यात् । अविथ्यम् , अजथ्या यूतिः ॥३८॥

**चरक-माणवादीनञ् ॥७।१।३९॥**

आभ्यां तस्मै हिते ईनञ् स्यात् । चारकीणः , माणवीनः ॥३९॥

**भोगोत्तरपदा-ऽऽत्मभ्यामीनः ।७।१।४०॥**

भोग उत्तरपदं यस्य तस्माद् आत्मनश्च तस्मै हिते ईनः स्यात् । मातृभोगीणः , आत्मनीनः ॥४०॥

**पञ्च-सर्व-विश्वाज्जनात् कर्मधारये ।७।१।४१॥**

पञ्चादेः पराज्जनात् कर्मधारयवृत्तेः तस्मै हिते ईनः स्यात् । पञ्चजनीनः , सर्वजनीनः , विश्वजनीनः । कर्मधारय इति किम् ? पञ्चानां जनाय हितः पञ्चजनीयः ॥४१॥

**महत्-सर्वादिकण् ।७।१।४२॥**

आभ्यां पराज्जनात् कर्मधारयवृत्तेस्तस्मै हिते इकण् स्यात् । माहाजनिकः , सार्वजनिकः ॥४२॥

**सर्वाण्णो वा ।७।१।४३॥**

सर्वात् तस्मै हिते णो वा स्यात् । सार्वः , सर्वीयः ॥४३॥

**परिणामिनि तदर्थे ।७।१।४४॥**

चतुर्थ्यन्ताच्चतुर्थ्यन्तार्थार्थे[१] परिणामिनि हेतावर्थे यथाऽधिकृतं प्रत्ययः स्यात् । अङ्गारीयाणि काष्ठानि , शङ्कव्यं दारु ॥४४॥

**चर्मण्यञ् ।७।१।४५॥**

चतुर्थ्यन्तात् तदर्थे परिणामिनि चर्मण्यर्थेऽञ् स्यात् । वार्ध्रं चर्म ॥४५॥

**ऋषभोपानहाञ्ञ्यः ।७।१।४६॥**

आभ्यां चतुर्थ्यन्ताभ्यां परिणामिनि तदर्थे ञ्यः स्यात् । आर्षभ्यो वत्सः , औपानह्यो मुञ्जः ॥४६॥

**छदिर्बलेरेयण् ।७।१।४७॥**

आभ्यां चतुर्थ्यन्ताभ्यां परिणामिनि तदर्थे एयण् स्यात् । छादिषेयं तृणम् , बालेयास्तण्डुलाः ॥४७॥

**परिखाऽस्य स्यात् ।७।१।४८॥**

अस्मात् स्यन्तादस्येति षष्ठ्यर्थे परिणामिन्येयण् स्यात् , सा चेत् स्यादिति सम्भाव्या । पारिखेय्य इष्टकाः ॥४८॥

**अत्र च ।७।१।४९॥**

परिखायाः स्यादिति सम्भाव्यायाः स्यन्ताया अत्रेति सप्तम्यर्थे एयण् स्यात् । पारिखेयी भूमिः ॥४९॥

---

१. चतुर्थ्यन्तात् तदर्थे चतुर्थ्यन्तार्थार्थे परि° पा२ । चतुर्थ्यन्तार्थार्थे परि° J3 ॥

## तद् ।७।१।५०॥

**तद**िति स्यन्तात् स्यादिति सम्भाव्यात् , षष्ठ्यर्थे परिणामिनि सप्तम्यर्थे च यथाऽधिकृतं प्रत्ययः स्यात् । प्राकारीया इष्टकाः , परशव्यमयः , प्रासादीयो देशः ॥५०॥

## तस्याऽर्हे क्रियायां वत् ।७।१।५१॥

**तस्ये**ति षष्ठ्यन्तात् क्रियारूपेऽर्हेऽर्थे वत् स्यात् । राजवद् वृत्तं राज्ञः । क्रियायामिति किम् ? राज्ञोऽर्हो मणिः ॥५१॥

## स्यादेरिवे ।७।१।५२॥

स्याद्यन्तादिवार्थे सादृश्ये क्रियार्थे वत् स्यात् । अश्ववद् याति चैत्रः , देववत् पश्यन्ति मुनिम् ॥५२॥

## तत्र ।७।१।५३॥

**तत्रे**ति सप्तम्यन्तादिवार्थे वत् स्यात् । स्रुघ्नवत् साकेते परिखा ॥५३॥

## तस्य ।७।१।५४॥

**तस्ये**ति षष्ठ्यन्तादिवार्थे वत् स्यात् । चैत्रवद् मैत्रस्य भूः ॥५४॥

## भावे त्व-तल् ।७।१।५५॥

षष्ठ्यन्ताद् भावे एतौ स्याताम् , शब्दप्रवृत्तिहेतुर्गुणो भावः । गोत्वम् , गोता ; शुक्लत्वम् , शुक्लता ॥५५॥

## प्राक् त्वादगडुलादेः ।७।१।५६॥

*ब्रह्मणस्त्वः* [७।१।७७] इत्यतोऽर्वाक् त्वतलावधिकृतौ ज्ञेयौ न तु गडुलादेः , तत्रैवोदाहरिष्येते । गडुलादिवर्जनं किम् ? गाडुल्यम् , कामण्डलवम् ॥५६॥

## नञ्तत्पुरुषादबुधादेः ।७।१।५७॥

प्राक् त्वान्नञ्पूर्वात् तत्पुरुषाद् बुधाद्यन्तवर्जात् त्वतलावेव स्यातामित्यधिकृतं ज्ञेयम् । अशुक्लत्वम् , अशुक्लता ; अपतित्वम् , अपतिता । अबुधादेरिति किम् ? आबुध्यम् , आचतुर्यम् ॥५७॥

## पृथ्वादेरिमन् वा ।७।१।५८॥

एभ्यो भावे वा इमन् स्यात् । प्रथिमा , पृथुत्वम् , पृथुता , पार्थवम् ;

म्रदिमा , मृदुत्वम् , मृदुता , मार्दवम् ।।५८।।

**वर्ण-दृढादिभ्यष्ट्यण् च वा ।७।१।५९।।**

वर्णविशेषार्थेभ्यो दृढादेश्च तस्य भावे ट्यण् इमन् च वा स्यात् । शौक्ल्यम् , शुक्लिमा , शुक्लत्वम् , शुक्लता ; शैत्यम् , शितिमा , शितित्वम् , शितिता , शैतम् ; दार्ढ्यम् , द्रढिमा , दृढत्वम् , दृढता ; वैमत्यम् , विमतिमा , विमतित्वम् , विमतिता , वैमतम् ।।५९।।

**पति-राजान्त-गुणाङ्ग-राजादिभ्यः कर्मणि च ।७।१।६०।।**

पत्यन्तराजान्तेभ्यो गुणोऽङ्गं प्रवृत्तौ हेतुर्येषां तेभ्यो राजादेश्च तस्य भावे क्रियायां च ट्यण् स्यात् । आधिपत्यम् , अधिपतित्वम् , अधिपतिता ; आधिराज्यम् , अधिराजत्वम् , अधिराजता ; मौढ्यम् , मूढत्वम् , मूढता ; राज्यम् , राजत्वम् , राजता ; काव्यम् , कवित्वम् , कविता ।।६०।।

**अर्हतस्तो न्त् च ।७।१।६१।।**

अस्मात् तस्य भावे कर्मणि च ट्यण् स्यात् , तद्योगे च तस्य न्तादेशः । आर्हन्त्यम् , अर्हत्त्वम् , अर्हत्ता ।।६१।।

**सहायाद् वा ।७।१।६२।।**

अस्मात् तस्य भावे कर्मणि च ट्यण् वा स्यात् । साहाय्यम् , साहायकम् , सहायत्वम् , सहायता ।।६२।।

**सखि-वणिग्-दूताद् यः ।७।१।६३।।**

एभ्यस्तस्य भावे कर्मणि च यः स्यात् । सख्यम् , सखित्वम् , सखिता ; वणिज्या , वणिक्त्वम् , वणिक्ता , वाणिज्यम् ; एवं दूत्यम् ।।६३।।

**स्तेनान्नलुक् च ।७।१।६४।।**

स्तेनात् तस्य भावे कर्मणि च यः स्यात् , तद्योगे च नस्य लुक् । स्तेयम् , स्तेनत्वम् , स्तेनता , स्तैन्यम् ।।६४।।

**कपि-ज्ञातेरेयण्**

आभ्यां तस्य भावे कर्मणि च एयण् स्यात् । कापेयम् , कपित्वम् , कपिता ; ज्ञातेयम् , ज्ञातित्वम् , ज्ञातिता ।।६५।।

**प्राणिजाति-वयोऽर्थादञ् ।७।१।६६।।**

प्राणिजात्यर्थाद् वयोऽर्थाच्च तस्य भावे कर्मणि चाऽञ् स्यात् । आश्वम् , अश्वत्वम् , अश्वता ; कौमारम् , कुमारत्वम् , कुमारता ॥६६॥

**युवादेरण् ।७।१।६७॥**

एभ्यस्तस्य भावे कर्मणि चाऽण् स्यात् । यौवनम् , युवत्वम् , युवता ; स्थाविरम् , स्थविरत्वम् , स्थविरता ॥६७॥

**हायनान्तात् ।७।१।६८॥**

अस्मात् तस्य भावे कर्मणि चाऽण् स्यात् । द्वैहायनम् , द्विहायनत्वम् , द्विहायनता ॥६८॥

**य्वृवर्णाल्लघ्वादेः ।७।१।६९॥**

लघुरादिः समीपो येषामि-उ-ऋवर्णानां तदन्तेभ्यस्तस्य भावे कर्मणि चाऽण् स्यात् । शौचम् , शुचित्वम् , शुचिता ; एवं हारीतकम् , पाटवम् , वाधवम् , पैत्रम् । लघ्वादेरिति किम् ? पाण्डुत्वम् ॥६९॥

**पुरुष-हृदयादसमासे ।७।१।७०॥**

आभ्यामसमासविषयाभ्यां तस्य भावे कर्मणि चाऽण् स्यात् । पौरुषम् , पुरुषत्वम् , पुरुषता , एवं हार्दम् । असमास इति किम् ? परमपुरुषत्वम् , परमपौरुषमिति मा भूत् ॥७०॥

**श्रोत्रियाद् यलुक् च ।७।१।७१॥**

अस्मात् तस्य भावे कर्मणि चाऽण् स्यात् , तद्योगे च यस्य लुक् । श्रौत्रम् , श्रोत्रियत्वम् , श्रोत्रियता , श्रौत्रियकम् ॥७१॥

**योपान्त्याद् गुरूपोत्तमादसुप्रख्यादकञ् ।७।१।७२॥**

त्र्यादीनामन्त्यमुत्तमम् , तत्समीपमुपोत्तमम् , तद् गुरुर्यस्य तस्माद् युपान्त्यात् सुप्रख्यवर्जात् तस्य भावे कर्मणि चाऽकञ् स्यात् । रामणीयकम् , रमणीयत्वम् , रमणीयता ; एवम् आचार्यकम् । गुरूपोत्तमादिति किम् ? क्षत्रियत्वम् , कायत्वम् । असुप्रख्यादिति किम् ? सुप्रख्यत्वम् , सौप्रख्यम् ॥७२॥

**चोरादेः[1] ।७।१।७३॥**

एभ्यस्तस्य भावे कर्मणि चाकञ् स्यात् । चौरिका , चोरत्वम्[2] , चोरता

१. चौरादेः J1 पा२ ॥ २. चौरत्वम्, चौरता J1 पा२ ॥

; एवं धौर्त्तिका ॥७३॥

**द्वन्द्वाल्लित् ।७।१।७४॥**

द्वन्द्वात् तस्य भावे कर्मणि च लिद् अकञ् स्यात् । वैन्रिका , वि-नृत्वम् , विनृता ॥७४॥

**गोत्र-चरणाच्छ्लाघा-ऽत्याकार-प्राप्त्यवगमे ।७।१।७५॥**

गोत्रार्थ-चरणार्थाभ्यां तस्य भावे कर्मणि च लिदकञ् स्यात् , श्लाघादिविषये । गार्गिकया श्लाघते , अत्याकुरुते वा , गार्गिकां प्राप्तोऽवगतवान् वा , एवं काठिकयेत्यादि । श्लाघादिष्विति किम् ? गार्गम् , काठम् ॥७५॥

**होत्राभ्य ईयः ।७।१।७६॥**

**होत्रा** ऋत्विग्विशेषः , तदर्थात् तस्य भावे कर्मणि च ईयः स्यात् । मैत्रावरुणीयम् । त्वतलावपि ॥७६॥

**ब्रह्मणस्त्वः ।७।१।७७॥**

अस्माद् ऋत्विगर्थात् तस्य भावे कर्मणि च त्वः स्यात् । ब्रह्मत्वम् ॥७७॥

**शाकट-शाकिनौ क्षेत्रे ।७।१।७८॥**

षष्ठ्यन्तात् क्षेत्रेऽर्थे एतौ स्याताम् । इक्षुशाकटम् , शाकशाकिनम् ॥७८॥

**धान्येभ्य ईनञ् ।७।१।७९॥**

धान्यार्थेभ्यः षष्ठ्यन्तेभ्यः क्षेत्रेऽर्थे ईनञ् स्यात् । मौद्गीनम् , कौद्रवीणम् ॥७९॥

**व्रीहि-शालेरेयण् ।७।१।८०॥**

आभ्यां तस्य क्षेत्रे एयण् स्यात् । व्रैहेयम् , शालेयम् ॥८०॥

**यव-यवक-षष्टिकाद् यः ।७।१।८१॥**

एभ्यस्तस्य क्षेत्रे यः स्यात् । यव्यम् , यवक्यम् , षष्टिक्यम् ॥८१॥

**वाऽणु-माषात् ।७।१।८२॥**

आभ्यां तस्य क्षेत्रे यो वा स्यात् । अणव्यम् , आणवीनम् ; माष्यम् , माषीणम् ॥८२॥

**वोमा-भङ्गा-तिलात् ।७।१।८३॥**

एभ्यस्तस्य क्षेत्रेऽर्थे यो वा स्यात् । उम्यम् , औमीनम् ; भङ्ग्यम् , भाङ्गीनम् ; तिल्यम् , तैलीनम् ॥८३॥

**अलाब्वाश्च कटो रजसि ।७।१।८४॥**

अस्मादुमादेश्च तस्य रजस्यर्थे कटः स्यात् । अलाबूकटम् , उमाकटम् , भङ्गाकटम् , तिलकटम् ॥८४॥

**अह्ना गम्येऽश्वादीनञ् ।७।१।८५॥**

षष्ठ्यन्तादश्वादेकेनाह्ना गम्येऽर्थे ईनञ् स्यात् । आश्वीनोऽध्वा ॥८५॥

**कुलाज्जल्पे ।७।१।८६॥**

षष्ठ्यन्तात् कुलाज्जल्पेऽर्थे ईनञ् स्यात् । कौलीनः ॥८६॥

**पील्वादेः कुणः पाके ।७।१।८७॥**

एभ्यस्तस्य पाके कुणः स्यात् । पीलुकुणः , शमीकुणः ॥८७॥

**कर्णादेर्मूले जाहः ।७।१।८८॥**

एभ्यस्तस्य मूलेऽर्थे जाहः स्यात् । कर्णजाहम् , अक्षिजाहम् ॥८८॥

**पक्षात् तिः ।७।१।८९॥**

पक्षात् तस्य मूलेऽर्थे तिः स्यात् । पक्षतिः ॥८९॥

**हिमादेलुः सहे ।७।१।९०॥**

हिमात् तस्य सहमानेऽर्थे एलुः स्यात् । हिमेलुः ॥९०॥

**बल-वातादूलः ।७।१।९१॥**

आभ्यां तस्य सहेऽर्थे ऊलः स्यात् । बलूलः . वातूलः ॥९१॥

**शीतोष्ण-तृप्रादालुरसहे ।७।१।९२॥**

एभ्यस्तस्यासहेऽर्थे आलुः स्यात् । शीतालुः , उष्णालुः , तृप्रालुः ॥९२॥

**यथामुख-संमुखादीनस्तद् दृश्यतेऽस्मिन् ।७।१।९३॥**

आभ्यां तदिति स्यन्ताभ्याम् , **अस्मिन्निति** ङ्यर्थे ईनः स्यात् , स्यन्तं चेद् दृश्यते । यथामुखं प्रतिबिम्बम् , यथामुखीन आदर्शः , एवं संमुखीनः ॥९३॥

**सर्वादेः पथ्यङ्ग-कर्म-पत्र-पात्र-शरावं व्याप्नोति ।७।१।९४॥**

सर्वशब्दपूर्वेभ्य एभ्यो द्वितीयान्तेभ्यो व्याप्नोतीत्यर्थे ईनः स्यात् । सर्वपथीनो

रथः , सर्वाङ्गीणस्तापः , सर्वकर्मीणो ना , सर्वपत्रीणो यन्ता , सर्वपात्रीणं भक्तम् , सर्वशरावीणमोदनम् ॥९४॥

**आप्रपदम् ।७।१।९५॥**

आ पा[1]दाग्राद् आप्रपदम् , अस्मादमन्ताद् व्याप्नोतीत्यर्थे ईनः स्यात् । आप्रपदीनः पटः ॥९५॥

**अनुपदं बद्धा ।७।१।९६॥**

अस्मादमन्ताद् बद्धेत्यर्थे ईनः स्यात् । अनुपदीनोपानत् ॥९६॥

**अयानयं नेयः ।७।१।९७॥**

अस्माद् द्वितीयान्तान्नेयेऽर्थे ईनः स्यात् । अयानयीनः शारः ॥९७॥

**सर्वाऽन्नमत्ति ।७।१।९८॥**

अस्मादमन्तादत्त्यर्थे ईनः स्यात् । सर्वान्नीनो भिक्षुः ॥९८॥

**परोवरीण-परम्परीण-पुत्रपौत्रीणम् ।७।१।९९॥**

एतेऽनुभवत्यर्थे ईनान्ता निपात्याः । परोवरीणः , परम्परीणः , पुत्रपौत्रीणः ॥९९॥

**यथाकामा-ऽनुकामा-ऽत्यन्तं गामिनि ।७।१।१००॥**

एभ्योऽमन्तेभ्यो गामिन्यर्थे ईनः स्यात् । यथाकामीनः , अनुकामीनः , अत्यन्तीनः ॥१००॥

**पारावारं व्यस्त-व्यत्यस्तं च ।७।१।१०१॥**

अस्माद् समस्ताद् व्यस्ताद् व्यत्यस्ताच्चामन्ताद् गामिनि ईनः स्यात् । पारावारीणः , पारीणः , अवारीणः , अवारपारीणः ॥१०१॥

---

१. लघुवृत्तेस्तालपत्रोपरिलिखितादर्शेषु 'पादाग्राद्' इति पाठः । केवलं P3सं० मध्ये 'पदाग्राद्' इति पाठः । अभिधानचिन्तामणिनाममालायामपि **'पादाग्रं प्रपदम्'** [श्लोक ६१७] इति पाठः । पाणिनीयव्याकरणस्य [५।२।८] वृत्तौ काशिकायामपि "प्रपदम् इति पादस्याग्रमुच्यते" इति पाठः । किन्तु सिद्धहेमचन्द्रशब्दानुशासनस्य बृहद्वृत्तौ "प्रगतं पदं प्रपदम्" इति पाठः । चान्द्रव्याकरणे [४।२।१२] वृत्तौ "पदाग्रं प्रपदम्" इति पाठः । शाकटायनव्याकरणस्वोपज्ञवृत्तौ [३।३।५४] "पदस्याग्रं प्रपदम्" इति पाठः । जैनेन्द्रव्याकरणमहावृत्तौ [३।४।१३३] "प्रवृद्धं पदं प्रपदम्, पदस्योपरि गुल्फः पदाग्रं वा" इति पाठः । "आ पदाग्राद् आप्रपदम्" इति मलयगिरिशब्दानुशासनस्य स्वोपज्ञवृत्तौ तद्धिते सप्तमे पादे पञ्चमे सूत्रे [पृ० ३३८] पाठः ॥

**अनुग्वलम् ।७।१।१०२॥**

अस्मादमन्तादलङ्गामिनि ईनः स्यात् । अनुगवीनो गोपः ॥१०२॥

**अध्वानं येनौ ।७।१।१०३॥**

अस्मादमन्तादलङ्गामिनि येनौ स्याताम् । अध्वन्यः , अध्वनीनः ॥१०३॥

**अभ्यमित्रमीयश्च ।७।१।१०४॥**

अस्मादमन्तादलङ्गामिनि ईयो येनौ च स्याताम् । अभ्यमित्रीयः , अभ्यमित्र्यः , अभ्यमित्रीणः ॥१०४॥

**समांसमीना-ऽद्यश्वीना-ऽद्यप्रातीना-ऽऽगवीन-साप्तपदीनम् । ७।१।१०५॥**

एते ईनान्ता निपात्याः , साप्तपदीनस्त्वीनञन्तः । समांसमीना गौः , अद्यश्वीना गौः , अद्यप्रातीनो लाभः , आगवीनः कर्मकृत् , साप्तपदीनं सख्यम् ॥१०५॥

**अषडक्षा-ऽऽशितंग्वलङ्कर्मा-ऽलंपुरुषादीनः ।७।१।१०६॥**

एभ्यः स्वार्थे ईनः स्यात् । अषडक्षीणो मन्त्रः , आशितंगवीनमरण्यम् , अलङ्कर्मीणः , अलंपुरुषीणः ॥१०६॥

**अदिक्स्त्रियां वाऽञ्चः ।७।१।१०७॥**

अञ्चत्यन्तात् स्वार्थे ईनो वा स्यात् , न चेत् स दिशि स्त्रियाम् । प्राचीनम् , प्राक् ; प्राचीना शाखा , प्राची । अदिक्स्त्रियामिति किम् ? प्राची दिक् ॥१०७॥

**तस्य तुल्ये कः संज्ञा-प्रतिकृत्योः ।७।१।१०८॥**

तस्येति षष्ठ्यन्तात् तुल्येऽर्थे कः स्यात् , संज्ञायां प्रतिकृतौ च विषये । अश्वकः , अश्वकं रूपम् ॥१०८॥

**न नृ-पूजार्थ-ध्वज-चित्रे ।७।१।१०९॥**

नरि पूजार्थे ध्वजे चित्रकर्मणि चार्थे को न स्यात् । चञ्चा ना , अर्हन् , ध्वजे सिंहः , चित्रे भीमः ॥१०९॥

**अपण्ये जीवने ।७।१।११०॥**

जीव्यते येन तस्मिन् पण्यवर्जे को न स्यात् । शिवः । अपण्य इति किम्

? हस्तिकान् विक्रीणीते ॥११०॥

**देव-पथादिभ्यः ।७।१।१११॥**

एभ्यस्तुल्ये संज्ञा-प्रतिकृत्योः को न स्यात् । देवपथः , हंसपथः ।१११॥

**बस्तेरेयञ् ।७।१।११२॥**

बस्तेस्तस्य तुल्येऽर्थे एयञ् स्यात् । बास्तेयी प्रणालिका ॥११२॥

**शिलाया एयच्च ।७।१।११३॥**

अस्मात् तस्य तुल्येऽर्थे एयच् एयञ् च स्यात् । शिलेयम् , शैलेयं दधि ॥११३॥

**शाखादेर्यः ।७।१।११४॥**

एभ्यस्तस्य तुल्ये यः स्यात् । शाख्यः , मुख्यः ॥११४॥

**द्रोर्भव्ये ।७।१।११५॥**

द्रोस्तस्य तुल्ये भव्येऽर्थे यः स्यात् । द्रव्यमयं ना , स्वर्णादि च ॥११५॥

**कुशाग्रादीयः ।७।१।११६॥**

अस्मात् तस्य तुल्ये ईयः स्यात् । कुशाग्रीया बुद्धिः ॥११६॥

**काकतालीयादयः ।७।१।११७॥**

एते तस्य तुल्ये ईयान्ताः साधवः स्युः । काकतालीयम् , खलतिबिल्वीयम् ॥११७॥

**शर्करादेरण् ।७।१।११८॥**

एभ्यस्तस्य तुल्येऽण् स्यात् । शार्करं दधि , कापालिकम् ॥११८॥

**अः सपत्न्याः ।७।१।११९॥**

अस्मात् तस्य तुल्ये अः स्यात् । सपत्नः ॥११९॥

**एकशालाया इकः ।७।१।१२०॥**

अस्मात् तस्य तुल्ये इकः स्यात् । एकशालिकम् ॥१२०॥

**गोण्यादेश्चेकण् ।७।१।१२१॥**

एभ्य एकशालायाश्च तस्य तुल्ये इकण् स्यात् । गौणिकम् , आङ्गुलिकम् , ऐकशालिकम् ॥१२१॥

**कर्कलोहिताट्टीकण् च ।७।१।१२२॥**

आभ्यां तस्य तुल्ये टीकण् इकण् च स्यात्। कार्कीकः, कार्किकः, लौहितीक, लौहितिकः ॥१२२॥

**वेर्विस्तृते शाल-शङ्कटौ ।७।१।१२३॥**

[¹वेर्विस्तृते शाल-सङ्कटौ स्याताम्] विशालः, विशङ्कटः ॥१२३॥

**कटः ।७।१।१२४॥**

वेर्विस्तृतेऽर्थे कटः स्यात्। विकटः ॥१२४॥

**सं-प्रोन्नेः संकीर्ण-प्रकाशा-ऽधिक-समीपे ।७।१।१२५॥**

एभ्यो यथासङ्ख्यमेष्वर्थेषु कटः स्यात्। सङ्कटः, प्रकटः, उत्कटः, निकटः ॥१२५॥

**अवात् कुटारश्चावनते ।७।१।१२६॥**

अवादवनतेऽर्थे कुटारः कटश्च स्यात्। अवकुटारः, अवकटः ॥१२६॥

**नासानति-तद्वतोष्टीट-नाट-भ्रटम् ।७।१।१२७॥**

अवान्नासानतौ तद्वति चार्थे एते स्युः। अवटीटम्, अवनाटम्, अवभ्रटं नासानमनम्, तद्वद् वा नासादि ॥१२७॥

**नेरिन-पिट-काश्चिक्-चि-चिकश्चाऽस्य ।७।१।१२८॥**

नेर्नासानतौ तद्वति चार्थे एते स्युः, तद्योगे च नेर्यथासङ्ख्यं चिक्-चि-चिकः। चिकिनम्, चिपिटम्, चिक्कं नासानमनं नासादि च ॥१२८॥

**बिड-बिरीसौ नीरन्ध्रे च ।७।१।१२९॥**

नेर्नीरन्ध्रे नासानति-तद्वतोश्च एतौ स्याताम्। निबिडाः, निबिरीसाः केशाः, निबिडम्, निबिरीसं नासानमनं नासादि च ॥१२९॥

**क्लिन्नाल्लश्चक्षुषि चिल्-पिल्-चुल् चास्य ।७।१।१३०॥**

क्लिन्नाच्चक्षुष्यर्थे लः स्यात्, तद्योगे चास्य चिल्-पिल्-चुलः। चिल्लम्, पिल्लम्, चुल्लं चक्षुः ॥१३०॥

**उपत्यका-ऽधित्यके ।७।१।१३१॥**

१. [ ] P3सं० मध्ये एव ॥

एतौ निपात्येते । उपत्यका गिर्यासन्ना भूः , अधित्यका पर्वताऽधिरूढा भूः ॥१३१॥

**अवेः संघात-विस्तारे कट-पटम् ।७।१।१३२॥**

अवेरर्थात् षष्ठ्यन्तात् संघाते विस्तारे चार्थे यथासङ्ख्यं कट-पटौ स्याताम् । अविकटः संघातः , अविपटो विस्तारः ॥१३२॥

**पशुभ्यः स्थाने गोष्ठः ।७।१।१३३॥**

पश्वर्थेभ्यः षष्ठ्यन्तेभ्यः स्थानेऽर्थे गोष्ठः स्यात् । गोगोष्ठम् , अश्वगोष्ठम् ॥१३३॥

**द्वित्वे गोयुगः ।७।१।१३४॥**

पश्वर्थेभ्यस्तस्य द्वित्वेऽर्थेऽयं स्यात् । गोगोयुगम् ॥१३४॥

**षट्त्वे षड्गवः ।७।१।१३५॥**

पश्वर्थेभ्यस्तस्य षट्त्वेऽयं स्यात् । हस्तिषड्गवम् ॥१३५॥

**तिलादिभ्यः स्नेहे तैलः ।७।१।१३६॥**

एभ्यस्तस्य स्नेहेऽर्थे तैलः स्यात् । तिलतैलम् , सर्षपतैलम् ॥१३६॥

**तत्र घटते कर्मणष्ठः ।७।१।१३७॥**

**तत्रे**ति ङ्यन्तात् कर्मशब्दाद् घटते इत्यर्थे ठः स्यात् । कर्मठः ॥१३७॥

**तदस्य सञ्जातं तारकादिभ्य इतः ।७।१।१३८॥**

**तदि**ति स्यन्तेभ्य एभ्यो**ऽस्ये**ति षष्ठ्यर्थे इतः स्यात् , स्यन्तं सञ्जातं चेत् । तारकितं नभः , पुष्पितस्तरुः ॥१३८॥

**गर्भादप्राणिनि ।७।१।१३९॥**

गर्भात् तदस्य सञ्जातमित्यर्थे इतः स्यात् , न तु प्राणिनि । गर्भितो व्रीहिः ॥१३९॥

**प्रमाणान्मात्रट् ।७।१।१४०॥**

स्यन्तात् प्रमाणार्थात् षष्ठ्यर्थे मात्रट् स्यात् । आयामः प्रमाणम् । जानुमात्रं जलम् , तन्मात्री भूः ॥१४०॥

**हस्ति-पुरुषाद् वाऽण् ।७।१।१४१॥**

स्यन्ताभ्यां प्रमाणार्थाभ्यामाभ्यां षष्ठ्यर्थेऽण् वा स्यात् । हास्तिनम् , हस्तिमात्रम्

, हस्तिदघ्नम् , हस्तिद्वयसं जलम् , एवं पौरुषम् ॥१४१॥

**वोर्ध्वं दघ्नट् द्वयसट् ।७।१।१४२॥**

ऊर्ध्वं यत् प्रमाणं तदर्थात् स्यन्तात् षष्ठ्यर्थे वैतौ स्याताम् । ऊरुदघ्नम् , ऊरुद्वयसम् , ऊरुमात्रं जलम् । ऊर्ध्वमिति किम् ? रज्जुमात्री भूः ॥१४२॥

**मानादसंशये लुप् ।७।१।१४३॥**

मानार्थ एव साक्षाद् यः प्रमाणशब्दो हस्त-वितस्त्यादिर्न तु रज्ज्वादिः , तस्मात् प्रस्तुतस्य मात्रडादेरसंशये गम्ये लुप् स्यात् । हस्तः , वितस्तिः । मानादिति किम् ? ऊरुमात्रं जलम् । असंशय इति किम् ? शममात्रं स्यात् ॥१४३॥

**द्विगोः संशये च ।७।१।१४४॥**

मानान्ताद् द्विगोः संशयेऽसंशये च प्रस्तुतमात्रडादेर्लुप् स्यात् । द्विवितस्तिः , द्विप्रस्थः स्यात् ॥१४४॥

**मात्रट् ।७।१।१४५॥**

स्यन्तान्मानार्थात् षष्ठ्यर्थे मात्रट् स्यात् , संशये । प्रस्थमात्रं स्यात् ॥१४५॥

**शन्-शद्-विंशतेः ।७।१।१४६॥**

शन्नन्ताच्छदन्ताच्च सङ्ख्यार्थाद् विंशतेश्च मानवृत्तेः स्यन्तात् षष्ठ्यर्थे मात्रट् स्यात् , संशये । दशमात्राः स्युः , एवं त्रिंशन्मात्राः , विंशतिमात्राः ॥१४६॥

**डिन् ।७।१।१४७॥**

शन्-शद्-विंशतिभ्यः स्यन्तेभ्यो मानार्थेभ्यः षष्ठ्यर्थे डिन् स्यात् । पञ्चदशी अर्धमासः , त्रिंशी मासः , विंशिनो भवनेन्द्राः ॥१४७॥

**इदं-किमोऽतुरियू-कियू चास्य ।७।१।१४८॥**

आभ्यां मानार्थाभ्यां षष्ठ्यर्थे मेयेऽतुः स्यात् , तद्योगे चानयोर्यथासंख्य-मियूकियौ स्याताम् । इयान् , कियान् पटः ॥१४८॥

**यत्-तदेतदो डावादिः ।७।१।१४९॥**

एभ्यः स्यन्तेभ्यो मानार्थेभ्यः षष्ठ्यर्थे मेयेऽतुर्डावादिः स्यात् । यावान् , तावान् , एतावान् धान्यराशिः ॥१४९॥

**यत्-तत्-किमः सङ्ख्याया डतिर्वा ।७।१।१५०॥**

संख्यारूपं यन्मानं तदर्थेभ्य एभ्यः स्यन्तेभ्यः षष्ठ्यर्थे संख्येये डतिर्वा स्यात् । यति , यावन्तः ; एवं तति , तावन्तः ; कति , कियन्तः ॥१५०॥

**अवयवात् तयट् ।७।१।१५१॥**

अवयववृत्तेः संख्यार्थात् स्यन्तात् षष्ठ्यर्थेऽवयविनि तयट् स्यात् । पञ्चतयो यमः ॥१५१॥

**द्वि-त्रिभ्यामयट् वा ।७।१।१५२॥**

आभ्यामवयवार्थाभ्यां स्यन्ताभ्यां षष्ठ्यर्थेऽयट् वा स्यात् । द्वयम् , द्वितयम् ; त्रयम् , त्रितयम् ॥१५२॥

**द्व्यादेर्गुणान्मूल्य-क्रेये मयट् ।७।१।१५३॥**

द्व्यादेर्गुणवृत्तेः स्यन्तात् षष्ठ्यर्थे मयट् स्यात् , द्व्यादिश्चेन्मूल्यार्थः क्रयार्थो वा । द्विमयमुदश्विद् यवानाम् , एवं त्रिमयम् ; द्विमया यवा उदश्वितः , एवं त्रिमयाः । गुणादिति किम् ? द्वौ व्रीहि-यवौ मूल्यमस्य ॥१५३॥

**अधिकं तत्सङ्ख्यमस्मिन् शत-सहस्रे शति-शद्-दशान्ताया डः ।७।१।१५४॥**

स्यन्तात् शत्याद्यन्तात् संख्यार्था**दस्मि**न्निति ड्यर्थे , शत-सहस्रे च डः स्यात् , स्यन्तं चेदधिकं शतादिसंख्यं च वस्तु स्यात् । विंशं योजनशतं योजनसहस्रं वा , एवं त्रिंशम् , एकादशम् । तत्संख्यमिति किम् ? विंशतिर्दण्डा अधिका अस्मिन् योजनशते ॥१५४॥

**सङ्ख्यापूरणे डट् ।७।१।१५५॥**

संख्या पूर्यते येन तत्रार्थे संख्याया डट् स्यात् । एकादशी । संख्येति किम् ? एकादशानामुष्ट्रिकाणां पूरणो घटः ॥१५५॥

**विंशत्यादेर्वा तमट् ।७।१।१५६॥**

अस्याः संख्यायाः संख्यापूरणे तमट् वा स्यात् । विंशतितमः , विंशः ; त्रिंशत्तमः , त्रिंशः ॥१५६॥

**शतादि-मासा-ऽर्द्धमास-संवत्सरात् ।७।१।१५७॥**

शतादेः संख्याया मासादेश्च संख्यापूरणे तमट् स्यात् । शततमी , सहस्रतमी , मासतमः , अर्धमासतमः , संवत्सरतमो दिनः ॥१५७॥

## षष्ट्यादेरसङ्ख्यादेः ।७।१।१५८।।

संख्या आदिरवयवो यस्य तद्वर्जात् षष्ट्यादेः संख्यापूरणे तमट् स्यात्। षष्टितमः , सप्ततितमः । असंख्यादेरिति किम् ? एकषष्टः ।।१५८।।

## नो मट् ।७।१।१५९।।

असंख्यादेर्नान्तायाः संख्यायाः संख्यापूरणे मट् स्यात्। पञ्चमी । असंख्यादेरित्येव- द्वादशः ।।१५९।।

## पित् तिथट् बहु-गण-पूग-संघात् ।७।१।१६०।।

एभ्यः संख्यापूरणे तिथट् स्यात् पित् । बहुतिथी , गणतिथः , पूगतिथः , सङ्घतिथः ।।१६०।।

## अतोरिथट् ।७।१।१६१।।

अत्वन्तात् संख्यापूरणे इथट् स्यात् पित् । इयतिथः , तावतिथी ।।१६१।।

## षट्-कति-कतिपयात् थट् ।७।१।१६२।।

एभ्यः संख्यापूरणे थट् स्यात् पित्। षष्ठी , कतिथः , कतिपयथी ।।१६२।।

## चतुरः ।७।१।१६३।।

अस्मात् संख्यापूरणे थट् स्यात् । चतुर्थी ।।१६३।।

## येयौ च लुक् च ।७।१।१६४।।

चतुरः संख्यापूरणे एतौ स्याताम् , चस्य लुक् च । तुर्यः , तुरीयः ।।१६४।।

## द्वेस्तीयः ।७।१।१६५।।

द्वेः संख्यापूरणे तीयः स्यात् । द्वितीयः ।।१६५।।

## त्रेस्तृ च ।७।१।१६६।।

त्रेः संख्यापूरणे तीयः स्यात् , तद्योगे चास्य तृः । तृतीया ।।१६६।।

## पूर्वमनेन सादेश्चेन् ।७।१।१६७।।

पूर्वमित्यमन्तात् केवलात् सपूर्वाच्चाऽनेनेति टार्थे कर्त्तरि इन् स्यात् । पूर्वी कटम् , पीतपूर्वी पयः ।।१६७।।

## इष्टादेः ।७।१।१६८।।

एभ्योऽर्थात् स्यन्तेभ्यष्टार्थे कर्त्तरि इन् स्यात्। इष्टी यज्ञे , पूर्त्ती श्राद्धे ।।१६८।।

**श्राद्धमद्यभुक्तमिकेनौ ।७।१।१६९।।**

श्राद्धात् स्यन्तादद्यभुक्ताद्दार्थे कर्त्तरि एतौ स्याताम् । श्राद्धिकः , श्राद्धी ।।१६९।।

**अनुपद्यन्वेष्टा ।७।१।१७०।।**

एष इन्नन्तो निपात्यते , अन्वेष्टा चेत् । अनुपदी गवाम् ।।१७०।।

**दाण्डाजिनिका-ऽऽयःशूलिक-पार्श्वकम् ।७।१।१७१।।**

एते यथायोगमिकण्-कान्ता निपात्याः , अन्वेष्टर्यर्थे । **दाण्डाजिनिको** दाम्भिकः , **आयःशूलिकः** तीक्ष्णोपायोऽर्थान्वेष्टा , **पार्श्वकः** अनृजूपायः स एव ।।१७१।।

**क्षेत्रेऽन्यस्मिन् नाश्य इयः ।७।१।१७२।।**

क्षेत्रान्निर्देशाद् ङ्यन्तादन्योपाधिकान्नाश्येऽर्थे इयः स्यात् । क्षेत्रियो व्याधिः , जारश्च ।।१७२।।

**छन्दोऽधीते श्रोत्रश्च वा ।७।१।१७३।।**

अस्मादमन्तादधीतेऽर्थे इयो वा स्यात् , तद्योगे चास्य श्रोत्रः । श्रोत्रियः , छान्दसः ।।१७३।।

**इन्द्रियम् ।७।१।१७४।।**

इन्द्राद् इयो निपात्यः । इन्द्रस्य लिङ्गादि इन्द्रियम् ।।१७४।।

**तेन वित्ते चञ्चु-चणौ ।७।१।१७५।।**

**तेने**ति टान्ताद् वित्तेऽर्थे एतौ स्याताम् । विद्याचञ्चुः , केशचणः ।।१७५।।

**पूरणाद् ग्रन्थस्य ग्राहके को लुक् चाऽस्य ।७।१।१७६।।**

पूरणप्रत्ययान्ताट्टान्ताद् ग्रन्थस्य ग्राहकेऽर्थे कः स्यात् , तद्योगे च पूरणार्थस्य लुक् । द्विकः शिष्यः ।।१७६।।

**ग्रहणाद् वा ।७।१।१७७।।**

गृह्यतेऽनेनेति ग्रहणं रूपादि , ग्रन्थस्य ग्रहणार्थात् पूरणप्रत्ययान्तात् कः स्वार्थे स्यात् , तद्योगे च पूरणार्थस्य लुग् वा । द्विकं द्वितीयकं वा ग्रन्थग्रहणम् ।।१७७।।

**सस्याद् गुणात् परिजाते ।७।१।१७८।।**

सस्याद् गुणार्थाट्टान्तात् परिजातेऽर्थे कः स्यात् । सस्यकः शालिर्देशो वा

। गुणादिति किम् ? सस्येन परिजातं क्षेत्रम् ॥१७८॥

**धन-हिरण्ये कामे ।७।१।१७९॥**

आभ्यां ङ्यन्ताभ्यां कामेऽर्थे कः स्यात् । धनकः , हिरण्यको मैत्रस्य ॥१७९॥

**स्वाङ्गेषु सक्ते ।७।१।१८०॥**

स्वाङ्गार्थेभ्यो ङ्यन्तेभ्यः सक्तेऽर्थे कः स्यात् । नखकः , दन्तौष्ठकः ॥१८०॥

**उदरे त्विकणाद्यूने ।७।१।१८१॥**

अस्माद् ङ्यन्तात् सक्ते आद्यूनेऽर्थे इकण् स्यात् । औदरिकः , उदरकोऽन्यः ॥१८१॥

**अंशं हारिणि ।७।१।१८२॥**

अंशादमन्ताद् हारिण्यर्थे कः स्यात् । अंशको दायादः ॥१८२॥

**तन्त्रादचिरोद्धृते ।७।१।१८३॥**

तन्त्रात् पञ्चम्यन्तादचिरोद्धृतेऽर्थे कः स्यात् । तन्त्रकः पटः ॥१८३॥

**ब्राह्मणान्नाम्नि ।७।१।१८४॥**

अस्माद् ङस्यन्तादचिरोद्धृतेऽर्थे कः स्यात् , नाम्नि । ब्राह्मणको नाम देशः ॥१८४॥

**उष्णात् ।७।१।१८५॥**

उष्णाद् ङस्यन्तादचिरोद्धृतेऽर्थे कः स्यात् , नाम्नि । उष्णिका यवागूः ॥१८५॥

**शीताच्च कारिणि ।७।१।१८६॥**

शीतोष्णाभ्यामर्थादमन्ताभ्यां कारिण्यर्थे कः स्यात् , नाम्नि । शीतकोऽलसः , उष्णको दक्षः ॥१८६॥

**अधेरारूढे ।७।१।१८७॥**

अधेरारूढार्थात् स्वार्थे कः स्यात् । अधिको द्रोणः खार्याः , अधिका खारी द्रोणेन ॥१८७॥

**अनोः कमितरि ।७।१।१८८॥**

अनोः कः स्यात् , तदन्तश्चेत् कमितरि । अनुकः ॥१८८॥

**अभेरीश्च वा ।७।१।१८९॥**

अभेः कः स्यात्, ईश्चाऽस्य वा तदन्तश्चेत् कमितरि। अभिकः, अभीकः ॥१८९॥

**सोऽस्य मुख्यः ।७।१।१९०॥**

**स** इति स्यन्ताद् **अस्येति** षष्ठ्यर्थे कः स्यात्, स्यन्तं चेन्मुख्यार्थम्। देवदत्तकः सङ्घः ॥१९०॥

**शृङ्खलकः करभे ।७।१।१९१॥**

कान्तो निपात्यः। करभ[1] उष्ट्रशिशुः ॥१९१॥

**उदुत्सोरुन्मनसि ।७।१।१९२॥**

आभ्यामस्येति उन्मनस्यर्थे कः स्यात्। उत्कः, उत्सुकः ॥१९२॥

**काल-हेतु-फलाद् रोगे ।७।१।१९३॥**

कालविशेषार्थेभ्यो हेत्वर्थेभ्यः फलार्थेभ्यश्च स्यन्तेभ्योऽस्येति रोगेऽर्थे कः स्यात्। द्वितीयको ज्वरः, पर्वतको रोगः, शीतको ज्वरः ॥१९३॥

**प्रायोऽन्नमस्मिन् नाम्नि ।७।१।१९४॥**

स्यन्तादस्मिन्निति ङ्यर्थे संज्ञाविषये कः स्यात्, स्यन्तं चेदन्नं प्रायेण। गुडापूपिका पौर्णमासी ॥१९४॥

**कुल्माषादण् ।७।१।१९५॥**

अस्मात् स्यन्तात् प्रायोऽन्नमस्मिन्नित्यर्थेऽण् स्यात्, नाम्नि। कौल्माषी, पौर्णमासी ॥१९५॥

**वटकादिन् ।७।१।१९६॥**

अस्मात् स्यन्तात् प्रायोऽन्नमस्मिन्नित्यर्थे इन् स्यात्, नाम्नि। वटकिनी पौर्णमासी ॥१९६॥

**साक्षाद् द्रष्टा ।७।१।१९७॥**

साक्षातो द्रष्टेत्यस्मिन्नर्थे इन् स्यात्, नाम्नि। साक्षी ॥१९७॥

इति[2] [आचार्यश्री**हेमचन्द्र**विरचितायां **सिद्धहेमचन्द्रा**भिधानस्वोपज्ञशब्दानुशासन-लघुवृत्तौ] सप्तमस्याध्यायस्य प्रथमः पादः समाप्तः ॥७।१॥

लब्धलक्षा[3] विपक्षेषु विलक्षास्त्वयि मार्गणाः।
तथापि तव **सिद्धेन्द्र** ! दातेत्युत्कन्धरं यशः ॥२५॥

१. **करभक उष्ट्रशिशुकः** P3मू० । **शृंखलक उष्ट्रशिशुकः** P3सं० ॥ २. इति J2 नास्ति ॥
३. श्लोकोऽयं प्रा० मध्ये J2 टिप्पने बृहद्वृत्तौ च ॥

## [ द्वितीयः पादः ]

### तदस्याऽस्त्यस्मिन्निति मतुः ।७।२।१।।

तदिति स्यन्ताद् , **अस्येति** षष्ठ्यर्थेऽ**स्मिन्निति** ङ्यर्थे वा मतुः स्यात् , चेत् स्यन्तमस्तीति । गोमान् , वृक्षवान् गिरिः । अस्तीति किम् ? गावोऽस्यासन् । इतेः प्रायो भूमादौ मत्वादयः ।।१।।

### आ यात् ।७।२।२।।

*रूपात् प्रशस्ताहतात्* [७।२।५४] इति आ यविधेर्वक्ष्यमाणप्रकृतिभ्यो मतुः स्यात् , तदस्यास्ति तदस्मिन्नस्तीति विषये । कुमारीमान् , व्रीहिमान् ।।२।।

### नावादेरिकः ।७।२।३।।

एभ्यो मत्वर्थे इकः स्यात् । नाविकः , नौमान् । एवं कुमारिकः , कुमारीमान् ।।३।।

### शिखादिभ्य इन् ।७।२।४।।

एभ्यो मत्वर्थे इन् स्यात् । शिखी , शिखावान् ; माली ।।४।।

### व्रीह्यादिभ्यस्तौ ।७।२।५।।

एभ्यो मत्वर्थे इकेनौ स्यातास् । व्रीहिकः , व्रीही , व्रीहिमान् ; मायिकः ; मायी , [मा[१]यावान् , मायावी] ।।५।।

### अतोऽनेकस्वरात् ।७।२।६।।

अदन्तादनेकस्वराद् मत्वर्थे इकेनौ स्याताम् । दण्डिकः , दण्डी , दण्डवान् ; छत्रिकः , छत्री , छत्रवान् । अनेकस्वरादिति किम् ? खवान् ।।६।।

### अशिरसोऽशीर्षश्च ।७।२।७।।

अस्मान्मत्वर्थे इकेनौ स्याताम् , मतुश्च , तद्योगे चास्याऽशीर्षः । अशीर्षिकः , अशीर्षी , अशीर्षवान् ।।७।।

### अर्था-ऽर्थान्ताद् भावात् ।७।२।८।।

अर्थादर्थान्ताच्च भावार्थादिव मत्वर्थे इकेनावेव स्याताम् । अर्थिकः , अर्थी ;

---

१. [ ] पासं०२ मध्ये एव ।।

प्रत्यर्थिकः , प्रत्यर्थी ; मतुर्न स्यात् । भावादिति किम् ? धनार्थाद् मतुरेव-अर्थवान् ॥८॥

**व्रीह्यर्थ-तुन्दादेरिलश्च ।७।२।९॥**

आभ्यां मत्वर्थे इल इकेनौ च स्युः । शालिलः , शालिकः , शाली , शालिमान् ; तुन्दिलः , तुन्दिकः , तुन्दी , तुन्दवान् ; उदरिलः , उदरिकः , उदरी , [उदरवान्][1] ॥९॥

**स्वाङ्गाद् विवृद्धात् ते ।७।२।१०॥**

अस्मान्मत्वर्थे इलेकेनाः स्युः । कर्णिलः , कर्णिकः , कर्णी , कर्णवान् ॥१०॥

**वृन्दादारकः ।७।२।११॥**

मत्वर्थे स्यात् । वृन्दारकः , वृन्दवान् , [वृन्दी][2] ॥११॥

**शृङ्गात् ।७।२।१२॥**

मत्वर्थे आरकः स्यात् । शृङ्गारकः , शृङ्गवान् , शृङ्गी[3] ॥१२॥

**फल-बर्हाच्चेनः ।७।२।१३॥**

आभ्यां शृङ्गाच्च मत्वर्थे इनः स्यात् । फलिनः , फलवान् ; बर्हिणः , शृङ्गिणः ॥१३॥

**मलादीमसश्च ।७।२।१४॥**

मलान्मत्वर्थे ईमस इनश्च स्यात् । मलीमसः , मलिनः , मलवान् ॥१४॥

**मरुत्-पर्वणस्तः ।७।२।१५॥**

आभ्यां मत्वर्थे तः स्यात् । मरुत्तः , मरुत्वान् ; पर्वतः , पर्ववान् ॥१५॥

**वलि-वटि-तुण्डेर्भः ।७।२।१६॥**

एभ्यो मत्वर्थे भः स्यात् । वलिभः , वटिभः , तुण्डिभः , वलिमान् ॥१६॥

**ऊर्णा-ऽहं-शुभमो युस् ।७।२।१७॥**

एभ्यो मत्वर्थे युः स्यात् । ऊर्णायुः , अहंयुः , शुभंयुः ॥१७॥

**कं-शंभ्यां युस्-ति-यस्-तु-त-व-भम् ।७।२।१८॥**

---

१. [ ] पासं० २, J2सं०, P3सं० मध्ये ॥ २. [ ] पासं०२ मध्ये ॥
३. शृङ्गी J2 P3 नास्ति ॥

आभ्यां मत्वर्थे एते स्युः । कंयुः , शंयुः , कंतिः , शंतिः , कंयः , शंयः , कंतुः , शंतुः , कंतः , शंतः , कंवः , शंवः , कंभः , शंभः ॥१८॥

**बल-वात-दन्त-ललाटादूलः ।७।२।१९॥**

एभ्यो मत्वर्थे ऊलः स्यात् । बलूलः , वातूलः , दन्तूलः , ललाटूलः , बलवान् ॥१९॥

**प्राण्यङ्गादातो लः ।७।२।२०॥**

प्राण्यङ्गार्थादादन्ताद् मत्वर्थे लः स्यात् । चूडालः , चूडावान् । प्राण्यङ्गादिति किम् ? जङ्घावान् प्रासादः ॥२०॥

**सिध्मादि-क्षुद्रजन्तु-रुग्भ्यः ।७।२।२१॥**

सिध्मादेः क्षुद्रजन्त्वर्थाद् रुगर्थाच्च मत्वर्थे लः स्यात् । सिध्मलः , सिध्मवान् , वर्ध्मलः , यूकालः , मूर्च्छालः ॥२१॥

**प्रज्ञा-पर्णोदक-फेनाल्लेलौ ।७।२।२२॥**

एभ्यो मत्वर्थे लेलौ स्याताम् । प्रज्ञालः , प्रज्ञिलः ; पर्णलः , पर्णिलः ; उदकलः , उदकिलः ; फेनलः , फेनिलः , फेनवान् ॥२२॥

**काला-जटा-घाटात् क्षेपे ।७।२।२३॥**

एभ्यो मत्वर्थे लेलौ स्याताम् , क्षेपे गम्ये । कालालः , कालिलः ; जटालः , जटिलः ; घाटालः , घाटिलः । क्षेपे इति किम् ? कालावान् ॥२३॥

**वाच आला-ऽऽटौ ।७।२।२४॥**

मत्वर्थे स्याताम् , क्षेपे गम्ये । वाचालः , वाचाटः ॥२४॥

**ग्मिन् ।७।२।२५॥**

वाचो मत्वर्थे ग्मिन् स्यात् । वाग्मी , वाग्वान् ॥२५॥

**मध्वादिभ्यो रः ।७।२।२६॥**

मत्वर्थे स्यात् । मधुरो रसः , खरो गर्दभः ॥२६॥

**कृष्यादिभ्यो वलच् ।७।२।२७॥**

मत्वर्थे स्यात् । कृषीवलः कुटुम्बी , आसुतीवलः कल्यपालः , आसुतिमान् ॥२७॥

**लोम-पिच्छादेः शेलम् ।७।२।२८।।**

लोमादेः पिच्छादेश्च मत्वर्थे यथासंख्यं श इलश्च स्यात् । लोमशः , लोमवान् , गिरिशः ; पिच्छिलः , पिच्छवान् , उरसिलः ।।२८।।

**नोऽङ्गादेः ।७।२।२९।।**

एभ्यो मत्वर्थे नः स्यात् । अङ्गना चार्वङ्गी स्त्री , पामनः , पामवान् ।।२९।।

**शाकी-पलाली-दर्द्रवा ह्रस्वश्च ।७।२।३०।।**

एभ्यो मत्वर्थे नः स्यात् , तद्योगे चैषां ह्रस्वः । महच्छाकं पलालं च शाकी , पलाली ; दर्द्रूर्व्याधिः ; शाकिनः , शाकीमान् , पलालिनः , दद्रुणः ।।३०।।

**विष्वचो विषुश्च ।७।२।३१।।**

अस्मात् मत्वर्थे नः स्यात् , विषुश्चास्य । विषुणः रविर्वायुर्वा , विष्वग्वान् ।।३१।।

**लक्ष्म्या अनः ।७।२।३२।।**

मत्वर्थे स्यात् । लक्ष्मणः , लक्ष्मीवान् ।।३२।।

**प्रज्ञा-श्रद्धा-ऽर्चा-वृत्तेर्णः ।७।२।३३।।**

एभ्यो मत्वर्थे णः स्यात् । प्राज्ञः , प्रज्ञावान् ; श्राद्धः , आर्चः , वार्त्तः ।।३३।।

**ज्योत्स्नादिभ्योऽण् ।७।२।३४।।**

मत्वर्थे स्यात् । ज्यौत्स्नी रात्रिः , तामिस्री ।।३४।।

**सिकता-शर्करात् ।७।२।३५।।**

आभ्यां मत्वर्थेऽण् स्यात् । सैकतः , सिकतावान् ; शार्करः ।।३५।।

**इलश्च देशे ।७।२।३६।।**

सिकता-शर्कराभ्यां देशे मत्वर्थे इला-ऽणौ स्याताम् । सिकतिलः , सैकतः , सिकतावान् ; शर्करिलः , शार्करो देशः ।।३६।।

**द्यु-द्रोर्मः ।७।२।३७।।**

आभ्यां मत्वर्थे मः स्यात् । द्युमः , द्रुमः ।।३७।।

**काण्डा-ऽऽण्ड-भाण्डादीरः ।७।२।३८।।**

एभ्यो मत्वर्थे ईरः स्यात् । काण्डीरः , काण्डवान् ; आण्डीरः , भाण्डीरः ॥३८॥

**कच्छ्वा डुरः ।७।२।३९॥**

मत्वर्थे स्यात् । कच्छुरः , कच्छूमान् ॥३९॥

**दन्तादुन्नतात् ।७।२।४०॥**

उन्नत्युपाधेर्दन्ताद् मत्वर्थे डुरः स्यात् । दन्तुरः । उन्नतादिति किम् ? दन्तवान् ॥४०॥

**मेधा-रथान्नवेरः ।७।२।४१॥**

आभ्यां मत्वर्थे इरो वा स्यात् । मेधिरः , मेधावान् , मेधावी ; रथिरः , रथिकः , रथी ॥४१॥

**कृपा-हृदयादालुः ।७।२।४२॥**

आभ्यां मत्वर्थे वाऽऽलुः स्यात् । कृपालुः , कृपावान् ; हृदयालुः , हृदयी ॥४२॥

**केशाद् वः ।७।२।४३॥**

मत्वर्थे वा स्यात् । केशवः , केशवान् , केशी ॥४३॥

**मण्यादिभ्यः ।७।२।४४॥**

एभ्यो मत्वर्थे वः स्यात् । मणिवः , मणिमान् ; हिरण्यवः , हिरण्यवान् ॥४४॥

**हीनात् स्वाङ्गादः ।७।२।४५॥**

हीनत्वोपाधेः स्वाङ्गार्थाद् मत्वर्थे अः स्यात् । कर्णः । हीनादिति किम् ? कर्णवान् ॥४५॥

**अभ्रादिभ्यः ।७।२।४६॥**

एभ्यो मत्वर्थे अः स्यात् । अभ्रं नभः , अर्शसो मैत्रः ॥४६॥

**अस्-तपो-माया-मेधा-स्रजो विन् ।७।२।४७॥**

असन्तात् , तपसादेश्च मत्वर्थे विन् स्यात् । यशस्वी , यशस्वान् ; तपस्वी , मायावी , मेधावी , स्रग्वी ॥४७॥

**आमयाद् दीर्घश्च ।७।२।४८।।**

अस्माद् मत्वर्थे विन् स्यात् , दीर्घश्चास्य । आमयावी , आमयवान् ।।४८।।

**स्वान्मिन्नीशे ।७।२।४९।।**

स्वाद् मत्वर्थे ईशे मिन् स्यात् , दीर्घश्चास्य । स्वामी , स्ववान् अन्यः ।।४९।।

**गोः ।७।२।५०।।**

गोर्मत्वर्थे मिन् स्यात् । गोमी , गोमान् ।।५०।।

**ऊर्जो विन्-वलावस् चान्तः ।७।२।५१।।**

ऊर्जो मत्वर्थे विन्-वलौ स्याताम् , तद्योगे चोर्जोऽसन्तः । ऊर्जस्वी , ऊर्जस्वलः , ऊर्ग्वान् ।।५१।।

**तमिस्राऽर्णव-ज्योत्स्नाः ।७।२।५२।।**

एते मत्वर्थे निपात्याः । तमिस्रा रात्रिः , तमिस्राणि गुहामुखानि , तमस्वान् , अर्णवः समुद्रः , ज्योत्स्ना चन्द्रप्रभा ।।५२।।

**गुणादिभ्यो यः ।७।२।५३।।**

एभ्यो मत्वर्थे यः स्यात् । गुण्यो ना , हिम्यो गिरिः , हिमवान् ।।५३।।

**रूपात् प्रशस्ता-ऽऽहतात् ।७।२।५४।।**

प्रशस्तोपाधेराहतोपाधेश्च रूपाद् मत्वर्थे यः स्यात् । रूप्यो गौः , रूप्यं कार्षापणम् , रूपवान् अन्यः ।।५४।।

**पूर्णमासोऽण् ।७।२।५५।।**

मत्वर्थे स्यात् । पौर्णमासी ।।५५।।

**गोपूर्वादत इकण् ।७।२।५६।।**

गोपूर्वाददन्ताद् मत्वर्थे इकण् स्यात् । गौशतिकः । अत इति किम् ? गोविंशतिमान् ।।५६।।

**निष्कादेः शत-सहस्रात् ।७।२।५७।।**

निष्काद्यवयवात् परं यत् शतं सहस्रं च तदन्ताद् मत्वर्थे इकण् स्यात् । नैष्कशतिकः , नैष्कसहस्रिकः । आदेरिति किम् ? स्वर्णनिष्कशतमस्यास्ति ।।५७।।

**एकादेः कर्मधारयात् ।७।२।५८।।**

अस्माददन्ताद् मत्वर्थे इकण् स्यात् । ऐकगविकः ।।५८।।

**सर्वादेरिन् ।७।२।५९।।**

सर्वाऽऽदेरदन्तात् कर्मधारयाद् इन् स्यात् । सर्वधनी ।।५९।।

**प्राणिस्थादस्वाङ्गाद् द्वन्द्व-रुग्-निन्द्यात् ।७।२।६०।।**

प्राणिस्थोऽस्वाङ्गार्थोऽदन्तो यो द्वन्द्वो , यश्च रुग्वाची निन्द्यार्थश्च तस्माद् मत्वर्थे इन् स्यात् । कटकवलयिनी , कुष्ठी , ककुदावर्त्ती । प्राणिस्थादिति किम् ? पुष्पफलवान् वृक्षः । अस्वाङ्गादिति किम् ? स्तनकेशवती ।।६०।।

**वाता-ऽतीसार-पिशाचात् कश्चान्तः ।७।२।६१।।**

एभ्यो मत्वर्थे इन् स्यात् , कश्चान्तः । वातकी , अतिसारकी , पिशाचकी ।।६१।।

**पूरणाद् वयसि ।७।२।६२।।**

पूरणप्रत्ययान्ताद् वयसि गम्ये मत्वर्थे इन्नेव स्यात् । पञ्चमी बालः ।।६२।।

**सुखादेः ।७।२।६३।।**

एभ्यो मत्वर्थे इन्नेव स्यात् । सुखी , दुःखी ।।६३।।

**मालायाः क्षेपे ।७।२।६४।।**

मत्वर्थे इन्नेव स्यात् । माली । क्षेप इति किम् ? मालावान् ।।६४।।

**धर्म-शील-वर्णान्तात् ।७।२।६५।।**

धर्माद्यन्ताद् मत्वर्थे इन्नेव स्यात् । मुनिधर्मी , यतिशीली , ब्राह्मणवर्णी ।।६५।।

**बाहूर्वादेर्बलात् ।७।२।६६।।**

बाहूरुपूर्वाद् बलाद् मत्वर्थे इन्नेव स्यात् । बाहुबली , ऊरुबली ।।६६।।

**मन्-मा-ऽब्जादेर्नाम्नि ।६।२।६७।।**

मन्नन्ताद् मान्तेभ्योऽब्जादेश्च मत्वर्थे इन्नेव स्यात् , नाम्नि । दामिनी , सोमिनी , अब्जिनी , कमलिनी ।।६७।।

**हस्त-दन्त-कराज्जातौ ।७।२।६८।।**

एभ्यो मत्वर्थे इन्नेव स्यात् , एतदन्तस्य जातावर्थे । हस्ती , दन्ती , करी ।।६८।।

**वर्णाद् ब्रह्मचारिणि ।७।२।६९॥**

वर्णाद् मत्वर्थे इन् स्यात् , चेद् ब्रह्मचार्यर्थः । वर्णी , ब्रह्मचारीत्यर्थः , वर्णवानन्यः ॥६९॥

**पुष्करादेर्देशे ।७।२।७०॥**

एभ्यो मत्वर्थे इन्नेव स्यात् , देशेऽर्थे[1] । पुष्करिणी , पद्मिनी । देश इति किम् ? पुष्करवान् हस्ती ॥७०॥

**सूक्त-साम्नोरीयः ।७।२।७१॥**

सूक्ते साम्नि चार्थे मत्वर्थे ईयः स्यात् । अच्छावाकीयं सूक्तम् , यज्ञायज्ञीयं साम ॥७१॥

**लुब् वाऽध्याया-ऽनुवाके ।७।२।७२॥**

अनयोर्मत्वर्थे ईयस्य लुब् वा स्यात् , लुब्विधेरेवेयः । गर्दभाण्डः , गर्दभाण्डीयोऽध्यायोऽनुवाको वा ॥७२॥

**विमुक्तादेरण् ।७।२।७३॥**

एभ्यो मत्वर्थेऽध्याया-ऽनुवाकयोरण् स्यात् । वैमुक्तः , दैवासुरोऽध्यायोऽनुवाको वा ॥७३॥

**घोषदादेरकः ।७।२।७४॥**

एभ्यो मत्वर्थेऽध्याया-ऽनुवाकेऽकः स्यात् । घोषदकः , गोषदकोऽध्यायादिः ॥७४॥

**प्रकारे जातीयर् ।७।२।७५॥**

स्यन्तात् षष्ठ्यर्थेऽयं स्यात् , चेत् स्यन्तं प्रकारार्थम् , सामान्यस्य विशेषो विशेषान्तरानुयायी प्रकारः । पटुजातीयः ॥७५॥

**कोऽण्वादेः ।७।२।७६॥**

एभ्यस्तदस्य प्रकार इति विषये कः स्यात् । अणुकः , स्थूलकः पटः ॥७६॥

**जीर्ण-गोमूत्रा-ऽवदात-सुरा-यव-कृष्णाच्छाल्याच्छादन-सुरा-ऽहि-व्रीहि-तिले ।७।२।७७॥**

१. देशेऽर्थे पा२ नास्ति ॥

एभ्यो यथासंख्यमेष्वर्थेषु तदस्य प्रकार इति विषये कः स्यात् । जीर्णकः शालिः , गोमूत्रकमाच्छादनम् , अवदातिका सुरा , सुरकोऽहिः , यवको व्रीहिः , कृष्णकास्तिलाः ॥७७॥

**भूतपूर्वे प्चरट् ।७।२।७८॥**

भूतपूर्वार्थात् स्वार्थे प्चरट् स्यात् । आढ्यचरी ॥७८॥

**गोष्ठादीनञ् ।७।२।७९॥**

भूतपूर्वे स्यात् । गौष्ठीनो देशः ॥७९॥

**षष्ठ्या रूप्य-प्चरट् ।७।२।८०॥**

षष्ठ्यन्ताद् भूतपूर्वेऽर्थे एतौ स्याताम् । मैत्ररूप्यो गौः , मैत्रचरः ॥८०॥

**व्याश्रये तसुः ।७।२।८१॥**

षष्ठ्यन्ताद् नानापक्षाश्रये गम्ये तसुः स्यात् । देवा अर्जुनतोऽभवन् , रविः कर्णतोऽभवत् ॥८१॥

**रोगात् प्रतीकारे ।७।२।८२॥**

षष्ठ्यन्ताद् रोगार्थादपनयने तसुः स्यात् । प्रवाहिकातः कुरु ॥८२॥

**पर्यभेः सर्वोभये ।७।२।८३॥**

आभ्यां यथासङ्ख्यं सर्वोभयार्थाभ्यां तसुः स्यात् । परितः , अभितः । सर्वोभय इति किम् ? वृक्षं परि , अभि वा ॥८३॥

**आद्यादिभ्यः ।७।२।८४॥**

एभ्यः सम्भवत्स्याद्यन्तेभ्यस्तसुः स्यात् । आदितः , मध्यतः ॥८४॥

**क्षेपा-ऽतिग्रहा-ऽव्यथेष्वकर्तुस्तृतीयायाः ।७।२।८५॥**

टान्तादकर्त्रर्थात् क्षेपादिविषये तसुः स्यात् । वृत्ततः क्षिप्तोऽतिग्राह्यो न व्यथते वा । अकर्तुरिति किम् ? मैत्रेण क्षिप्तः ॥८५॥

**पाप-हीयमानेन।७।२।८६॥**

आभ्यां योगे टान्तादकर्तुस्तसुः स्यात् । वृत्ततः पापो हीयते वा ॥८६॥

**प्रतिना पञ्चम्याः ।७।२।८७॥**

प्रतिना योगे पञ्चम्यन्तात् तसुर्वा स्यात् । अभिमन्युरर्जुनाद् अर्जुनतो वा

प्रति ॥८७॥

**अहीय-रुहोऽपादाने ।७।२।८८॥**

अपादानपञ्चम्यन्तात् तसुर्वा स्यात् , न चेत् तद् हीय-रुहोः । ग्रामाद् ग्रामतो वैति । अहीय-रुह इति किम् ? सार्थाद् हीनः , गिरेरवरोहति ॥८८॥

**किमद्व्यादिसर्वाद्यवैपुल्यबहोः पित् तस् ।७।२।८९॥**

किमो द्व्यादिवर्जसर्वादिभ्योऽवैपुल्यार्थबहोश्च ङस्यन्तात् तस् पित् स्यात् । कुतः , सर्वतः , यतः , बहुतः । द्व्यादिवर्जनं किम् ? द्वाभ्याम् , त्वत् । अवैपुल्येति किम् ? बहोः सूपात् ॥८९॥

**इतोऽतः कुतः ।७।२।९०॥**

एते तसन्ता निपात्याः ॥९०॥

**भवत्वायुष्मद्-दीर्घायुर्देवानांप्रियैकार्थात् ।७।२।९१॥**

भवत्वाद्यैस्तुल्याधिकरणात् किमद्व्यादिसर्वाद्यवैपुल्यबहोः सर्वस्याद्यन्तात् पित् तस् वा स्यात् । स भवान् , ततो भवान् ; ते भवन्तः , ततो भवन्तः , स आयुष्मान् ; तत आयुष्मान् , स दीर्घायुः , ततो दीर्घायुः ; तं देवानांप्रियम् , ततो देवानांप्रियम् ॥९१॥

**त्रप् च ।७।२।९२॥**

भवत्वाद्यैरेकार्थात् किमद्व्यादिसर्वाद्यवैपुल्यबहोः सर्वस्याद्यन्तात् त्रप् तस् च वा स्यात् । स भवान् , तत्र भवान् , ततो[1] भवान् ; [तस्मिन्[2] भवति] , ततो भवति ; तत्र भवति , आयुष्मदादिनाऽप्येवम् ॥९२॥

**क्व-कुत्रा-ऽत्रेह ।७।२।९३॥**

एते त्रबन्ता निपात्याः ॥९३॥

**सप्तम्याः ।७।२।९४॥**

सप्तम्यन्तात् किमद्व्यादिसर्वाद्यवैपुल्यबहोः त्रप् स्यात् । कुत्र , सर्वत्र , तत्र , बहुत्र ॥९४॥

**किम्-यत्-तत्-सर्वैका-ऽन्यात् काले दा ।७।२।९५॥**

एभ्यो ङ्यन्तेभ्यः कालेऽर्थे दाः स्यात् । कदा, यदा, तदा , सर्वदा ,

१. ततो भवान् पा२ नास्ति ॥ २. [ ] P3सं० मध्ये एव ॥

एकदा , अन्यदा ॥९५॥

**सदा-ऽधुनेदानीं-तदानीमेतर्हि ।७।२।९६॥**

एते कालेऽर्थे निपात्याः ॥९६॥

**सद्यो-ऽद्य-परेद्यव्यह्नि ।७।२।९७॥**

एतेऽह्नि काले निपात्याः ॥९७॥

**पूर्वा-ऽपरा-ऽधरोत्तरा-ऽन्या-ऽन्यतरेतरादेद्युस् ।७।२।९८॥**

एभ्यो ङ्यन्तेभ्योऽह्नि कालेऽर्थे एद्युस् स्यात् । पूर्वेद्युः , अपरेद्युः , अधरेद्युः , उत्तरेद्युः , अन्येद्युः , अन्यतरेद्युः , इतरेद्युः ॥९८॥

**उभयाद् द्युस् च ।७।२।९९॥**

अतोऽह्न्यर्थे द्युसेद्युसौ स्याताम् । उभयद्युः , उभयेद्युः ॥९९॥

**ऐषमः-परुत्-परारि वर्षे ।७।२।१००॥**

एते वत्सरेऽर्थे निपात्याः ॥१००॥

**अनद्यतने र्हिः ।७।२।१०१॥**

ङ्यन्तादनद्यतनकालार्थाद् यथासम्भवं किमद्व्यादिसर्वाद्यवैपुल्यबहोः र्हिः स्यात् । कर्हि , यर्हि , अमुर्हि , बहुर्हि ॥१०१॥

**प्रकारे था ।७।२।१०२॥**

प्रकारार्थात् सम्भवत्स्याद्यन्तात् किमद्व्यादिसर्वाद्यवैपुल्यबहोः था स्यात् । सर्वथा , अन्यथा ॥१०२॥

**कथमित्थम् ।७।२।१०३॥**

एतौ प्रकारे निपात्यौ ॥१०३॥

**सङ्ख्याया धा ।७।२।१०४॥**

सङ्ख्यार्थात् प्रकारवृत्तेर्धा स्यात् । एकधा , कतिधा ॥१०४॥

**विचाले च ।७।२।१०५॥**

एकस्यानेकीभावोऽनेकस्य चैकीभावो विचालः , तस्मिन् गम्ये सङ्ख्यार्थाद् धा वा[1] स्यात् । एको राशिर्द्वौ द्विधा क्रियते , अनेकमेकमेकधा वा करोति ॥१०५॥

---

१. वा पामू०२ मध्ये नास्ति ॥

**वैकाद् ध्यमञ् ।७।२।१०६।।**

एकेति सङ्ख्यार्थात् प्रकारवृत्तेर्विचाले च गम्ये ध्यमञ् वा स्यात् । ऐकध्यम् , एकधा भुङ्क्ते ; अनेकमेकं करोति-ऐकध्यम् , एकधा वा करोति ।।१०६।।

**द्वि-त्रेर्धमञेधौ वा ।७।२।१०७।।**

आभ्यां प्रकारार्थाभ्यां विचाले च गम्ये एतौ वा स्याताम् । द्वैधम् ; त्रैधम् ; द्वेधा , त्रेधा ; द्विधा , त्रिधा , भुङ्क्ते ; एकराशिं द्वौ करोति-द्वैधम् , त्रैधम् ; द्वेधा , त्रेधा ; द्विधा , त्रिधा[1] , करोति ।।१०७।।

**तद्वति धण् ।७।२।१०८।।**

द्वि-त्रिभ्यां प्रकारवति विचालवति चार्थे धण् स्यात् । द्वैधानि , त्रैधानि ।।१०८।।

**वारे कृत्वस् ।७।२।१०९।।**

वारवृत्तेः संख्यार्थाद् वारवति धात्वर्थे कृत्वस् स्यात् । पञ्चकृत्वो भुङ्क्ते ।।१०९।।

**द्वि-त्रि-चतुरः सुच् ।७।२।११०।।**

एभ्यो वारार्थेभ्यस्तद्वति सुच् स्यात् । द्विः , त्रिः , चतुर्भुङ्क्ते ।।११०।।

**एकात् सकृच्चास्य ।७।२।१११।।**

अस्माद् वारार्थात् तद्वति सुच् स्यात् , सकृच्चाऽस्य । सकृद् भुङ्क्ते ।।१११।।

**बहोर्धाऽऽसन्ने ।७।२।११२।।**

बहोः संख्यार्थाददूरवारार्थात् तद्वति धा स्यात् । बहुधा भुङ्क्ते ।।११२।।

**दिक्शब्दाद् दिग्-देश-कालेषु प्रथमा-पञ्चमी-सप्तम्याः ।७।२।११३।।**

दिशि दृष्टाद् दिगाद्यर्थात् सि-ङसि-ङ्यन्तात् स्वार्थे धा स्यात् । प्राची दिग् रम्या प्राग्रम्यम् , प्राग् देशः कालो वा रम्यः प्राग्रम्यम् , प्राच्या दिशो देश-कालाभ्यां वा आगतः प्रागागतः , प्राच्यां दिशि देश-कालयोर्वा वासः प्राग्वासः ।।११३।।

**ऊर्ध्वाद् रि-रिष्टातौ उपश्चास्य ।७।२।११४।।**

ऊर्ध्वाद् दिग्-देश-कालार्थात् सि-ङसि-ङ्यन्तादेतौ स्याताम् , उपश्चोर्ध्वस्य । उपरि , उपरिष्टाद् रम्यमागतो वासो वा ।।११४।।

---

१. त्रिधा वा करोति पा२ ।।

## पूर्वा-ऽवरा-ऽधरेभ्योऽसस्तातौ पुरवधश्चैषाम् ।७।२।११५।।

एभ्यो दिग्-देश-कालार्थेभ्यः सि-ङसि-ङ्यन्तेभ्योऽस् अस्तात् च स्यात् , एषां च यथासंख्यं पुर् , अव् , अध् च । पुरः , अवः , अधः , पुरस्तात् , अवस्तात् , अधस्ताद् रम्यमागतो वासो वा ।।११५।।

## परा-ऽवरात् स्तात् ।७।२।११६।।

आभ्यां दिगाद्यर्थाभ्यां प्रथमाद्यन्ताभ्यां स्वार्थे स्तात् स्यात् । परस्तात् , अवरस्ताद् रम्यमागतो वासो वा ।।११६।।

## दक्षिणोत्तराच्चाऽतस् ।७।२।११७।।

आभ्यां परावराभ्यां च दिगाद्यर्थाभ्यां प्रथमाद्यन्ताभ्यां स्वार्थेऽतस् स्यात् । दक्षिणतः , उत्तरतः , परतः , अवरतो रम्यमागतो वासो वा ।।११७।।

## अधरा-ऽपराच्चाऽऽत् ।७।२।११८।

आभ्यां दक्षिणोत्तराभ्यां च दिगाद्यर्थाभ्यां प्रथमाद्यन्ताभ्यामात् स्यात् । अधरात् , पश्चात् , दक्षिणात् , उत्तराद् रम्यमागतो वासो वा ।।११८।।

## वा दक्षिणात् प्रथमा-सप्तम्या आः ।७।२।११९।।

अस्माद् दिग्-देशार्थात् सि-ङ्यन्ताद् , आ वा स्यात् । दक्षिणा , दक्षिणतः , दक्षिणाद् रम्यं वासो वा ।।११९।।

## आ-ऽऽही दूरे ।७।२।१२०।।

दूरदिग्-देशार्थात् सि-ङ्यन्ताद् दक्षिणाद् आ , आहिश्च स्यात् । ग्रामाद् दक्षिणा , दक्षिणाहि रम्यं वासो वा ।।१२०।।

## वोत्तरात् ।७।२।१२१।।

दिगाद्यर्थादस्मात् सि-ङ्यन्ताद् आ , आहिश्च वा स्यात् । उत्तरा , उत्तराहि , उत्तरतः उत्तराद् रम्यं वासो वा ।।१२१।।

## अदूरे एनः ।७।२।१२२।।

दिक्शब्दाददूरदिगाद्यर्थात् सि-ङ्यन्तादेनः स्यात् । पूर्वेणास्य रम्यं वसति वा ।।१२२।।

## लुबञ्चेः ।७।२।१२३।।

अञ्चत्यन्ताद् दिक्शब्दाद् दिगादिवृत्तेः सि-ङसि-ङ्यन्ताद् विहितो यो धा एनो वा तस्य लुप् स्यात् । प्राग् रम्यमागतो वासो वा ॥१२३॥

**पश्चोऽपरस्य दिक्पूर्वस्य चाऽऽति ।७।२।१२४॥**

अपरस्य केवलस्य दिगर्थपूर्वपदस्य चाऽऽति परे पश्चः स्यात् । पश्चात् , दक्षिणपश्चात् रम्यमागतो वासो वा ॥१२४॥

**वोत्तरपदेऽर्धे ।७।२।१२५॥**

अपरस्य केवलस्य दिक्पूर्वस्य चार्धे उत्तरपदे पश्चो वा स्यात् । पश्चार्धम् , अपरार्धम् ; दक्षिणपश्चार्द्धः , दक्षिणापरार्द्धः ॥१२५॥

**कृ-भ्वस्तिभ्यां कर्म-कर्तृभ्यां प्रागतत्तत्त्वे च्विः ।७।२।१२६॥**

कर्मार्थात् कृगा योगे , कर्त्रर्थाच्च भ्वस्तियोगे प्रागभूततद्भावे गम्ये च्विः स्यात् । शुक्लीकरोति पटम् , शुक्लीभवति , शुक्लीस्यात् पटः । प्रागिति किम् ? अशुक्लं शुक्लं करोत्येकदा ॥१२६॥

**अरुर्मनश्चक्षुश्चेतो-रहो-रजसां लुक् च्वौ ।७।२।१२७॥**

एषां च्वौ अन्तस्य लुक् स्यात् । अरूस्यात् , महाऽरूस्यात् , उन्मनीस्यात् , चक्षूस्यात् , चेतीस्यात् , रहीस्यात् , रजीस्यात् ॥१२७॥

**इसुसोर्बहुलम् ।७।२।१२८॥**

इसुसन्तस्य च्वौ बहुलं लुक् स्यात् । सर्प्पीकरोति नवनीतम् , धनूस्याद् वंशः । न च भवति-सर्पिर्भवति , धनुर्भवति ॥१२८॥

**व्यञ्जनस्यान्त ई ।७।२।१२९॥**

व्यञ्जनान्तस्य च्वौ बहुलमीरन्तः स्यात् । दृषदीभवति शिला । न च भवति-दृषद्भवति शिला ॥१२९॥

**व्याप्तौ स्सात् ।७।२।१३०॥**

कृ-भ्वस्तिभ्यां कर्म-कर्तृभ्यां प्रागतत्तत्त्व इति विषये सादिः सात् स्यात् , **व्याप्तौ** प्रागतत्तत्त्वस्य सर्वात्मना द्रव्येण सम्बन्धे गम्ये । अग्निसात् करोति काष्ठम् , अग्निसाद्भवति , अग्निसात् स्यात् ॥१३०॥

**जातेः सम्पदा च ।७।२।१३१॥**

कृ-भ्वस्तिभिः सम्पदा च योगे कृगूकर्मणो भ्वस्तिसम्पत्कर्तुश्च प्रागतत्तत्त्वेन

जा[1]तेः सामान्यस्य व्याप्तौ स्सात् स्यात् । अस्यां सेनायां सर्वं शस्त्रमग्निसात् करोति दैवम् , एवम् अग्निसाद् भवति , अग्निसात् स्यात् , अग्निसात् सम्पद्यते ॥१३१॥

**तत्राऽधीने ।७।२।१३२॥**

**तत्रे**ति ङ्यन्ताद् आयत्तेऽर्थे कृ-भ्वस्ति-सम्पद्योगे स्सात् स्यात् । राजसात् करोति , राजसाद् भवति , राजसात् स्यात् , राजसात् सम्पद्यते ॥१३२॥

**देये त्रा च ।७।२।१३३॥**

ङ्यन्ताद् देये आयत्तेऽर्थे कृ-भ्वस्ति-सम्पद्योगे त्राः स्यात् । देवत्रा करोति द्रव्यम् , देवत्रा भवेत् , स्यात् , सम्पद्यते वा । देय इति किम् ? राजसात् स्याद् राष्ट्रम् ॥१३३॥

**सप्तमी-द्वितीयाद् देवादिभ्यः ।७।२।१३४॥**

एभ्यो ङ्यमन्तेभ्यः स्वार्थे त्रा स्यात् । देवत्रा वसेत् , भवेत् , स्यात् , करोति वा , एवं मनुष्यत्रा ॥१३४॥

**तीय-शम्ब-बीजात् कृगा कृषौ डाच् ।७।२।१३५॥**

तीयान्ताच्छम्ब-बीजाभ्यां च कृग्योगे कृषिविषये डाच् स्यात् । द्वितीया करोति , शम्बा करोति , बीजा करोति क्षेत्रम् । कृषाविति किम् ? द्वितीयं पटं करोति ॥१३५॥

**सङ्ख्यादेर्गुणात् ।७।२।१३६॥**

सङ्ख्याया आद्यवयवात् परो यो गुणस्तदन्तात् कृग्योगे कृषिविषये डाच् स्यात् । द्विगुणा करोति क्षेत्रम् ॥१३६॥

**समयाद् यापनायाम् ।७।२।१३७॥**

अस्मात् कालक्षेपे गम्ये कृग्योगे डाच् स्यात् । समया करोति , कालं क्षिपतीत्यर्थः ॥१३७॥

**सपत्र-निष्पत्रादतिव्यथने ।७।२।१३८॥**

आभ्यां कृग्योगेऽतिपीडने गम्ये डाच् स्यात् । सपत्रा करोति मृगम् , निष्पत्रा करोति । अतिव्यथन इति किम् ? सपत्रं करोति तरुं सेकः ॥१३८॥

१. जातेः P3 J2 नास्ति ॥

**निष्कुलान्निष्कोषणे ।७।२।१३९।।**

अस्मात् कृग्योगे निष्कोषणेऽर्थे डाच् स्यात् । निष्कुला करोति दाडिमम् । निष्कोषण इति किम् ? निष्कुलं करोति शत्रुम् ।।१३९।।

**प्रिय-सुखादानुकूल्ये ।७।२।१४०।।**

आभ्यां कृग्योगे आनुकूल्ये गम्ये डाच् स्यात् । प्रिया करोति , सुखा करोति गुरुम् । आनुकूल्य इति किम् ? प्रियं करोति साम ।।१४०।।

**दुःखात् प्रातिकूल्ये ।७।२।१४१।।**

दुःखात् प्रातिकूल्ये गम्ये कृग्योगे डाच् स्यात् । दुःखा करोति शत्रुम् । प्रातिकूल्य इति किम् ? दुःखं करोति रोगः ।।१४१।।

**शूलात् पाके ।७।२।१४२।।**

शूलात् पाके गम्ये कृग्योगे डाच् स्यात् । शूला करोति मांसम् ।।१४२।।

**सत्यादशपथे ।७।२।१४३।।**

अशपथार्थात् सत्यात् कृग्योगे डाच् स्यात् । सत्या करोति वणिग् भाण्डम् । अशपथ इति किम् ? सत्यं करोति , शपथमित्यर्थः ।।१४३।।

**मद्र-भद्राद् वपने ।७।२।१४४।।**

आभ्यां मुण्डने गम्ये कृग्योगे डाच् स्यात् । मद्रा करोति , भद्रा करोति नापितः । वपन इति किम् ? मद्रं करोति , [1]भद्रं करोति साधुः ।।१४४।।

**अव्यक्तानुकरणादनेकस्वरात् कृ-भ्वस्तिनाऽनितौ द्विश्च ।७।२।१४५।।**

यस्मिन् ध्वनौ वर्णा विशेषरूपेण नाभिव्यज्यन्ते सोऽव्यक्तः , तदनुकरणार्थादनेकस्वराद् अनितिपरात् कृ-भ्वस्तियोगे डाच् वा स्यात् , द्विश्चास्य प्रकृतिः । पटपटा करोति , भवेत् , स्याद् वा । अनेकस्वरादिति किम् ? खाट् करोति । अनिताविति किम् ? पटिति करोति ।।१४५।।

**इतावतो लुक् ।७।२।१४६।।**

अव्यक्तानुकरणस्यानेकस्वरस्य योऽदिति तस्येतिशब्दे लुक् स्यात् । पटिति ।।१४६।।

---

१. भद्रं करोति J2 पा२ नास्ति ।।

## न द्वित्वे ।७।२।१४७।।

अव्यक्तानुकरणस्यानेकस्वरस्य द्वित्वे सति इतौ परेऽतो लुग् न स्यात् । पटत्पटदिति ।।१४७।।

## तो वा ।७।२।१४८।।

द्वित्वेऽव्यक्तानुकरणस्यानेकस्वरस्यातस्तो लुग् वा स्यात् । पटत्पटेति करोति , पटत्पटदिति वा ।।१४८।।

## डाच्यादौ ।७।२।१४९।।

अव्यक्तानुकरणस्यानेकस्वरस्याच्छब्दान्तस्य द्वित्वे सति आद्यतस्तो डाचि लुक् स्यात् । पटपटा करोति । आदाविति किम् ? पतपता करोति ।।१४९।।

## बह्वल्पार्थात् कारकादिष्टा-ऽनिष्टे प्शस् ।७।२।१५०।।

बह्वल्पार्थाभ्यां कारकवाचिभ्यां यथासंख्यमिष्टेऽनिष्टे च विषये शस् पिद् वा स्यात् , इष्टं प्राशित्रादि , अनिष्टं श्राद्धादि । ग्रामे बहवो बहुशो वा ददति , एवं भूरिशः , अल्पमल्पशो वा धनं दत्ते श्राद्धे , एवं स्तोकशः । इष्टानिष्ट इति किम् ? बहु दत्ते श्राद्धे , अल्पं प्राशित्रे ।।१५०।।

## संख्यैकार्थाद् वीप्सायां शस् ।७।२।१५१।।

संख्यैकार्थाभ्यां कारकार्थाभ्यां वीप्सायां द्योत्यायां शस् वा स्यात् । एकैकमेकशो वा दत्ते , माषं माषं माषशो वा देहि । संख्यैकार्थादिति किम् ? माषौ माषौ दत्ते । वीप्सायामिति किम् ? द्वौ दत्ते ।।१५१।।

## संख्यादेः पादादिभ्यो दान-दण्डे चाऽकल्लुक् च ।७।२।१५२।।

सं[1]ख्यार्थादाद्यवयवात् परे ये पादादयस्तदन्ताद् दाने दण्डे वीप्सायां च विषयेऽकल् स्यात् , तद्योगे च प्रकृतेरन्तस्य लुक् । द्विपदिकां दत्ते दण्डितो भुङ्क्ते वा , एवं द्विशतिकाम् ।।१५२।।

## तीयाट्टीकण् न विद्या चेत् ।७।२।१५३।।

तीयान्तादविद्यार्थात् स्वार्थे टीकण् वा स्यात् । द्वितीयम् , द्वैतीयीकम् । विद्या तु द्वितीया ।।१५३।।

## निष्फले तिलात् पिञ्ज-पेजौ ।७।२।१५४।।

१.संख्यार्थादावयवात् पामू०२ । संख्यार्थादाद्यावयवात् पासं०२ । संख्यार्थादवयवात् P3 ।।

निष्फलार्थात् तिलादेतौ स्यातामू । तिलपिञ्जः , तिलपेजः ॥१५४॥

**प्रायोऽतोर्द्वयसट्-मात्रट् ।७।२।१५५॥**

अत्वन्तात् स्वार्थे एतौ स्याताम् , यथालक्ष्यम् । यावद्द्वयसम् , यावन्मात्रम् ॥१५५॥

**वर्णा-ऽव्ययात् स्वरूपे कारः ।७।२।१५६॥**

एभ्यः स्वरूपार्थेभ्यः कारो वा स्यात् । अकारः , ॐकारः । स्वरूप इति किम् ? अः विष्णुः ॥१५६॥

**रादेफः ।७।२।१५७॥**

वा स्यात् । रेफः । प्रायोऽधिकाराद् रकारः ॥१५७॥

**नाम-रूप-भागाद् धेयः ।७।२।१५८॥**

एभ्यः स्वार्थे धेयो वा स्यात् । नामधेयम् , रूपधेयम् , भागधेयम् ॥१५८॥

**मर्तादिभ्यो यः ।७।२।१५९॥**

एभ्यो यः स्यात् । मर्त्यः , सूर्यः ॥१५९॥

**नवादीन-तन-त्नं च नू चास्य ।७।२।१६०॥**

नवात् स्वार्थे एते यश्च वा स्युः , तद्योगे च नवस्य नूः । नवीनम् , नूतनम् , नूत्नम् , नव्यम् ॥१६०॥

**प्रात् पुराणे नश्च ।७।२।१६१॥**

पुराणार्थात् प्रात् न ईन-तन-त्नाश्च स्युः । प्रणम् , प्रीणम् , प्रतनम् , प्रत्नं पुराणम् ॥१६१॥

**देवात् तल् ।७।२।१६२॥**

स्वार्थे वा स्यात् । देवता ॥१६२॥

**होत्राया ईयः ।७।२।१६३॥**

स्वार्थे वा स्यात् । होत्रीयम् ॥१६३॥

**भेषजादिभ्यष्ट्यण् ।७।२।१६४॥**

स्वार्थे वा स्यात् । भैषज्यम् , आनन्त्यम् ॥१६४॥

**प्रज्ञादिभ्योऽण् ।७।२।१६५॥**

स्वार्थे वा स्यात् । प्राज्ञः , वाणिजः ॥१६५॥

**श्रोत्रौषधि-कृष्णाच्छरीर-भेषज-मृगे ।७।२।१६६॥**

एभ्यो यथासंख्यं शरीराद्यर्थेभ्यः स्वार्थेऽण् वा स्यात् । श्रौत्रं वपुः , औषधं भेषजम्[1] , कार्ष्णो मृगः ॥१६६॥

**कर्मणः सन्दिष्टे ।७।२।१६७॥**

सन्दिष्टार्थात् कर्मणः स्वार्थेऽण् वा स्यात् , अन्येनान्योऽन्यस्मै यदाह त्वयेदं कार्यमिति तत् सन्दिष्टम् । कार्मणम् ॥१६७॥

**वाच इकण् ।७।२।१६८॥**

सन्दिष्टार्थात् स्यात् । वाचिकं वक्ति ॥१६८॥

**विनयादिभ्यः ।७।२।१६९॥**

स्वार्थे इकण् वा स्यात् । वैनयिकम् , सा[2]मयिकम् ॥१६९॥

**उपायाद्ध्रस्वश्च ।७।२।१७०॥**

स्वार्थे इकण् वा स्यात् , तद्योगे च ह्रस्वः । औपयिकम् ॥१७०॥

**मृदस्तिकः ।७।२।१७१॥**

स्वार्थे वा स्यात् । मृत्तिका ॥१७१॥

**स-स्नौ प्रशस्ते ।७।२।१७२॥**

प्रशस्तार्थाद् मृदः स-स्नौ वा स्याताम् । मृत्सा , मृत्स्ना ॥१७२॥

इति [आचार्यश्री**हेमचन्द्र**विरचितायां **सिद्धहेमचन्द्रा**भिधानस्वोपज्ञशब्दानुशासन-लघुवृत्तौ] सप्तमस्याध्यायस्य द्वितीयः पादः स[3]मासः ॥७।२॥

उत्साहसाहसवता भवता नरेन्द्र ,
धाराव्रतं किमपि तद् विषमं सिषेवे ।
यस्मात् फलं न खलु **मालव**मात्रमेव ,
श्री**पर्वतो**ऽपि तव कन्दुककेलिपात्रम् ॥२६॥

---

१. **भैषजम्** पा२ ॥ २. **सामायिकम्** पा२ J2मू० P3मू० । "विनय एव वैनयिकम्, समय एव सामयिकम् । विनय समय समाय कथंचित् ... ... इति विनयादिराकृतिगणः" इति बृहद्वृत्तौ ॥ ३. **समाप्तः** P3 J1 नास्ति ॥

## [ तृतीयः पादः ]

### प्रकृते मयट् ।७।३।१।।

प्राचुर्येण प्राधान्येन वा कृतं प्रकृतम् , तदर्थात् स्वार्थे मयट् स्यात् । अन्नमयम् , पूजामयम् ।।१।।

### अस्मिन् ।७।३।२।।

प्रकृतार्थादस्मिन्निति विषये मयट् स्यात् । अपूपमयं पर्व ।।२।।

### तयोः समूहवच्च बहुषु ।७।३।३।।

प्रकृतेऽस्मिन्निति च विषययोर्बह्वर्थात् समूह इव प्रत्ययः स्यात् , मयट् च । आपूपिकम् , अपूपमयम् , अपूपास्तत्पर्व वा ।।३।।

### निन्द्ये पाशप् ।७।३।४।।

निन्द्यार्थात् स्वार्थे पाशप् स्यात् । छान्दसपाशः ।।४।।

### प्रकृष्टे तमप् ।७।३।५।।

प्रकृष्टार्थात् तमप् स्यात् । शुक्लतमः , कारकतमः ।।५।।

### द्वयोर्विभज्ये च तरप् ।७।३।६।।

द्वयोर्मध्ये प्रकृष्टे विभज्ये च प्रकृष्टे वर्त्तमानात् तरप् स्यात् । पटुतरा स्त्री , साङ्काश्यकेभ्यः पाटलिपुत्रका आढ्यतराः ।।६।।

### क्वचित् स्वार्थे ।७।३।७।।

यथालक्ष्यं स्वार्थेऽपि तरप् स्यात् । अभिन्नतरकम् , उच्चैस्तराम् ।।७।।

### किं-त्याद्ये-ऽव्ययादसत्त्वे तयोरन्तस्याऽऽम् ।७।३।८।।

किमस्त्याद्यन्तादेदन्तादव्ययाच्च परयोस्तमप्-तरपोरन्तस्याऽऽम् स्यात् , न चेत् तौ **सत्त्वे** द्रव्ये वर्त्तेते । किन्तमाम् , किन्तराम् ; पचतितमाम् , पचतितराम् ; पूर्वाह्णेतमाम् , पूर्वाह्णेतरां भुङ्क्ते , अतितमाम् , अतितराम् । असत्त्व इति किम् ? किन्तरं दारु ।।८।।

### गुणाङ्गाद् वेष्ठेयसू ।७।३।९।।

गुणप्रवृत्तिहेतुकात् तमप्-तरपोर्विषये यथासंख्यमेतौ वा स्याताम् । पटिष्ठः , पटुतमः ; गरीयान् , गुरुतरः ।।९।।

## त्यादेश्च प्रशस्ते रूपप् ।७।३।१०॥

त्याद्यन्ताद् नाम्नश्च प्रशस्तार्थाद् रूपप् स्यात् । पचतिरूपम् , दस्युरूपः ॥१०॥

## अतमबादेरीषदसमाप्ते कल्पब्-देश्यब्-देशीयर् ।७।३।११॥

किञ्चिदसमाप्तार्थात् त्याद्यन्तात् नाम्नश्च तमबाद्यन्तवर्जादेते स्युः । पचतिकल्पम् , पचतिदेश्यम् , पचतिदेशीयम् ; पटुकल्पा , पटुदेश्या , पटुदेशीया ॥११॥

## नाम्नः प्राग् बहुर्वा ।७।३।१२॥

ईषदपरिसमाप्तार्थात् प्राग् बहुर्वा स्यात् । बहुपटुः , पटुकल्पः ॥१२॥

## न तमबादिः कपोऽच्छिन्नादिभ्यः ।७।३।१३॥

छिन्नादिवर्जाद् यः कप् तदन्तात् तमबादिर्न स्यात् । अयमेषामनयोर्वा प्रकृष्टः पटुकः । अच्छिन्नादिभ्य इति किम् ? छिन्नकतमः ॥१३॥

## अनत्यन्ते ।७।३।१४॥

अनत्यन्तार्थात् कबन्तात् तमबादिर्न स्यात् । इदमेषामनयोर्वा प्रकृष्टं छिन्नकम् , भिन्नकम् ॥१४॥

## यावादिभ्यः कः ।७।३।१५॥

स्वार्थे स्यात् । यावकः , मणिकः ॥१५॥

## कुमारीक्रीडनेयसोः ।७।३।१६॥

कुमारीणां यत् क्रीडनं तदर्थाद् , ईयस्वन्ताच्च स्वार्थे कः स्यात् । कन्दुकः , श्रेयस्कः ॥१६॥

## लोहितान्मणौ ।७।३।१७॥

अस्माद् मण्यर्थात् स्वार्थे को वा स्यात् । लोहितको मणिः , लोहितो वा ॥१७॥

## रक्ता-ऽनित्यवर्णयोः ।७॥३।१८॥

लाक्षादिरक्तार्थादनित्यवर्णार्थाच्च लोहितात् को वा स्यात् । लोहितकः पटः , लोहितकमक्षि कोपेन ॥१८॥

**कालात् ।७।३।१९॥**

कज्जलादिरक्तेऽनित्यवर्णे च वर्त्तमानात् कालात् को वा स्यात् । काल एव कालकः पटः , कालकं मुखं शोकेन ॥१९॥

**शीतोष्णादृतौ ।७।३।२०॥**

आभ्यामृत्वर्थाभ्यां को वा स्यात् । शीतकः , उष्णक ऋतुः ॥२०॥

**लून-वियातात् पशौ ।७।३।२१॥**

आभ्यां पश्वर्थाभ्यां को वा स्यात् । लूनकः , वियातकः पशुः ।२१॥

**स्नाताद् वेदसमाप्तौ ।७।३।२२॥**

अस्यां गम्यायां स्नातात् कः स्यात् । वेदं समाप्य स्नातः स्नातकः ॥२२॥

**तनु-पुत्रा-ऽणु-बृहती-शून्यात् सूत्र-कृत्रिम-निपुणा-ऽऽच्छादन-रिक्ते ।७।३।२३॥**

तन्वादिभ्यो यथासंख्यं सूत्राद्यर्थेभ्यः कः स्यात् । तनुकं सूत्रम् , पुत्रकः कृत्रिमः , अणुको निपुणः , बृहतिका आच्छादनम् , शून्यको रिक्तः ॥२३॥

**भागेऽष्टमाञ्ञः ।७।३।२४॥**

भागार्थादस्मात् ञो वा स्यात् । आष्टमो भागः ॥२४॥

**षष्ठात् ।७।३।२५॥**

अस्माद् भागार्थात् ञो वा स्यात् । षाष्ठो भागः ॥२५॥

**माने कश्च ।७।३।२६॥**

मीयते येन तद्रूपभागार्थात् षष्ठात् को ञश्च वा स्यात् । षष्ठकः , षाष्ठो भागो मानं चेत् ॥२६॥

**एकादाकिन् चासहाये ।७।३।२७॥**

असहायार्थादेकाद् आकिन् कश्च स्यात् । एकाकी , एककः ॥२७॥

**प्राग् नित्यात् कप् ।७।३।२८॥**

नित्यशब्दसङ्कीर्त्तनात् प्राग् येऽर्थास्तेषु द्योत्येषु कप् अधिकृतो ज्ञेयः । कुत्सितोऽल्पोऽज्ञातो वाऽश्वः अश्वकः ॥२८॥

**त्यादि-सर्वादेः स्वरेष्वन्त्यात् पूर्वोऽक् ।७।३।२९॥**

त्याद्यन्तस्य , सर्वादेश्च स्वराणां मध्ये योऽन्त्यस्वरस्तस्मात् पूर्वोऽक् स्यात् , प्राग् नित्यात् । कुत्सितमल्पमज्ञातं वा पचति पचतकि , सर्वके , विश्वके ।२९।।

## युष्मदस्मदोऽसोभादिस्यादेः ।७।३।३०।।

अनयोः स्-ओ-भादिवर्जस्याद्यन्तयोः स्वरेष्वन्त्यात् पूर्वोऽक् स्यात् । त्वयका , मयका । असोभादिस्यादेरिति किम् ? युष्मकासु , युवकयोः , युवकाभ्याम् ।।३०।।

## अव्ययस्य को द् च ।७।३।३१।।

प्राग् नित्याद् येऽर्थास्तेषु द्योत्येष्वव्ययस्य स्वरेष्वन्त्यस्वरात् पूर्वोऽक् स्यात् तद्योगे चाऽस्य को द् । कुत्सिताद्युच्चैः उच्चकैः , एवं धिक् धकिद् ।।३१।।

## तूष्णीकाम् ।७।३।३२।।

तूष्णीमो मः प्राक् का इत्यन्तो निपात्यः , प्राक् नित्यात् । कुत्सितादि तूष्णीं तूष्णीकामास्ते ।।३२।।

## कुत्सिता-ऽल्पा-ऽज्ञाते ।७।३।३३।।

कुत्सिताद्युपाधिकार्थाद् यथायोगं कबादयः स्युः । अश्वकः , पचतकि , उच्चकैः ।।३३।।

## अनुकम्पा-तद्युक्तनीत्योः ।७।३।३४।।

अनुकम्पायां तद्युक्तायां च नीतौ गम्यायां यथायोगं कबादयः स्युः । पुत्रकः , स्वपिषकि , पुत्रक ! एहकि , उत्सङ्गके उपविश[1] , कर्दमकेनाऽसि दिग्धकः ।।३४।।

## अजातेर्नृनाम्नो बहुस्वरादियेकेलं वा ।७।३।३५।।

मनुष्यनाम्नो बहुस्वरादनुकम्पायां गम्यायां एते वा स्युः , न चेत् नृनाम जात्यर्थम् । देवियः , देविकः , देविलः , देवदत्तकः । अजातेरिति किम् ? महिषकः ।।३५।।

## वोपादेरडा-ऽकौ च ।७।३।३६।।

उपपूर्वादजात्यर्थाद् बहुस्वराद् नृनाम्नोऽनुकम्पायामडा-ऽकौ , इयेकेलाश्च वा

१. उपविशक पा२ ।।

स्युः । उपडः , उपकः , उपियः , उपिकः , उपिलः , उपेन्द्रदत्तकः ॥३६॥

**ऋवर्णोवर्णात् स्वरादेरादेर्लुक् प्रकृत्या च ।७।३।३७॥**

ऋवर्णान्तोवर्णान्ताभ्यां परस्यानुकम्पोत्पन्नस्य स्वरादेः प्रत्ययस्यादेर्लुक् स्यात् , लुकि तु सति प्रकृतेः प्रकृतिः । मातृयः , मातृकः , मातृलः , वायुयः , वायुकः , वायुलः । स्वरादेरिति किम् ? मद्रबाहुकः ॥३७॥

**लुक्युत्तरपदस्य कपून् ।७।३।३८॥**

नृनाम्नो यदुत्तरपदं तस्य *ते लुग् वा* [३।२।१०८] इति लुकि सति ततः कपून् स्यात् , अनुकम्पायां गम्यायाम् । देवदत्ता , लुकि देवी , अनुकम्पिताऽसौ-देवका । उत्तरपदस्येति किम् ? दत्तिका ॥३८॥

**लुक् चाजिनान्तात् ।७।३।३९॥**

अजिनान्तात् नृनाम्नोऽनुकम्पायां कपून् स्यात् , तद्योगे च लुगुत्तरपदस्य । व्याघ्रकः ॥३९॥

**षड्वर्जैकस्वरपूर्वपदस्य स्वरे ।७।३।४०॥**

षड्वर्जमेकस्वरं पूर्वपदं यस्य तस्योत्तरपदस्यानुकम्पार्थे स्वरादौ प्रत्यये लुक् स्यात् । अनुकम्पितो वागाशीः वाचियः । षड्वर्जेत्या[१]दि किम् ? उपेन्द्रेण दत्तः उपेन्द्रदत्तः , सोऽनुकम्पितः उपडः , षडङ्गुलिस्तु षडियः । स्वर इति किम् ? वागाशीर्दत्तकः ॥४०॥

**द्वितीयात् स्वरादूर्ध्वम् ।७।३।४१॥**

अनुकम्पार्थे स्वरादौ प्रत्यये प्रकृतेर्द्वितीयात् स्वरादूर्ध्वं लुक् स्यात् । देवियः ॥४१॥

**सन्ध्यक्षरात् तेन ।७।३।४३॥**

अनुकम्पार्थे स्वरादौ प्रत्यये प्रकृतेर्द्वितीयात् सन्ध्यक्षरस्वरादूर्ध्वं तेन सन्ध्यक्षरेण सह लुक् स्यात् । कुबियः , कहिकः ॥४२॥

**शेवलाद्यादेस्तृतीयात् ।७।३।४३॥**

शेवलादिपूर्वपदस्य नृनाम्नोऽनुकम्पार्थे स्वरादौ प्रत्यये तृतीयात् स्वरादूर्ध्वं लुक् स्यात् । शेवलियः , सुपरियः ॥४३॥

---

१. त्यादीति पा२ J2 ॥

## क्वचित् तुर्यात् ।७।३।४४।।

अनुकम्पोत्पन्ने स्वरादौ प्रत्यये यथालक्ष्यं चतुर्थात् स्वरादूर्ध्वं लुक् स्यात् । बृहस्पतियः । क्वचिदिति किम् ? उपडः ।।४४।।

## पूर्वपदस्य वा ।७।३।४५।।

अनुकम्पार्थे स्वरादौ प्रत्यये पूर्वपदस्य लुग् वा स्यात् । दत्तियः , देवियः ।।४५।।

## ह्रस्वे ।७।३।४६।।

ह्रस्वार्थाद् यथायोगं कबादिः स्यात् । पटकः , पचतकि ।।४६।।

## कुटी-शुण्डाद् रः ।७।३।४७।।

आभ्यां ह्रस्वार्थाभ्यां रः स्यात् । कुटीरः , शुण्डारः ।।४७।।

## शम्या रु-रौ ।७।३।४८।।

अस्माद् ह्रस्वार्थादेतौ स्याताम् । शमीरुः , शमीरः ।।४८।।

## कुत्वा डुपः ।७।३।४९।।

अस्माद् ह्रस्वार्थात् डुपः स्यात् । कुतुपः ।।४९।।

## कासू-गोणीभ्यां तरट् ।७।३।५०।।

आभ्यां ह्रस्वार्थाभ्यां तरट् स्यात् । कासूतरी , गोणीतरी ।।५०।।

## वत्सोक्षा-ऽश्वर्षभाद्ध्रासे पित् ।७।३।५१।।

एभ्यः स्वप्रवृत्तिहेतोर्ह्रासे गम्ये तरट् पित् स्यात् । वत्सतरः , उक्षतरः , अश्वतरः , ऋषभतरः ।।५१।।

## वैकाद् द्वयोर्निर्धार्ये डतरः ।७।३।५२।।

एकाद् द्वयोः निर्धार्यार्थाद्[1] डतरो वा स्यात् । एकतरः , एककों वा भवतोः कठः पटुर्गन्ता चैत्रो दण्डी वा ।।५२।।

## यत्-तत्-किमन्यात् ।७।३।५३।।

एभ्यो द्वयोरेकस्मिन्निर्धार्येऽर्थे वर्त्तमानेभ्यो डतरः स्यात् । यतरो भवतोः कठादिस्ततर आगच्छेत् , एवं कतरः , अन्यतरः ।।५३।।

१. निर्धार्ये डतरो पा२ J2सं० ।।

**बहूनां प्रश्ने डतमश्च वा ।७।३।५४।।**

यदादिभ्यो बहूनां मध्ये निर्धार्यार्थेभ्यः प्रश्ने डतमो डतरश्च वा स्यात् । यतमो यतरो वा भवतां कठस्ततमस्ततरो वा यातु , एवं कतमः , कतरः , अन्यतमः , अन्यतरः , पक्षे यको यो वा , सकः स वा भवतां कठ इत्यादि ।।५४।।

**वैकात् ।७।३।५५।।**

एकाद् बहूनां मध्ये निर्धार्यार्थात् डतमो वा स्यात् । एकतमः , एककः , एको वा भवतां कठः ।।५५।।

**क्तात् तमबादेश्चानत्यन्ते ।७।३।५६।।**

क्तान्तात् केवलात् तमबाद्यन्ताच्चानत्यन्तार्थात् कप् स्यात् । अनत्यन्तं भिन्नं-भिन्नकम् , भिन्नतमकम् , भिन्नतरकम् ।।५६।।

**न सामिवचने ।७।३।५७।।**

अर्धवचने उपपदेऽनत्यन्तार्थात् क्तान्तात् केवलात् तमबाद्यन्ताच्च कप् न स्यात् । सामि अनत्यन्तं भिन्नम् , अर्धमनत्यन्तं भिन्नम् ।।५७।।

**नित्यं ञ-ञिनोऽण् ।७।३।५८।।**

ञ-ञिनन्तात् स्वार्थे नित्यमण् स्यात् । व्यावक्रोशी , साङ्कोटिनम् ।।५८।।

**विसारिणो मत्स्ये ।७।३।५९।।**

अस्माद् मत्स्यार्थात् स्वार्थेऽण् स्यात् । वैसारिणो मत्स्यः ।।५९।।

**पूगादमुख्यकाञ्ञ्यो द्रिः ।७।३।६०।।**

नानाजातीया अनियतवृत्तयोऽर्थकामप्रधानाः सङ्घाः पूगाः , तदर्थात् स्वार्थे ञ्यो द्रिः स्यात् , न चेत् पूगार्थं मुख्यार्थकान्तम् । लौहध्वज्यः , लोहध्वजाः । अमुख्यकादिति किम् ? देवदत्तकः पूगः ।।६०।।

**व्रातादस्त्रियाम् ।७।३।६१।।**

नानाजातीया अनियतवृत्तयः शरीरायासजीविनः सङ्घाः व्राताः , तदर्थादस्त्रियां स्वार्थे ञ्यो द्रिः स्यात् । कापोतपाक्यः , स्त्री तु कपोतपाका ।।६१।।

**शस्त्रजीविसङ्घाञ्ञ्यड् वा ।७।३।६२।।**

एतदर्थात् स्वार्थे द्रिर्ञ्यड् वा स्यात् । शाबर्यः , शबराः , पौलिन्द्यः , पुलिन्दाः

। सङ्घादिति किम् ? वागुरः ॥६२॥

**वाहीकेष्वब्राह्मण-राजन्येभ्यः ।७।३।६३॥**

एषु यः शस्त्रजीविसङ्घो ब्राह्मणराजन्यवर्जस्तदर्थात् स्वार्थे द्रिर्ञ्यट् स्यात् । कौण्डीविश्यः , कुण्डीविशाः । अब्राह्मणेत्यादि किम् ? गौपालिः , राजन्यः ॥६३॥

**वृकाट्टेण्यण् ।७।३।६४॥**

वृकात् शस्त्रजीविसङ्घार्थात् स्वार्थे टेण्यण् द्रिः स्यात् । वार्केण्यः ॥६४॥

**यौधेयादेरञ् ।७।३।६५॥**

एभ्यः शस्त्रजीविसंघार्थेभ्योऽञ् द्रिः स्यात् । यौधेयः , घार्तेयः ॥६५॥

**पर्श्वादेरण् ।७।३।६६॥**

एभ्यः शस्त्रजीविसंघार्थेभ्यः स्वार्थेऽण् द्रिः स्यात् । पार्शवः , राक्षसः ॥६६॥

**दामन्यादेरीयः ।७।३।६७॥**

एभ्यः शस्त्रजीविसंघार्थेभ्यः स्वार्थे ईयो द्रिः स्यात् । दामनीयः , औलपीयः ॥६७॥

**श्रुमच्छमीवच्छिखावच्छालावदूर्णावद्-विदभृदभिजितो गोत्रेऽणो यञ् ।७।३।६८॥**

एभ्यो गोत्राऽणन्तेभ्यः स्वार्थे यञ् द्रिः स्यात् । श्रौमत्यः , शामीवत्यः , शैखावत्यः , शालावत्यः , और्णावत्यः , वैदभृत्यः , आभिजित्यः ॥६८॥

**समासान्तः ।७।३।६९॥**

अतः परं विधास्यमानं समासस्यावयवः स्यात् , ततस्तस्य तत्तत्समाससंज्ञा । सुजम्भे , सुजम्भानौ स्त्रियौ , उपधुरम् , द्विधुरी , [स्रक्त्वचिनी][1] ॥६९॥

**न किमः क्षेपे ।७।३।७०॥**

निन्दार्थात् किमः परं यद् ऋगादिस्तदन्तात् समासात् समासान्तो न स्यात् । किंधूः , किंसखा । क्षेप इति किम् ? केषां राजा किंराजः ॥७०॥

---

१. **स्रक्त्वचिनी** J2सं०मध्य एव । "स्रक् च त्वक् च *चवर्गदषहः समाहारे* [७।३।९८] स्रक्त्वचमस्यास्ति *अतो[ऽनेकस्वरात्* ७।२।६]" इति J2 टिप्पन्याम् ॥

## नञ्तत्पुरुषात् ।७।३।७१।।

अस्मात् समासान्तो न स्यात् । अनृक् , अराजा । तत्पुरुषादिति किम् ? अधुरं[1] शकटम् ।।७१।।

## पूजास्वतेः प्राक् टात् ।७।३।७२।।

पूजार्थस्वतिभ्यां परं यद् ऋगादि तदन्तात् टात् प्राग् यः समासान्तः स न स्यात् । सुधूः , अतिधूरियम् । पूजेति किम् ? अतिराजोऽरिः । प्राक् टादिति किम् ? स्वङ्गुलं काष्ठम् ।।७२।।

## बहोर्डे ।७।३।७३।।

डस्य प्राप्तिर्यतस्ततः समासान्तो डः कच्च न स्यात् । उपबहवो घटाः । डे इति किम् ? प्रियबहुकः ।७३।।

## इज् युद्धे ।७।३।७४।।

युद्धे यः समास उक्तस्तस्मादिच् समासान्तः स्यात् । केशाकेशि ।।७४।।

## द्विदण्ड्यादिः ।७।३।७५।।

एते इजन्ताः साधवः स्युः । द्विदण्डि हन्ति , उभादन्ति ।।७५।।

## ऋक्-पूः-पथ्यपोऽत् ।७।३।७६।।

ऋगाद्यन्तात् समासादः समासान्तः स्यात् । अर्धर्चः , त्रिपुरम् , जलपथः , द्वीपम् ।।७६।।

## धुरोऽनक्षस्य ।७।३।७७।।

धुरन्तात् समासादोऽन्तः[2] स्यात् , चेद् धूर्नाऽक्षस्य । राज्यधुरा । अनक्षस्येति किम् ? अक्षधूः ।।७७।।

## सङ्ख्या-पाण्डूदक्-कृष्णाद् भूमेः ।७।३।७८।।

सङ्ख्याऽर्थात् पाण्ड्वादेश्च परो यो भूमिस्तदन्तादः समासान्तः स्यात् । द्विभूमः , पाण्डुभूमम् , उदग्भूमम् , कृष्णभूमम् ।।७८।।

## उपसर्गादध्वनः ।७।३।७९।।

उपसर्गत्वयोग्यात् प्रादेः परादध्वनः अः समासान्तः स्यात् । प्राध्वो

---

१. अधुरं शकटम् । **अनृचो माणवकः** पा० ।। २. **समासाददन्तः** पा०, P3सं० ।।

रथः ॥७९॥

**समवा-ऽन्धात् तमसः ।७।३।८०॥**

एभ्यः परो यस्तमास्तदन्तादः समासान्तः स्यात् । सन्तमसम् , अवतमसम् , अन्धतमसम् ॥८०॥

**तप्ता-ऽन्ववाद् रहसः ।७।३।८१॥**

तप्तादिपूर्वो यो रहास्तदन्तादः समासान्तः स्यात् । तप्तरहसम् , अनुरहसम् , अवरहसम् ॥८१॥

**प्रत्यन्ववात् साम-लोम्नः ।७।३।८२॥**

एभ्यः परौ यौ सामलोमानौ , तदन्तादः समासान्तः स्यात् । प्रतिसामम् , अनुसामम् , अवसामम् , प्रतिलोमः , अनुलोमः , अवलोमः ॥८२॥

**ब्रह्म-हस्ति-राज-पल्याद् वर्चसः ।७।३।८३॥**

ब्रह्मादिपूर्वाद् वर्चसन्तादोऽन्तः स्यात् । ब्रह्मवर्चसम् , हस्तिवर्चसम् , राजवर्चसम् , पल्यवर्चसम् ॥८३॥

**प्रतेरुरसः सप्तम्याः ।७।३।८४॥**

प्रतिपूर्वात् सप्तम्यन्तोरसन्ताददन्तः स्यात् । प्रत्युरसम् । सप्तम्या इति किम् ? प्रत्युरः ॥८४॥

**अक्ष्णोऽप्राण्यङ्गे ।७।३।८५॥**

अप्राण्यङ्गार्थादक्ष्यन्तादोऽन्तः स्यात् । लवणाक्षम् । अप्राण्यङ्ग इति किम् ? अजाक्षि ॥८५॥

**सं-कटाभ्याम् ।७।३।८६॥**

आभ्यां परादक्ष्यन्ताददन्तः स्यात् । समक्षम् , कटाक्षः ॥८६॥

**प्रति-परो-ऽनोरव्ययीभावात् ।७।३।८७॥**

प्रत्यादिपूर्वादक्ष्यन्तादव्ययीभावादत् स्यात् । प्रत्यक्षम् , परोक्षम् , अन्वक्षम् ॥८७॥

**अनः ।७।३।८८॥**

---

१. यस्तमस्त° J2मू० J1 ॥ २. °न्तादुरस° पा२ ॥

अन्नन्तादव्ययीभा[१]वादत् स्यात् । उपतक्षम् ॥८८॥

**नपुंसकाद् वा ।७।३।८९॥**

अन्नन्तं यत् क्लीबं तदन्तादव्ययीभावादद् वा स्यात् । अनुलोमम् , अनुलोम ॥८९॥

**गिरि-नदी-पौर्णमास्याग्रहायण्यपञ्चमवर्ग्याद् वा ।७।३।९०॥**

एतदन्तात् पञ्चमवर्जवर्ग्यान्ताच्चाव्ययीभावादद् वा स्यात् । अन्तर्गिरम् , अन्तर्गिरि ; उपनदम् , उपनदी ; उपपौर्णमासम् , उपपौर्णमासि ; उपाग्रहायणम् , उपाग्रहायणि ; उपस्रुचम् , उपस्रुक् ॥९०॥

**संख्याया नदी-गोदावरीभ्याम् ।७।३।९१॥**

संख्यार्थात् परौ यावेतौ तदन्तादव्ययीभा[२]वादत् स्यात् । पञ्चनदम् , द्विगोदावरम् ॥९१॥

**शरदादेः ।७।३।९२॥**

शरदाद्यन्तादव्ययीभावादत् स्यात् । उपशरदम् , प्रतित्यदम् ॥९२॥

**जराया जरस् च ।७।३।९३॥**

जरान्तादव्ययीभावादत् स्यात् , तद्योगे च जराया जरस् । उपजरसम् ॥९३॥

**सरजसोपशुना-ऽनुगवम् ।७।३।९४॥**

एतेऽव्ययीभावा अदन्ता निपात्याः । सरजसं भुङ्क्ते , उपशुनमास्ते , अनुगवमनः ॥९४॥

**जात-महद्-वृद्धादुक्ष्णः कर्मधारयात् ।७।३।९५॥**

एभ्यः परो य उक्षा , तदन्तात् कर्मधारयादत् स्यात् । जातोक्षः , महोक्षः , वृद्धोक्षः । कर्मधारयादिति किम् ? जातस्योक्षा जातोक्षा ॥९५॥

**स्त्रियाः पुंसो द्वन्द्वाच्च ।७।३।९६॥**

स्त्रियाः परो यः पुमान् , तदन्तात् द्वन्द्वात् कर्मधारयाच्चाऽत् स्यात् । स्त्रीपुंसौ , स्त्रीपुंसः , शिखण्डी ॥९६॥

**ऋक्सामर्ग्यजुष-धेन्वनडुह-वाङ्मनसा-ऽहोरात्र-रात्रिंदिव-नक्तंदिवा-**

१. °भावादः स्यात् पा२ ॥ २. °भावादः स्यात् पा२ ॥

**ऽहर्दिवोर्वष्ठीव-पदष्ठीवा-ऽक्षिभ्रुव-दारगवम् ।७।३।९७॥**

एते द्वन्द्वा अदन्ता निपात्याः । ऋक्सामे, ऋग्यजुषम्, धेन्वनडुहौ, वाङ्मनसे, अहोरात्रः, रात्रिंदिवम्, नक्तंदिवम्, अहर्दिवम्, ऊर्वष्ठीवम्, पदष्ठीवम्, अक्षिभ्रुवम्, दारगवम् ॥९७॥

**चवर्ग-द-ष-हः समाहारे ।७।३।९८॥**

एतदन्ताद् द्वन्द्वात् समाहारार्थादत् स्यात् । वाक्त्वचम्, संपद्विपदम्, वाक्त्विषम्, छत्रोपानहम् । समाहार इति किम् ? प्रावृट्-शरद्भ्याम् ॥९८॥

**द्विगोरन्नह्नोऽट् ।७।३।९९॥**

अन्नन्तादहन्नन्ताच्च समाहारार्थाद् द्विगोरट् स्यात् । पञ्चतक्षी, पञ्चतक्षम्, द्व्यहः । द्विगोरिति किम् ? समह्नाः ॥९९॥

**द्वि-त्रेरायुषः ।७।३।१००॥**

आभ्यां परो य आयुस्तदन्तात् समाहा[१]रद्विगोरट् स्यात् । द्व्यायुषम्, त्र्यायुषम् ।१००॥

**वाऽञ्जलेरलुकः ।७।३।१०१॥**

द्वित्रिभ्यां परो योऽञ्जलिस्तदन्ताद् द्विगोरट् वा स्यात्, न चेद् द्विगुस्तद्धितलुगन्तः । द्व्यञ्जलम्, द्व्यञ्जलि; त्र्यञ्जलमयम्, त्र्यञ्जलिमयम् । अलुक इति किम् ? द्व्यञ्जलिर्घटः ॥१०१॥

**खार्या वा ।७।३।१०२॥**

खार्यन्ताद् द्विगोरलुकोऽट् वा स्यात् । द्विखारम्, द्विखारि; पञ्चखारधनः, पञ्चखारीधनः ॥१०२॥

**वाऽर्धाच्च ।७।३।१०३॥**

अर्धात् परा या खारी तदन्तात् समासादलुकोऽट् वा स्यात् । अर्धखारम्, अर्धखारी ॥१०३॥

**नावः ।७।३।१०४॥**

अर्धात् परो यो नौस्तदन्तात् समासाद् द्विगोश्चाऽलुकोऽट् स्यात् । अर्धनावम्, अर्धनावी, पञ्चनावम् । अलुक इत्येव ? द्विनौः ॥१०४॥

१. °हाराद् द्विगो° J2 ॥

## गोस्तत्पुरुषात् ।७।३।१०५।।

गवन्तात् तत्पुरुषादलुकोऽट् स्यात् । राजगवी । तत्पुरुषादिति किम् ? चित्रगुः । अलुक इत्येव ? पञ्चगुः पटः ।।१०५।।

## राजन्-सखेः ।७।३।१०६।।

एतदन्तात् तत्पुरुषादट् स्यात् । पञ्चराजी , राजसखः ।।१०६।।

## राष्ट्राख्याद् ब्रह्मणः ।७।३।१०७।।

राष्ट्रार्थात् परो यो ब्रह्मा तदन्तात् तत्पुरुषादट् स्यात् । सुराष्ट्रब्रह्मः । राष्ट्राख्यादिति किम् ? देवब्रह्मा नारदः ।।१०७।।

## कु-महद्भ्यां वा ।७।३।१०८।।

आभ्यां परो यो ब्रह्मा तदन्तात् तत्पुरुषाद्वाऽट् स्यात् । कुब्रह्मः , कुब्रह्मा ; महाब्रह्मः , महाब्रह्मा ।।१०८।।

## ग्राम-कौटात् तक्ष्णः ।७।३।१०९।।

आभ्यां परो यस्तक्षा तदन्तात् तत्पुरुषादट् स्यात् । ग्रामतक्षः , कौटतक्षः ।।१०९।।

## गोष्ठा-ऽतेः शुनः ।७।३।११०।।

आभ्यां परो यः श्वा तदन्तात् तत्पुरुषादट् स्यात् । गोष्ठश्वः , अतिश्वो वराहः ।।११०।।

## प्राणिन उपमानात् ।७।३।१११।।

प्राण्यर्थादुपमानात् परो यः श्वा तदन्तात् तत्पुरुषादट् स्यात् । व्याघ्रश्वः । प्राणिन इति किम् ? फलकश्वा ।।१११।।

## अप्राणिनि ।७।३।११२।।

अप्राण्यर्थ उपमानवाची यः श्वा तदन्तात् तत्पुरुषादट् स्यात् । आकर्षश्वः । अप्राणिनीति किम् ? वानरश्वा ।।११२।।

## पूर्वोत्तर-मृगाच्च सक्थ्नः ।७।३।११३।।

एभ्य उपमानार्थाच्च परो यः सक्थिस्तदन्तात् तत्पुरुषादट् स्यात् । पूर्वसक्थम् , उत्तरसक्थम् , मृगसक्थम् , फलकसक्थम् ।।११३।।

**उरसोऽग्रे ।७।३।११४।।**

अग्रं मुखं प्रधानं वा , तदर्थो य उरास्तदन्तात् तत्पुरुषादट् स्यात् । अश्वोरसं सेनायाः , अश्वोरसं कविकम् ।।११४।।

**सरो-ऽनो-ऽश्मा-ऽयसो जाति-नाम्नोः ।७।३।११५।।**

एतदन्तात् तत्पुरुषादट् स्यात् , यथासम्भवं जातावर्थे संज्ञाविषये च । जालसरसम् , उपानसम् , स्थूलाश्मः , कालायसम् । जाति-नाम्नोरिति किम् ? परमसरः ।।११५।।

**अह्नः ।७।३।११६।।**

अहन्नन्तात् तत्पुरुषादट् स्यात् । परमाहः ।।११६।।

**संख्यातादह्नश्च वा ।७।३।११७।।**

सङ्ख्यातात् परो योऽहा तदन्तात् तत्पुरुषादट् स्यात् , अह्नश्च वाऽह्न् । सङ्ख्याताह्नः , सङ्ख्याताहः ।।११७।।

**सर्वां-ऽश-संख्या-ऽव्ययात् ।७।३।११८।।**

सर्वादंशार्थात् संख्यार्थादव्ययाच्च परो योऽहा तदन्तात् तत्पुरुषादट् स्यात् , अह्नश्चाह्न् । सर्वाह्णः , पूर्वाह्णः , द्व्यह्नः पटः , अत्यह्नी कथा ।।११८।।

**संख्यातैक-पुण्य-वर्षा-दीर्घाच्च रात्रेरत् ।७।३।११९।।**

एभ्यः सर्वांशादेश्च परो यो रात्रिस्तदन्तात् तत्पुरुषादत् स्यात् । सङ्ख्यातरात्रः , एकरात्रः , पुण्यरात्रः , वर्षारात्रः , दीर्घरात्रः , सर्वरात्रः , पूर्वरात्रः , द्विरात्रः , अतिरात्रः ।।११९।।

**पुरुषायुष-द्विस्ताव-त्रिस्तावम् ।७।३।१२०।।**

एते तत्पुरुषा अदन्ता निपात्याः । पुरुषायुषम् , द्विस्तावा , त्रिस्तावा वेदिः ।।१२०।।

**श्वसो वसीयसः ।७।३।१२१।।**

श्वसः परो यो वसीयांस्तदन्तात् तत्पुरुषादत् स्यात् । श्वोवसीयसम् ।।१२१।।

**निसश्च श्रेयसः ।७।३।१२२।।**

निसः श्वसश्च परो यः श्रेयांस्तदन्तात् तत्पुरुषादत् स्यात् । निःश्रेयसम्

, श्वःश्रेयसम् ॥१२२॥

**नञव्ययात् संख्याया डः ।७।३।१२३॥**

आभ्यां परो यः सङ्ख्यार्थस्तदन्तात् तत्पुरुषाद् डः स्यात् । अदशाः , निस्त्रिंशः , खड्गः ॥१२३॥

**संख्या-ऽव्ययादङ्गुलेः ।७।३।१२४॥**

आभ्यां परो योऽङ्गुलिस्तदन्तात् तत्पुरुषाद् डः स्यात् । द्व्यङ्गुलम् , निरङ्गुलम् ॥१२४॥

**बहुव्रीहेः काष्ठे टः ।७।३।१२५॥**

काष्ठार्थादङ्गुल्यन्ताद् बहुव्रीहेः टः स्यात् । द्व्यङ्गुलं काष्ठम् । काष्ठ इति किम् ? पञ्चाङ्गुलिर्हस्तः ॥१२५॥

**सक्थ्यक्ष्णः स्वाङ्गे ।७।३।१२६॥**

स्वाङ्गार्थौ यौ सक्थ्यक्षी , तदन्ताद् बहुव्रीहेः टः स्यात् । दीर्घसक्थी , स्वक्षी । स्वाङ्ग इति किम् ? दीर्घसक्थि अनः ॥१२६॥

**द्वित्रेर्मूर्ध्नो वा ।७।३।१२७॥**

आभ्यां परो यो मूर्धा तदन्ताद् बहुव्रीहेः टो वा स्यात् । द्विमूर्धः , द्विमूर्धा । त्रिमूर्धः , त्रिमूर्धा ॥१२७॥

**प्रमाणी-संख्याड्डः ।७।३।१२८॥**

प्रमाण्यन्तात् सङ्ख्यार्थाच्च बहुव्रीहेर्डः स्यात् । स्त्रीप्रमाणाः कुटुम्बिनः , द्वित्राः ॥१२८॥

**सुप्रात-सुश्व-सुदिव-शारिकुक्ष-चतुरस्रैणीपदा-ऽजपद-प्रोष्ठपद- भद्रपदम् ।७।३।१२९॥**

एते बहुव्रीहयो डान्ता निपात्याः । सुप्रातो ना , सुश्वः , सुदिवः , शारिकुक्षः , चतुरस्रः , एणीपदः , अजपदः , प्रोष्ठपदः , भद्रपदः ॥१२९॥

**पूरणीभ्यस्तत्प्राधान्येऽप् ।७।३।१३०॥**

पूरणप्रत्ययान्ता या स्त्री , तदन्ताद् बहुव्रीहेरप् स्यात् , पूरण्याः प्राधान्ये समासार्थत्वे सति । कल्याणीपञ्चमा रात्रयः । तत्प्राधान्य इति किम् ?

कल्याणपञ्चमीकः पक्षः ॥१३०॥

**नञ्-सु-व्युप-त्रेश्चतुरः ।७।३।१३१॥**

एभ्यो यश्चत्वाः तदन्ताद् बहुव्रीहेरप् स्यात् । अचतुरः , सुचतुरः , विचतुरः , उपचतुरः , त्रिचतुराः ॥१३१॥

**अन्तर्बहिर्भ्यां लोम्नः ।७।३।१३२॥**

आभ्यां परो यो लोमा तदन्ताद् बहुव्रीहेरप् स्यात् । अन्तर्लोमः , बहिर्लोमः प्रावारः ॥१३२॥

**भान्नेतुः ।७।३।१३३॥**

नक्षत्रार्थात् परो यो नेता तदन्ताद् बहुव्रीहेरप् स्यात् । मृगनेत्रा निशा ॥१३३॥

**नाभेर्नाम्नि ।७।३।१३४॥**

नाभ्यन्ताद् बहुव्रीहेर्नाम्न्यप् स्यात् । पद्मनाभः । नाम्नीति किम् ? विकसित-वारिजनाभिः ॥१३४॥

**नञ्-बहोर्ऋचो माणव-चरणे ।७।३।१३५॥**

आभ्यां परो य ऋक् , तदन्ताद् बहुव्रीहेरप् स्यात् , यथासंख्यं माणवे चरणे चार्थे । अनृचो माणवः , बह्वृचश्चरणः । माणव-चरण इति किम् ? अनृक्कं साम , बह्वृक्कं सूक्तम् ॥१३५॥

**नञ्-सु-दुर्भ्यः सक्ति-सक्थि-हलेर्वा ।७।३।१३६॥**

नञादेः परो यः सक्त्यादिस्तदन्ताद् बहुव्रीहेरप् वा स्यात् । असक्तः , असक्तिः , सुसक्तः , सुसक्तिः , दुःसक्तः , दुःसक्तिः ; एवम् असक्थः , असक्थिः ; अहलः , अहलिः ॥१३६॥

**प्रजाया अस् ।७।३।१३७॥**

नञादिपूर्वपदात् प्रजान्ताद् बहुव्रीहेरस् स्यात् । अप्रजाः , सुप्रजाः , दुष्प्रजाः ॥१३७॥

**मन्दा-ऽल्पाच्च मेधायाः ।७।३।१३८॥**

आभ्यां नञादिभ्यश्च परो यो मेधाशब्दस्तदन्ताद् बहुव्रीहेरस् स्यात् । मन्दमेधाः , अल्पमेधाः , अमेधाः , सुमेधाः , दुर्मेधा ना ॥१३८॥

**जातेरीयः सामान्यवति ।७।३।१३९॥**

जात्यन्ताद् बहुव्रीहेरीयः स्यात् , सामान्याश्रयेऽन्यपदार्थे । ब्राह्मणजातीयः । सामान्यवतीति किम् ? बहुजातिर्ग्रामः ॥१३९॥

**भृतिप्रत्ययान्मासादिकः ।७।३।१४०॥**

भृत्यर्थाद् यः प्रत्ययस्तदन्तात् परो यो मासस्तदन्ताद् बहुव्रीहेरिकः स्यात् । पञ्चको मासोऽस्य पञ्चकमासिकः । मासादिति किम् ? पञ्चकदिवसकः ॥१४०॥

**द्विपदाद् धर्मादन् ।७।३।१४१॥**

धर्मान्ताद् द्विपदाद् बहुव्रीहेरन् स्यात् । साधुधर्मा । द्विपदादिति किम् ? परमस्वधर्मः ॥१४१॥

**सु-हरित-तृण-सोमाज्जम्भात् ।७।३।१४२॥**

एभ्यः परो यो जम्भस्तदन्ताद् बहुव्रीहेरन् स्यात् । सुजम्भा , हरितजम्भा , तृणजम्भा , सोमजम्भा ना ॥१४२॥

**दक्षिणेर्मा व्याधयोगे ।७।३।१४३॥**

अयं बहुव्रीहिरन्नन्तो निपात्यः , व्याधेन योगे सति । ईर्मं बहु व्रणं वा , दक्षिणेर्मा मृगः । व्याधयोग इति किम् ? दक्षिणेर्मः पशुः ॥१४३॥

**सु-पूत्युत्-सुरभेर्गन्धादिद् गुणे ।७।३।१४४॥**

एभ्यः परो गुणार्थो यो गन्धस्तदन्ताद् बहुव्रीहेरित् स्यात् । सुगन्धि , पूतिगन्धि , उद्गन्धि , सुरभिगन्धि द्रव्यम् । गुण इति किम् ? द्रव्ये सुगन्ध आपणिकः ॥१४४॥

**वाऽऽगन्तौ ।७।३।१४५॥**

स्वादिभ्यः पर आहार्यगुणार्थो यो गन्धस्तदन्ताद् बहुव्रीहेरिद् वा स्यात् । सुगन्धिः , सुगन्धो वा कायः ; एवं पूतिगन्धिः , पूतिगन्धः ; उद्गन्धिः , उद्गन्धः ; सुरभिगन्धिः , सुरभिगन्धः ॥१४५॥

**वाऽल्पे ।७।३।१४६॥**

अल्पार्थे यो गन्धः तदन्ताद् बहुव्रीहेरिद् वा स्यात् । सूपगन्धि सूपगन्धं भोजनम् ॥१४६॥

**वोपमानात् ।७।३।१४७॥**

उपमानात् परो यो गन्धस्तदन्ताद् बहुव्रीहेरिद् वा स्यात् । उत्पलगन्धि उत्पलगन्धं

मुखम् ॥१४७॥

**पात् पादस्याऽहस्त्यादेः ।७।३।१४८॥**

हस्त्यादिवर्जादुपमानात् परस्य पादस्य बहुव्रीहौ पात् स्यात् । व्याघ्रपात् । अहस्त्यादेरिति किम् ? हस्तिपादः , अश्वपादः ॥१४८॥

**कुम्भपद्यादिः ।७।३।१४९॥**

एते कृतपदन्ता ङ्यन्ता एव बहुव्रीहयो निपात्याः । कुम्भपदी , जालपदी ॥१४९॥

**सु-संख्यात् ।७।३।१५०॥**

सोः संख्यायाश्च परस्य पादस्य बहुव्रीहौ पात् स्यात् । सुपाद् , द्विपात् ॥१५०॥

**वयसि दन्तस्य दतृः ।७।३।१५१॥**

सुपूर्वस्य संख्यापूर्वस्य च दन्तस्य बहुव्रीहौ वयसि गम्ये दतृः स्यात् । सुदन् कुमारः , द्विदन् बालः । वयसीति किम् ? सुदन्तः ॥१५१॥

**स्त्रियां नाम्नि ।७।३।१५२॥**

बहुव्रीहौ स्त्रियां नाम्नि दन्तस्य दतृः स्यात् , अयोदती । स्त्रियामिति किम् ? वज्रदन्तः ॥१५२॥

**श्यावा-ऽरोकाद् वा ।७।३।१५३॥**

आभ्यां परस्य दन्तस्य बहुव्रीहौ दतृर्वा स्यात् , नाम्नि । श्यावदन् , श्यावदन्तः । अरोकदन् , अरोकदन्तः ॥१५३॥

**वाऽग्रान्त-शुद्ध-शुभ्र-वृष-वराहा-ऽहि-मूषिक-शिखरात् ।७।३।१५४॥**

अग्रान्तात् , शुद्धादिभ्यश्च परस्य दन्तस्य बहुव्रीहौ दतृर्वा स्यात् । कुड्मलाग्रदन् , कुड्मलाग्रदन्तः ; शुद्धदन् , शुद्धदन्तः ; शुभ्रदन् , शुभ्रदन्तः ; वृषदन् , वृषदन्तः ; वराहदन् , वराहदन्तः ; अहिदन् , अहिदन्तः ; मूषिकदन् , मूषिकदन्तः ; शिखरदन् , शिखरदन्तः ॥१५४॥

**सं-प्राज्जानोर्ज्ञु-ज्ञौ ।७।३।१५५॥**

आभ्यां परस्य जानोर्बहुव्रीहौ ज्ञु-ज्ञौ स्याताम् । संज्ञुः , संज्ञः , प्रज्ञुः , प्रज्ञः ॥१५५॥

**वोर्ध्वात् ।७।३।१५६॥**

ऊर्ध्वात् परस्य जानोर्बहुव्रीहौ ज्ञु-ज्ञौ वा स्याताम् । ऊर्ध्वज्ञुः , ऊर्ध्वज्ञः , ऊर्ध्वजानुः ॥१५६॥

**सुहृद्-दुर्हृन्मित्रा-ऽमित्रे ।७।३।१५७॥**

सु-दुर्भ्यां परस्य हृदयस्य बहुव्रीहौ यथासंख्यं मित्रेऽमित्रे चार्थे हृद् निपात्यः । सुहृन् मित्रम् , दुर्हृद् अमित्रः । मित्रा-ऽमित्र इति किम् ? सुहृदयो मुनिः , दुर्हृदयो व्याधः ॥१५७॥

**धनुषो धन्वन् ।७।३।१५८॥**

बहुव्रीहौ स्यात् । शार्ङ्गधन्वा ॥१५८॥

**वा नाम्नि ।७।३।१५९॥**

धनुषो बहुव्रीहौ धन्वन् वा स्यात् , नाम्नि । पुष्पधन्वा , पुष्पधनुः ॥१५९॥

**खर-खुरान्नासिकाया नस् ।७।३।१६०॥**

आभ्यां परस्या नासिकाया बहुव्रीहौ नस् स्यात् , नाम्नि । खरणाः , खुरणाः ॥१६०॥

**अस्थूलाच्च नसः ।७।३।१६१॥**

स्थूलवर्जात् खर-खुराभ्यां च परस्या नासिकाया बहुव्रीहौ नसः स्यात् , नाम्नि । द्रुणसः , खरणसः , खुरणसः । अस्थूलादिति किम् ? स्थूलनासिकः ॥१६१॥

**उपसर्गात् ।७।३।१६२॥**

अस्मात् परस्या नासिकाया बहुव्रीहौ नसः स्यात् । प्रणसं मुखम् ॥१६२॥

**वेः खु-ख्र-ग्रम् ।७।३।१६३॥**

वेरुपसर्गात् परस्या नासिकाया बहुव्रीहावेते स्युः । विखुः , विख्रः , विग्रः ॥१६३॥

**जायाया जानिः ।७।३।१६४॥**

जायाशब्दस्य जानिर्बहुव्रीहौ स्यात् । युवजानिः ॥१६४॥

**व्युदः काकुदस्य लुक् ।७।३।१६५॥**

आभ्यां परस्यास्य बहुव्रीहौ लुक् स्यात् । विकाकुत् , उत्काकुत् ॥१६५॥

## पूर्णाद् वा ।७।३।१६६।।

पूर्णात् परस्य काकुदस्य बहुव्रीहौ लुग् वा स्यात् । पूर्णकाकुत् , पूर्णकाकुदः ।।१६६।।

## ककुदस्याऽवस्थायाम् ।७।३।१६७।।

अस्य बहुव्रीहौ वयसि गम्ये लुक् स्यात् । पूर्णककुद् युवा ।।१६७।।

## त्रिककुद् गिरौ ।७।३।१६८।।

गिरावर्थे त्रेः परस्य ककुदस्य बहुव्रीहौ ककुन्निपात्यः । त्रिककुद् गिरिः ।।१६८।।

## स्त्रियामूधसो न् ।७।३।१६९।।

स्त्र्यर्थस्योधसो बहुव्रीहौ न् स्यात् । कुण्डोध्नी गौः ।।१६९।।

## इनः कच् ।७।३।१७०।।

इन्नन्ताद् बहुव्रीहेः स्त्र्यर्थात् कच् स्यात् । बहुदण्डिका सेना ।।१७०।।

## ऋन्नित्यदितः ।७।३।१७१।।

ऋदन्तात् , नित्यं दिदादेशो यस्मात् तदन्ताच्च बहुव्रीहेः कच् स्यात् । बहुकर्तृकः , बहुनदीको देशः । नित्येति किम् ? पृथुश्रीः ।।१७१।।

## दध्युरः-सर्पिर्मधूपानच्छालेः ।७।३।१७२।।

एतदन्ताद् बहुव्रीहेः कच् स्यात् । प्रियदधिकः , प्रियोरस्कः , बहुसर्पिष्कः , अमधुकः , बहूपानत्कः , अशालिकः ।।१७२।।

## पुमनडुन्नौ-पयो-लक्ष्म्या एकत्वे ।७।३।१७३।।

एकार्था येऽमी , तदन्ताद् बहुव्रीहेः कच् स्यात् । अपुंस्कः , प्रियानडुत्कः अनौकः , अपयस्कः , सुलक्ष्मीकः । एकत्व इति किम् ? द्विपुमान् ।।१७३।।

## नञोऽर्थात् ।७।३।१७४।।

नञः परो योऽर्थस्तदन्ताद् बहुव्रीहेः कच् स्यात् । अनर्थकं वचः ।।१७४।।

## शेषाद् वा ।७।३।१७५।।

उपर्युक्तातिरिक्ताद् बहुव्रीहेः कच् वा स्यात् । बहुखट्वकः , बहुखट्वः । शेषादिति किम् ? प्रियपथः ।।१७५।।

## न नाम्नि ।७।३।१७६।।

नाम्नि विषये कच् न स्यात् । बहुदेवदत्तो नाम ग्रामः ॥१७६॥

**ईयसोः ।७।३।१७७॥**

ईयस्वन्तात् समासात् कच् न स्यात् । बहुश्रेयसी सेना ॥१७७॥

**सहात् तुल्ययोगे ।७।३।१७८॥**

तुल्ययोगार्थात् सहाद् बहुव्रीहेः कच् न स्यात् । सपुत्रो याति । तुल्ययोग इति किम् ? सकर्मकः ॥१७८॥

**भ्रातुः स्तुतौ ।७।३।१७९॥**

भ्रात्रन्तात् समासात् कच् न स्यात् , स्तुतौ गम्यायाम् । सुभ्राता ॥१७९॥

**नाडी-तन्त्रीभ्यां स्वाङ्गे ।७।३।१८०॥**

स्वाङ्गार्थात् नाडी-तन्त्र्यन्तात् समासात् कच् न स्यात् । बहुनाडिः कायः , बहुतन्त्री ग्रीवा । स्वाङ्ग इति किम् ? बहुनाडीकः स्तम्बः ॥१८०॥

**निष्प्रवाणिः ।७।३।१८१॥**

अस्मिन् कजभावो निपात्यः । निष्प्रवाणिः पटः ॥१८१॥

**सुभ्र्वादिभ्यः ।७।३।१८२॥**

एभ्यः कच् न स्यात् । सुभ्रूः , वरोरूः ॥१८२॥

इति [आचार्यश्री**हेमचन्द्र**विरचितायां **सिद्धहेमचन्द्रा**भिधानस्वोपज्ञशब्दानुशासन-लघुवृत्तौ] सप्तमस्याध्यायस्य तृतीयः पादः समाप्तः[1] ॥७।३॥

अयमवनिपतीन्दो ! मालवेन्द्रावरोध-
स्तनकलशपवित्रां पत्रवल्लीं लुनातु ।
कथमखिलमहीभृन्मौलिमाणिक्यभेदे ,
घटयति पटिमानं भग्नधारस्तवासिः ? ॥२७॥

१. समाप्तः P3 J2 नास्ति ॥

## [ चतुर्थः पादः ]

### वृद्धिः स्वरेष्वादेञ्णिति तद्धिते ।७।४।१।।

ञिति णिति च तद्धिते परे प्रकृतेः स्वराणां मध्ये आद्यस्वरस्य वृद्धिः स्यात् । दाक्षिः , भार्गवः । तद्धित इति किम् ? चिकीर्षकः ।।१।।

### केकय-मित्रयु-प्रलयस्य यादेरिय् च ।७।४।२।।

एषां ञ्णिति तद्धिते स्वरेष्वादेः स्वरस्य वृद्धिः , यादेश्चांशस्येय् स्यात् । कैकेयः , मैत्रेयिकया श्लाघते , प्रालेयं हिमम् ।२।।

### देविका-शिंशपा-दीर्घसत्र-श्रेयसस्तत्प्राप्तावाः ।७।४।३।।

एषां स्वरेष्वादेः स्वरस्य ञ्णिति तद्धिते वृद्धिप्राप्तावाः स्यात् । दाविकं जलम् , शांशपः स्तम्भः , दार्घसत्रम् , श्रायसं द्वादशाङ्गम् । तत्प्राप्ताविति किम् ? सौदेविकः ।।३।।

### वहीनरस्यैत् ।७।४।४।।

अस्य ञ्णिति तद्धिते स्वरेष्वादेः स्वरस्यैः स्यात् । वैहीनरिः ।।४।।

### य्वः पदान्तात् प्रागैदौत् ।७।४।५।।

ञ्णिति तद्धिते इवर्णोवर्णयोर्वृद्धिप्राप्तौ तयोरेव स्थाने यौ य्वौ पदान्तौ , ताभ्यां प्राक् यथासङ्ख्यमैदौतौ स्याताम् नैयायिकः , सौवश्वः । पदान्तादिति किम् ? यत इमे याताः ।।५।।

### द्वारादेः ।७।४।६।।

एषां यौ य्वौ तयोः समीपस्य स्वरेष्वादेः स्वरस्य वृद्धिप्राप्तौ ताभ्यामेव प्रागैदौतौ स्यातां , ञ्णिति तद्धिते । दौवारिकः , सौवरो ग्रन्थः ।।६।।

### न्यग्रोधस्य केवलस्य ।७।४।७।।

अस्य केवलस्य यो यः तत्सम्बन्धिनः स्वरेष्वादेः स्वरस्य वृद्धिप्राप्तौ तस्मादेव यः प्रागैत् स्यात् , ञ्णिति तद्धिते । नैयग्रोधो दण्डः । केवलस्येति किम् ? न्याग्रोधमूलाः शालयः ।।७।।

### न्यङ्कोर्वा ।७।४।८।।

न्यङ्कोस्तद्धिते ञ्णिति यः प्रागैद्वा स्यात् । नैयङ्कवम् , न्याङ्कवम् ।।८।।

## न ञ-स्वङ्गादेः ।७।४।९।।

ञान्तस्य स्वङ्गादेश्च ञ्णिति तद्धिते य्वः प्रागैदौतौ न स्याताम् । व्यावक्रोशी , स्वाङ्गिः , व्याङ्गिः ।।९।।

## श्वादेरिति ।७।४।१०।।

श्वादिरवयवो यस्य , तस्येदादौ ञ्णिति तद्धिते वः प्रागौन्न स्यात् । श्वाभस्त्रिः । इतीति किम् ? शौवहानम् ।।१०।।

## इञः ।७।४।११।।

इञन्तस्य श्वादेर्ञ्णिति तद्धिते वः प्रा[१]गौन्न स्यात् । श्वाभस्त्रम् ।।११।।

## पदस्यानिति वा ।७।४।१२।।

पदशब्दान्तस्य श्वादेरिदादिवर्जे ञ्णिति तद्धिते वः प्रागौद् वा स्यात् । श्वापदम् , शौवापदम् । अनितीति किम् ? श्वापदिकः ।।१२।।

## प्रोष्ठ-भद्राज्जाते ।७।४।१३।।

आभ्यां परस्य पदस्योत्तरपदस्य स्वरेष्वादेः स्वरस्य जातार्थे ञ्णिति तद्धिते वृद्धिः स्यात् । प्रोष्ठपादः , भद्रपादो बटुः ।।१३।।

## अंशादृतोः ।७।४।१४।।

अंशार्थात् परस्य ऋत्वर्थस्योत्तरपदस्य स्वरेष्वादेः स्वरस्य ञ्णिति तद्धिते वृद्धिः स्यात् । पूर्ववार्षिकः । अंशादिति किम् ? सौवर्षिकः ।।१४।।

## सु-सर्वाऽर्द्धाद् राष्ट्रस्य ।७।४।१५।।

एभ्यः परस्य राष्ट्रार्थोत्तरपदस्य ञ्णिति तद्धिते स्वरेष्वादेः स्वरस्य वृद्धिः स्यात् । सुपाञ्चालकः , सर्वपाञ्चालकः , अर्धपाञ्चालकः ।।१५।।

## अमद्रस्य दिशः ।७।४।१६।।

दिगर्थात् परस्य मद्रवर्जराष्ट्रार्थस्य ञ्णिति तद्धिते स्वरेष्वादेः स्वरस्य वृद्धिः स्यात् । पूर्वपाञ्चालकः । अमद्रस्येति किम् ? पौर्वमद्रः ।।१६।।

## प्राग्ग्रामाणाम् ।७।४।१७।।

प्रागदेशे ग्रामार्थानां योंऽशो दिगर्थस्ततः परस्यांशस्य , दिशः परेषां च

१. प्रागौर्न पार ।।

प्राग्ग्रामार्थानां ञ्णिति तद्धिते स्वरेष्वादेः स्वरस्य वृद्धिः स्यात् । पूर्वकार्ष्णमृत्तिकः , पूर्वकान्यकुब्जः ॥१७॥

**संख्या-ऽधिकाभ्यां वर्षस्याऽभाविनि ।७।४।१८॥**

संख्यार्थादधिकाच्च परस्य वर्षस्य ञ्णिति तद्धिते स्वरेष्वादेः स्वरस्य वृद्धिः स्यात् , न चेत् तद्धितो भाविन्यर्थे । द्विवार्षिकः , अधिकवार्षिकः । अभाविनीति किम् ? द्वैवर्षिकं धान्यम् ॥१८॥

**मान-संवत्सरस्याशाण-कुलिजस्याऽनाम्नि ।७।४।१९॥**

संख्यार्था-ऽधिकाभ्यां परस्य शाणकुलिजवर्जमानार्थस्य , संवत्सरस्य च ञ्णिति तद्धिते स्वरेष्वादेः स्वरस्य वृद्धिः स्यात् , अनाम्नि । द्विकौडविकः , अधिककौडविकः , द्विसांवत्सरिकः । अशाणकुलिजस्येति किम् ? द्वैशाणम् , द्वैकुलिजिकः । अनाम्नीति किम् ? पाञ्चलोहितिकम् ॥१९॥

**अर्धात् परिमाणस्याऽनतो वा त्वादेः ।७।४।२०॥**

अर्धात् परस्य परिमाणार्थस्य स्वरेष्वादेरद्वर्जस्वरस्य ञ्णिति तद्धिते वृद्धिः स्यात् , वा त्वर्धस्य । अर्धकौडविकम् , आर्धकौडविकम् । अनत इति किम् ? अर्धप्रस्थिकम् , आर्धप्रस्थिकम् ॥२०॥

**प्राद् वाहणस्यैये ।७।४।२१॥**

प्रात् परस्य वाहणस्य एये ञ्णिति तद्धिते स्वरेष्वादेर्वृद्धिः स्यात् , प्रस्य तु वा । प्रवाहणेयः , प्रावाहणेयः ॥२१॥

**एयस्य ।७।४।२२॥**

एयान्तांशात् प्रात् परस्य वाहणस्य ञ्णिति तद्धिते स्वरेष्वादेर्वृद्धिः स्यात् , प्रस्य तु वा । प्रवाहणेयिः , प्रावाहणेयिः ।२॥

**नञः क्षेत्रज्ञेश्वर-कुशल-चपल-निपुण-शुचेः ।७।४।२३॥**

नञः परेषामेषां ञ्णिति तद्धिते स्वरेष्वादेर्वृद्धिः स्यात् , नञस्तु वा । अक्षैत्रज्ञम् , आक्षैत्रज्ञम् ; अनैश्वरम् , आनैश्वरम् ; अकौशलम् , आकौशलम् ; अचापलम् , आचापलम् ; अनैपुणम् , आनैपुणम् ; अशौचम् , आशौचम् ॥२३॥

**जङ्गल-धेनु-वलजस्योत्तरपदस्य तु वा ।७।४।२४॥**

एतदुत्तरपदानामादेः पूर्वपदस्य स्वरेष्वादेर्नित्यं वृद्धिः स्यात् , वा तूत्तरपदस्य

ञ्णिति तद्धिते । कौरुजङ्गलः , कौरुजाङ्गलः । वैश्वधेनवः , वैश्वधैनवः । सौवर्णवलजः , सौवर्णवालजः ॥२४॥

**हृद्-भग-सिन्धोः ।७।४।२५॥**

हृदाद्यन्तानां पूर्वपदस्योत्तरपदस्य च स्वरेष्वादेर्वृद्धिः स्यात् , ञ्णिति तद्धिते । सौहार्दम् , सौभाग्यम् , साक्तुसैन्धवः ॥२५॥

**प्राचां नगरस्य ।७।४।२६॥**

प्राग्देशार्थस्य नगरान्तस्य ञ्णिति तद्धिते पूर्वोत्तरपदयोः स्वरेष्वादेर्वृद्धिः स्यात् । सौह्मनागरः । प्राचामिति किम् ? माडनगरः ॥२६॥

**अनुशतिकादीनाम् ।७।४।२७॥**

एषां ञ्णिति तद्धिते पूर्वोत्तरपदयोः स्वरेष्वादेर्वृद्धिः स्यात् । आनुशातिकम् , आनुहौडिकम् ॥२७॥

**देवतानामात्वादौ ।७।४।२८॥**

आत्वविषये देवतार्थानां पूर्वोत्तरपदयोः स्वरेष्वादेर्वृद्धिः स्यात् , ञ्णिति तद्धिते । आग्नावैष्णवं सूक्तम् । आत्वादाविति किम् ? ब्राह्मप्रजापत्यम् ॥२८॥

**आतो नेन्द्र-वरुणस्य ।७।४।२९॥**

आदन्तात् पूर्वपदात् परस्येन्द्रस्य वरुणस्य चोत्तरपदस्य स्वरेष्वादेर्वृद्धिर्न स्यात् । आग्नेन्द्रं सूक्तम् , ऐन्द्रावरुणम् । आत इति किम् ? आग्निवारुणम् ॥२९॥

**सारवैक्ष्वाक-मैत्रेय-भ्रौणहत्य-धैवत्य-हिरण्मयम् ।७।४।३०॥**

एतेऽणाद्यन्ता अयूलोपादौ निपात्याः । सारवं जलम् , ऐक्ष्वाकः , मैत्रेयः , भ्रौणहत्यम् , धैवत्यम् , हिरण्मयम् ॥३०॥

**वाऽन्तमा-ऽन्तितमा-ऽन्तितो-ऽन्तिया-ऽन्तिषत् ।७।४।३१॥**

एते तमबाद्यन्ताः कृततिकादिलुको वा निपात्याः । अन्तमः , अन्तिकतमः ; अन्तितमः , अन्तिकतमः ; अन्तितः , अन्तिकतः ; अन्तियः अन्तिक्यः ; अन्तिषद् , अन्तिकसद् ॥३१॥

**विन्-मतोर्णीष्ठेयसौ लुप् ।७।४।३२॥**

विन्मत्वोरेषु[१] परेषु लुप् स्यात् । स्रजयति , स्रजिष्ठः , स्रजीयान् , त्वचयति

१. **विन्मतो**° पा२ P3 ॥

, त्वचिष्ठः , त्वचीयान् ॥३२॥

**अल्प-यूनोः कन् वा ।७।४।३३॥**

अनयोर्णीष्ठेयसुषु कन् वा स्यात् । कनयति , कनिष्ठः , कनीयान् ; अल्पयति , अल्पिष्ठः , अल्पीयान् ; यवयति , यविष्ठः , यवीयान् ॥३३॥

**प्रशस्यस्य श्रः ।७।४।३४॥**

अस्य ण्यादौ श्रः स्यात् । श्रयति , श्रेष्ठः , श्रेयान् ॥३४॥

**वृद्धस्य च ज्यः ।७।४।३५॥**

अस्य प्रशस्यस्य च ण्यादौ ज्यः स्यात् । ज्ययति , ज्येष्ठः ॥३५॥

**ज्यायान् ।७।४।३६॥**

ज्यादेशात् परस्येयसोरीत् आ निपात्यः । ज्यायान् ॥३६॥

**बाढा-ऽन्तिकयोः साध-नेदौ ।७।४।३७॥**

अनयोर्ण्यादौ यथासंख्यमेतौ स्याताम् । साधयति , साधिष्ठः , साधीयान् ; नेदयति , नेदिष्ठः , नेदीयान् ॥३७॥

**प्रिय-स्थिर-स्फिरोरु-गुरु-बहुल-तृप्र-दीर्घ-वृद्ध-वृन्दारकस्येमनि च प्रा-स्था-स्फा-वर-गर-बंह-त्रप-द्राघ-वर्ष-वृन्दम् ।७।४।३८॥**

प्रियादीनां यथासंभवमिमनि ण्यादौ च यथासंख्यमेते स्युः । प्रेमा , प्रापयति , प्रेष्ठः , प्रेयान् ; स्थेमा , स्थापयति , स्थेष्ठः , स्थेयान् ; स्फापयति , वरिमा , गरिमा , बंहिमा , त्रपिमा , द्राघिमा , बर्षिमा , वृन्दिमा ॥३८॥

**पृथु-मृदु-भृश-कृश-दृढ-परिवृढस्य ऋतो रः ।७।४।३९॥**

एषामृत इम्नि ण्यादौ च रः स्यात् । प्रथिमा , प्रथयति , प्रथिष्ठः , प्रथीयान् ; एवं म्रदिमा , भ्रशिमा , क्रशिमा , द्रढिमा , परिव्रढिमा ॥३९॥

**बहोर्णीष्ठे भूय् ।७।४।४०॥**

भूययति , भूयिष्ठः ॥४०॥

**भूर्लुक् चेवर्णस्य ।७।४।४१॥**

बहोरीयसाविम्नि च भूः स्यात् , लुक् चाऽनयोरिवर्णस्य । भूयान् , भूमा ॥४१॥

**स्थूल-दूर-युव-ह्रस्व-क्षिप्र-क्षुद्रस्यान्तस्थादेर्गुणश्च नामिनः ।७।४।४२।।**

एषामिम्नि ण्यादौ चान्तस्थादेरंशस्य लुक् स्यात् , नामिनश्च गुणः । स्थवयति , स्थविष्ठः , स्थवीयान् ; एवं दवयति , यवयति , ह्रसिमा , क्षेपिमा , क्षोदिमा ।।४२।।

**त्र्यन्त्यस्वरादेः ।७।४।४३।।**

तुरन्त्यस्वरादेश्चांशस्येम्नि ण्यादौ च लुक् स्यात् । करयति , करिष्ठः , करीयान् ; पटिमा , पटयति , पटिष्ठः , पटीयान् ।।४३।।

**नैकस्वरस्य ।७।४।४४।।**

एकस्वरस्य योऽन्त्यस्वरादिरंशः तस्येम्नि ण्यादौ च लुग् न स्यात् । स्रजयति , स्रजिष्ठः , स्रजीयान् ।।४४।।

**दण्डि-हस्तिनोरायने ।७।४।४५।।**

अनयोरायनप्रत्ययेऽन्त्यस्वरादेर्लुग् न स्यात् । दाण्डिनायनः , हास्तिनायनः ।।४५।।

**वाशिन आयनौ ।७।४।४६।।**

अन्त्यस्वरादेर्लुग् न स्यात् । वाशिनायनिः ।।४६।।

**एये जिह्माशिनः ।७।४।४७।।**

अन्त्यस्वरादेर्लुग् न स्यात् । जैह्माशिनेयः ।।४७।।

**ईनेऽध्वा-ऽऽत्मनोः ।७।४।४८।।**

अन्त्यस्वरादेर्लुग् न स्यात् । अध्वनीनः , आत्मनीनः ।।४८।।

**इकण्यथर्वणः ।७।४।४९।।**

अन्त्यस्वरादेर्लुग् न स्यात् । आथर्वणिकः ।।४९।।

**यूनोऽके ।७।४।५०।।**

अन्त्यस्वरादेर्लुग् न स्यात् । यौवनिका ।।५०।।

**अनोऽटये ये ।७।४।५१।।**

अन्नन्तस्य टयवर्जे यादावन्त्यस्वरादेर्लुग् न स्यात् । सामन्यः । अटय इति किम् ? राज्यम् ।।५१।।

## अणि ।७।४।५२॥

अन्नन्तस्याऽणि अन्त्यस्वरादेर्लुग् न स्यात् । सौत्वनः ॥५२॥

## संयोगादिनः ।७।४।५३॥

संयोगात् परो य इन् , तदन्तस्याऽण्यन्त्यस्वरादेर्लुग् न स्यात् । शाङ्खिनः ॥५३॥

## गाथि-विदथि-केशि-पणि-गणिनः ।७।४।५४॥

एषामण्यन्त्यस्वरादेर्लुग् न स्यात् । गाथिनः , वैदथिनः , कैशिनः , पाणिनः , गाणिनः पुत्रः ॥५४॥

## अनपत्ये ।७।४।५५॥

इन्नन्तस्यानपत्यार्थेऽण्यन्त्यस्वरादेर्लुग् न स्यात् । सांराविणम् ॥५५॥

## उक्ष्णो लुक् ।७।४।५६॥

उक्ष्णोऽनपत्येऽण्यन्त्यस्वरादेर्लुक् स्यात् । औक्षं पदम् । अनपत्य इत्येव-औक्ष्णः ॥५६॥

## ब्रह्मणः ।७।४।५७॥

अस्यानपत्येऽण्यन्त्यस्वरादेर्लुक् स्यात् । ब्राह्ममस्त्रम् ॥५७॥

## जातौ ।७।४।५८॥

ब्रह्मणो जातावर्थेऽनपत्येऽण्यन्त्यस्वरादेर्लुक् स्यात् । ब्राह्मी औषधिः । अपत्ये तु ब्राह्मणः । जाताविति किम् ? ब्राह्मो नारदः ॥५८॥

## अवर्मणो मनोऽपत्ये ।७।४।५९॥

वर्मन्वर्जमन्नन्तस्यापत्यार्थेऽण्यन्त्यस्वरादेर्लुक् स्यात् । सौषामः । अवर्मण इति किम् ? चाक्रवर्मणः ॥५९॥

## हितनाम्नो वा ।७।४।६०॥

अस्यापत्यार्थेऽण्यन्त्यस्वरादेर्लुग् वा स्यात् । हैतनामः , हैतनामनः ॥६०॥

## नोऽपदस्य तद्धिते ।७।४।६१॥

नन्तस्यापदस्य तद्धिते परेऽन्त्यस्वरादेर्लुक् स्यात् । मैधावः । अपदस्येति किम् ? मेधाविरूप्यम् ॥६१॥

**कलापि-कुथुमि-तैतलि-जाजलि-लाङ्गलि-शिखण्डि-शिलालि-सब्रह्मचारि-पीठसर्पि-सूकरसद्म-सुपर्वणः ।७।४।६२।।**

एषामपदानां तद्धितेऽन्त्यस्वरादेर्लुक् स्यात् । कालापाः , कौथुमाः , तैतलाः , जाजलाः , लाङ्गलाः , शैखण्डाः , शैलालाः , साब्रह्मचाराः , पैठसर्पाः , सौकरसद्माः , सौपर्वाः ।।६२।।

**वाऽश्मनो विकारे ।७।४।६३।।**

अस्यापदस्य विकारार्थे तद्धितेऽन्त्यस्वरादेर्लुग् वा स्यात् । आश्मः , आश्मनः ।।६३।।

**चर्म-शुनः कोश-सङ्कोचे ।७।४।६४।।**

अनयोरपदयोर्यथासंख्यं कोशे सङ्कोचे चार्थे तद्धितेऽन्त्यस्वरादेर्लुक् स्यात् । चार्मः कोशः , शौवः सङ्कोचः ।।६४।।

**प्रायोऽव्ययस्य ।७।४।६५।।**

अपदस्यास्य तद्धितेऽन्त्यस्वरादेः प्रायो लुक् स्यात् । सौवः । प्रायः किम् ? आरातीयः ।।६५।।

**अनीना-ऽटयह्लोऽतः[1] ।७।४।६६।।**

ईना-ऽड्वर्जे[2] तद्धितेऽपदस्याऽह्लोऽतो लुक् स्यात् । आह्नम् । अनीनाटीति[3] किम् ? द्व्यहीनः[4] , प्रत्यहम् , द्व्यहः ।।६६।।

---

१. **अनीनादट्य**° J2सं० पा२ । ''ईनश्च अश्च अट् च ईनाट्, न ईनाट्'' इति P3 मध्ये टिप्पनम् ।'' ईनश्च अच्च अट् च ईनादट्, न तत्, तस्मिन् । अथवा ईनश्च अश्च अट् च ईनाट्, न ईनाट् अनीनाट्, तस्मिन् । तदा **अनीनाट्यह्लोऽतः** इति सूत्रम्'' इति पा२ मध्ये टिप्पनं वर्तते ।

अत्रेदमवधेयम्- **'अनीनाटयह्लोऽतः'** इत्येव सूत्रं प्रागासीत्, तदनुसारेणैव च वृत्तिरपि आसीत् । किन्तु अस्य दुर्गमत्वं विभाव्य केनचित् संशोधकेन 'अनीनादटयह्लोऽतः' इति संशोधितः पाठो विहितः, अतः सम्प्रति तस्यैव प्रवृत्तिर्दृश्यते । किन्तु **अनीनाटयह्लोऽतः** इत्येव मौलः पाठः ।। २.**ईनादड्वर्जे** J2सं० ।। ३.**अनीनादटीति** J2सं० पा२ ।। ४.अत्र प्रतिषु ईदृशाः- पाठाः **द्व्यहीनः, द्व्यहः** P3मू० । **द्व्यहीनः प्रत्यहं द्व्यहः** P3सं० । **द्व्यहीनः** पा२, **द्व्यहीनः , अति अन्वहं प्रत्यहं** पासं२ । **द्व्यहीनः** J2, **द्व्यहीनः प्रत्यहं द्व्यहं** J2सं० । **द्व्यहीनः त्वह द्व्यह** J1 ।।

## विंशतेस्तेर्डिति ।७।४।६७।।

अस्यापदस्य तेर्डिति तद्धिते लुक् स्यात् । विंशकः पटः ।।६७।।

## अवर्णेवर्णस्य ।७।४।६८।।

एतदन्तस्यापदस्य तद्धिते लुक् स्यात् । दाक्षिः , चौडिः , नाभेयः , दौलेयः । अपदस्येति किम् ? ऊर्णायुः ।।६८।।

## अकद्रू-पाण्ड्वोरुवर्णस्यैये ।७।४।६९।।

एतद्वर्जोवर्णान्तस्य एये तद्धिते लुक् स्यात् । जाम्बेयः । कद्र्वादिवर्जनं किम् ? काद्रवेयः , पाण्डवेयः ।।६९।।

## अस्वयम्भुवोऽव् ।७।४।७०।।

स्वयंभूवर्जोवर्णान्तस्यापदस्य तद्धितेऽव् स्यात् । औपगवः । अस्वयम्भुव इति किम् ? स्वायम्भुवः ।।७०।।

## ऋवर्णोवर्ण-दोसिसुसशश्वदकस्मात्त इकस्येतो लुक् ।७।४।७१।।

ऋवर्णोवर्णान्ताभ्यां दोसिसुसन्ताभ्यां शश्वदकस्माद्वर्जतन्ताच्च परस्येकस्थस्येतो लुक् स्यात् । मातृकम् , नैषादकर्षुकः , दौष्कः , सार्प्पिष्कः , धानुष्कः , औदश्वित्कः । शश्वदकस्माद्वर्जनं किम् ? शाश्वतिकम् , आकस्मिकम् ।।७१।।

## असकृत् संभ्रमे ।७।४।७२।।

भयादिभिः प्रयोक्तुस्त्वरणे द्योत्ये पदं वाक्यं वाऽसकृत् प्रयोज्यम् । अहिरहिरहिः , हस्त्यागच्छति हस्त्यागच्छति , लघु पलायध्वं लघु पलायध्वम् ।।७२।।

## भृशा-ऽऽभीक्ष्ण्या-ऽविच्छेदे द्विः प्राक् तमबादेः ।७।४।७३।।

क्रियाया अवयवक्रियाणां कार्त्स्न्यं भृशार्थः , पौनःपुन्यमाभीक्ष्ण्यम् , क्रियान्तराव्यवधानमविच्छेदः , एषु द्योत्येषु पदं वाक्यं वा तमबादेः प्राग् द्विः स्यात् । लुनीहि लुनीहीत्येवाऽयं लुनाति , भोजं भोजं याति , प्रपचति प्रपचति ।।७३।।

## नानावधारणे ।७।४।७४।।

नानाभूतानामियत्तापरिच्छेदे गम्ये शब्दो द्विः स्यात् । अस्मात् कार्षापणादिह भवद्भ्यां माषं माषं देहि ।।७४।।

## आधिक्या-ऽऽनुपूर्व्ये ।७।४।७५।।

एतद्वृत्ति द्विः स्यात् । नमो नमः , मूले मूले स्थूलाः ॥७५॥

**डतर-डतमौ समानां स्त्रीभावप्रश्ने ।७।४।७६॥**

केनचिद् गुणेन तुल्यानां स्त्रीलिङ्गभावस्य प्रश्ने वर्त्तमानो डतरडतमान्तो द्विः स्यात् । उभाविमावाढ्यौ , कतरा कतरा कतमा कतमा वा अनयोराढ्यता ? । भावेति किम् ? उभाविमौ लक्ष्मीवन्तौ कतराऽनयोर्लक्ष्मीः ? ॥७६॥

**पूर्व-प्रथमावन्यतोऽतिशये ।७।४।७७॥**

एतौ स्वार्थस्यान्यतः प्रकर्षे द्योत्ये द्विः स्याताम् । पूर्वं पूर्वं पुष्पन्ति , प्रथमं प्रथमं पच्यन्ते ॥७७॥

**प्रोपोत्-सम् पादपूरणे ।७।४।७८॥**

एते द्विः स्युश्चेत् पादः पूर्यः ।-

*प्रप्रशान्तकषायाग्नेरुपोपप्लववर्जितम् ।*
*उदुज्जवलं तपो यस्य , संसंश्रयत तं जिनम् ॥१॥७८॥*

**सामीप्येऽधोऽध्युपरि ।७।४।७९॥**

एते सामीप्येऽर्थे द्विः स्युः । अधोऽधः , अध्यधि , उपर्युपरि ग्रामम् ॥७९॥

**वीप्सायाम् ।७।४।८०॥**

अस्यां वर्तमानं द्विः स्यात् । वृक्षं वृक्षं सिञ्चति , ग्रामो ग्रामो रम्यः ॥८०॥

**प्लुप् चादावेकस्य स्यादेः ।७।४।८१॥**

एकस्य वीप्सायां द्व्युक्तस्याद्यस्य स्यादेः पिल्लुप् स्यात् । एकैकस्याः ॥८१॥

**द्वन्द्वं वा ।७।४।८२॥**

वीप्साद्व्युक्तस्य द्वेरादेः स्यादेर्लुप् स्यात् , एश्चाऽम् , उत्तरत्रेतोऽत्वं स्यादेश्चाऽम् वा निपात्यः । द्वन्द्वं द्वौ द्वौ वा तिष्ठतः ॥८२॥

**रहस्य-मर्यादोक्ति-व्युत्क्रान्ति-यज्ञपात्रप्रयोगे ।७।४।८३॥**

एषु गम्येषु द्वेर्द्विर्वचनं शेषं च पूर्ववन्निपात्यम् । द्वन्द्वं मन्त्रयन्ते , पशवो द्वन्द्वं मिथुनायन्ते , द्वन्द्वं व्युत्क्रान्ताः , द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति ॥८३॥

**लोकज्ञातेऽत्यन्तसाहचर्ये ।७।४।८४॥**

अत्र द्योत्ये द्वेः पूर्ववत् द्वन्द्वमिति निपात्यम् । द्वन्द्वं रामलक्ष्मणौ ॥८४॥

**आबाधे ।७।४।८५।।**

मनःपीडाविषये शब्दो द्विः स्यात् , आदौ स्यादेश्च प्लुप् । ऋक् ऋक् ।।८५।।

**नवा गुणः सदृशे रित् ।७।४।८६।।**

गुणशब्दो मुख्यसदृशे गुणे गुणिनि वा वर्त्तमानो द्विर्वा स्यात् , आदौ स्यादेः प्लुप् च , सा च रित् । शुक्लशुक्लं रूपम् , कालककालिका , पक्षे शुक्लजातीयः ।।८६।।

**प्रिय-सुखं चाकृच्छ्रे ।७।४।८७।।**

एतावक्लेशार्थौ वा द्विः स्याताम् , आदौ स्यादेश्च[1] प्लुप् । प्रियप्रियेण , प्रियेण वा दत्ते ; सुखसुखेन , सुखेन वाऽधीते ।।८७।।

**वाक्यस्य परिर्वर्जने ।७।४।८८।।**

वर्जनार्थो वाक्यांशः परिर्वा द्विः स्यात् । परि परि , परि वा त्रिगर्त्तेभ्यो वृष्टो मेघः । वाक्यस्येति किम् ? परित्रिगर्त्तं वृष्टो मेघः ।।८८।।

**सम्मत्यसूया-कोप-कुत्सनेष्वाद्यामन्त्र्यमादौ स्वरेष्वन्त्यश्च प्लुतः ।७।४।८९।।**

एतद्वृत्तेर्वाक्यस्यादिभूतमामन्त्र्यार्थं पदं द्विः स्यात् , द्वित्वे चादौ स्वराणां मध्येऽन्त्यस्वरः प्लुतो वा स्यात् । माणवक३ माणवक ! , माणवक माणवक ! आर्यः खल्वसि ; रिक्तं ते आभिरूप्यम् , इदानीं ज्ञास्यसि जाल्म ! रिक्ता ते शक्तिरिति वा । आदीति किम् ? भव्यः खल्वसि माणवक ! ।।८९।।

**भर्त्सने पर्यायेण ।७।४।९०।।**

कोपेन दण्डाविष्क्रिया भर्त्सनम् , एतद्वृत्तेर्वाक्यस्य यदामन्त्र्यं पदं तद् द्विः स्यात् , द्वित्वे च क्रमेण पूर्वोत्तरपदयोः स्वरेष्वन्त्यः प्लुतो वा स्यात् । चौर ३ चौर ! , चौर चौर ३ ! , चौर चौर ! घातयिष्यामि त्वाम् ।।९०।।

**त्यादेः साकाङ्क्षस्याङ्गेन ।७।४।९१।।**

भर्त्सनाऽर्थस्य वाक्यस्य स्वरेष्वन्त्यः स्वरः , त्याद्यन्तस्य पदस्य वाक्यान्तराकाङ्क्षस्य अङ्गेन युक्तस्यांशः प्लुतो वा स्यात् । अङ्ग ! कूज ३ , अङ्ग ! कूज , इदानीं ज्ञास्यसि जाल्म ! । साकाङ्क्षस्येति किम् ? अङ्ग ! पच ।।९१।।

१. स्यादेः प्लुप् च P3 । स्यादेश्च प्लुप् च J2 ।।

## क्षिया-ऽऽशीः-प्रैषे ।७।४।९२।।

**क्षिया** आचारभ्रेषः ,[ आशीः[1] प्रार्थनाविशेषः ; **प्रैषो**ऽसत्कारपूर्विका व्यापारणा ] । एतद्वृत्तेर्वाक्यस्य स्वरेष्वन्त्यः स्वरः , त्याद्यन्तस्य वाक्यान्तराकाङ्क्षस्यांशः प्लुतो वा स्यात् । स्वयं ह रथेन याति ३ याति वा , उपाध्यायं पदातिं गमयति । सिद्धान्तमध्येषीष्ठाः ३ अध्येषीष्ठा वा , तर्कं च तात ! । कटं च कुरु ३ कुरु वा , ग्रामं च गच्छ ।।९२।।

## चितीवार्थे ।७।४।९३।।

सादृश्यार्थे चिति प्रयुक्ते वाक्यस्य स्वरेष्वन्त्यः स्वरः प्लुतो वा स्यात् । अग्निश्चिद्भाया ३ त् , भायाद् वा । इवार्थे इति किम् ? कर्णवेष्टकांश्चित्कारय ।।९३।।

## प्रतिश्रवण-निगृह्यानुयोगे ।७।४।९४।।

एतद्वृत्तेर्वाक्यस्य स्वरेष्वन्त्यः स्वरः प्लुतो वा स्यात् । गां मे देहि भोः ! हन्त ते ददामि ३, ददामि वा । अद्य श्राद्धमित्यात्थ ३, आत्थ वा ।।९४।।

## विचारे पूर्वस्य ।७।४।९५।।

**विचारः** संशयः , तद्विषये संशय्यमानस्य यत् पूर्वं तस्य स्वरेष्वन्त्यः स्वरः प्लुतो वा स्यात् । अहिर्नु ३ नु वा रज्जुर्नु ।।९५।।

## ओमः प्रारम्भे ।७।४।९६।।

ओमः प्रणामाद्यभ्यादानार्थस्य स्वरेष्वन्त्यः स्वरः प्लुतो वा स्यात् । ओ ३ म् , ओम् वा , ऋषभमृषभगामिनं प्रणमत ।।९६।।

## हेः प्रश्नाख्याने ।७।४।९७।।

पृष्टप्रतिवचनार्थं वाक्यस्य हेः स्वरेष्वन्त्यः स्वरः प्लुतो वा , स्यात् । अकार्षीः कटं मैत्र ? अकार्षं हि ३ , हि वा ।।९७।।

## प्रश्ने च प्रतिपदम् ।७।४।९८।।

प्रश्नार्थस्य प्रश्नाख्यानार्थस्य च वाक्यस्य यत् पदं तस्य स्वरेष्वन्त्यः स्वरः प्लुतो वा स्यात् । अगमः ३ पूर्वा ३ न् ग्रामा ३ न् मैत्र ३? , अगमः पूर्वान् ग्रामान् मैत्र ? ; अगम ३ म् पूर्वा ३ न् ग्रामा ३ न् मैत्र ३ ! , अगमं

१. [ ] बृहद्वृत्तावेवायं पाठः ।।

पूर्वान् ग्रामान् मैत्र ! ॥९८॥

**दूरादामन्त्र्यस्य गुरुर्वैकोऽनन्त्योऽपि लनृत् ।७।४।९९॥**

वाक्यस्य यः स्वरेष्वन्त्यस्वरो दूरादामन्त्र्यार्थपदस्थो गुरुर्वाऽनन्त्योऽपि ऋद्वर्ज-स्वरऌकारश्चैकोऽसौ प्लुतो वा स्यात् । आगच्छ भो देवदत्त ३ ! , देवदत्त ! वा ; सक्तून् पिब दे३वदत्त , देवद३त्त , देवदत्त वा ; आगच्छ भो क्लृ३प्तशिख , क्लृप्तशिख वा । अनृदिति किम् ? कृष्णमि३त्र ! , कृष्णमित्र !॥९९॥

**हे-हैष्वेषामेव ।७।४।१००॥**

दूरादामन्त्र्यस्य यौ हे-हैशब्दौ तयोः प्रयुक्तयोरेव वाक्ये यत्र तत्रस्थयोरन्त्यः स्वरः प्लुतो वा स्यात् । हे३ मैत्र ! आगच्छ , आगच्छ हे३ मैत्र ! , आगच्छ मैत्र हे ३ ! ; है३ मैत्राऽऽगच्छ , आगच्छ है३ मैत्र ! , आगच्छ मैत्र है ३ ! ॥१००॥

**अस्त्री-शूद्रे प्रत्यभिवादे भो-गोत्र-नाम्नो वा ।७।४।१०१॥**

यदभिवादितो गुरुः कुशलानुयोगादिमद्वाक्यं प्रयुङ्क्ते तत्राऽस्त्रीशूद्रविषये वर्त्त-मानस्य वाक्यस्य स्वरेष्वन्त्यस्वरो भोसो गोत्रस्य नाम्नो वाऽऽमन्त्र्यस्यांशः प्लुतो वा स्यात् । अभिवादये मैत्रोऽहं भोः ! , आयुष्यमानेधि भोः ३ ! भो ! वा । अभिवादये गार्ग्योऽहं भोः ! , कुशल्यसि गार्ग्य ३ ! गार्ग्य ! वा । अभिवादये मैत्रोऽहं भोः ! , आयुष्मन्नेधि मैत्र ३ ! मैत्र वा । स्त्री-शूद्रवर्जनं किम् ? अभिवादये गार्ग्यहं भोः ! , आयुष्यमती त्वं भव गार्गि ! ; अभिवादये तुषजकोऽहं भोः ! , कुशल्यसि तुषजक ! ॥१०१॥

**प्रश्ना-ऽर्चा-विचारे च सन्धेयसन्ध्यक्षरस्याऽऽदिदुत्परः ।७।४।१०२॥**

एषु प्रत्यभिवादे च वर्त्तमानस्य वाक्यस्य स्वरेष्वन्त्यः स्वरः सन्धियोग्यसन्ध्य-क्षरान्तस्य प्लुतो भवन् आ इदुत्परः स्यात् । अगमः३ पूर्वा३न् ग्रामा३न् अग्निभूता३इ ! , पटा३उ ! ? ; अर्चा-शोभनः खल्वसि अग्निभूता३इ ! , पटा३उ ! ; विचार-वस्तव्यं किं निर्ग्रन्थस्य सागारिका३इ , उताऽनागारिके ?; प्रत्यभिवा[1]दे-आयुष्मानेधि अग्निभूता३इ ! । सन्धेयेति किम् ? कच्चि३त् कुशल३म् भवत्योः३ कन्ये३? ॥१०२॥

१. °वादे P3 विना ॥

**तयोर्य्वौ स्वरे संहितायाम् ।७।४।१०३।।**

**तयोः** प्लुताऽऽकारात् परयोरिदुतोः स्वरे परे संहिताविषये यथासंख्यं य्वौ स्यताम् । अगमः३ अग्निभूता३यत्रागच्छ , अगमः३ पटा३वत्रागच्छ । संहिताया मिति किम् ? अग्ना३इ इन्द्रम् । पटा३उ उदकम् ।।१०३।।

**पञ्चम्या निर्दिष्टे परस्य ।७।४।१०४।।**

पञ्चम्या निर्दिष्टे यत् कार्यमुक्तं तत् परस्याऽव्यवधेः स्यात् । *अतो भिस ऐस्* [१।४।२] वृक्षैः , इह मा भूत्-मालाभिरत्र , दृषद्भिः ।।१०४।।

**सप्तम्या पूर्वस्य ।७।४।१०५।।**

सप्तम्या निर्दिष्टे यत् कार्यमुक्तं तत् पूर्वस्याऽव्यवधेः स्यात् । दध्यत्र , इह मा भूत्- समिदत्र ।।१०५।।

**षष्ठ्याऽन्त्यस्य ।७।४।१०६।।**

षष्ठ्या निर्दिष्टे यदुक्तं तत् षष्ठ्युक्तस्य योऽन्त्यस्तस्य स्यात् । अष्टाभिः ।।१०६।।

**अनेकवर्णः सर्वस्य ।७।४।१०७।।**

अयं विधिः षष्ठ्योक्तस्य सर्वस्यैव स्यात् । तिसृभिः ।।१०७।।

**प्रत्ययस्य ।७।४।१०८।।**

प्रत्ययस्थानिनो विधिः सर्वस्य स्यात् । सर्वे ।।१०८।।

**स्थानीवाऽवर्णविधौ ।७।४।१०९।।**

आदेश आदेशीव स्यात् , न चेत् स्थानिवर्णाश्रयं कार्यम् । भव्यम् , कस्मै , राजा , प्रकृत्य । अवर्णविधाविति किम् ? द्यौः , क इष्टः , प्रदीव्य ।।१०९।।

**स्वरस्य परे प्राग्विधौ ।७।४।११०।।**

स्वरस्यादेशः परनिमित्तकः पूर्वस्य विधौ विधेये स्थानीव स्यात् । कथयति , पादिकः , स्रंस्यते । पर इति किम् ? द्विपदिकां दत्ते । प्राग्विधाविति किम् ? नैधेयः ।।११०।।

**न सन्धि-ङी-य-क्वि-द्वि-दीर्घा-ऽसद्विधावस्कूलुकि ।७।४।१११।।**

सन्धिविधौ ङीविधौ यविधौ क्विविधौ द्वित्वविधौ दीर्घविधौ *संयोगस्यादौ स्कोर्लुक्* *[२।१।८८]* इति स्कूलुग्वर्जे चाऽसद्विधौ स्वरस्याऽऽदेशः स्थानीव न स्यात् ।

सन्धि-वियन्ति , ङी-बिम्बम् , य-कण्डूतिः , कि-दयूः , द्वि-दद्ध्यत्र , दीर्घ-शामं शामम् , [असद्विधौ]-यायष्टिः । अस्क्लुकीति किम् ? सुकूः , काष्ठतक् ॥१११॥

## लुप्यय्वृल्लेनत् ।७।४।११२॥

प्रत्ययस्य लुपि सत्यां लुब्भूतपरनिमित्तकं पूर्वं कार्यं न स्यात् , य्वृत् लं एनच्च मुक्त्वा । तद् , गर्गाः । लुपीत्युक्ते लुकि स्यादेव-गोमान् । अय्वृल्लेनदिति किम् ? जरीगृहीति , निजागलीति , एनत् पश्य ॥११२॥

## विशेषणमन्तः ।७।४।११३॥

अभेदेनोक्तोऽवयवो विशेषणं विशेष्यस्य समुदायस्यान्तः स्यात् *अतः स्यमोऽम् [१।४।५७]* कुण्डम् , इह न स्यात्- तद् ॥११३॥

## सप्तम्या आदिः ।७।४।११४॥

सप्तम्यन्तस्य विशेष्यस्य यद् विशेषणं तत् तस्याऽऽदिः स्यात् । *इन् ङीस्वरे लुक् [१।४।७९]* पथः , इह मा भूत्- पथिषु ॥११४॥

## प्रत्ययः प्रकृत्यादेः ।७।४।११५॥

यस्माद् यः प्रत्ययो विधीयते सा तस्य प्रकृतिः , प्रत्ययः प्रकृत्यादेः समुदायस्य विशेषणं स्यात् , नोनाधिकस्य । मातृभोगीणः ॥११५॥

## गौणो ङ्यादिः ।७।४।११६॥

ङीमारभ्य ष्यं यावत् ङ्यादिः प्रत्ययः , स गौणः सन् प्रकृत्यादेः समुदायस्य विशेषणं स्यात् । अतिकारीषगन्ध्यबन्धुः । गौण इति किम् ? मुख्योऽधिकस्यापि विशेषणं स्यात्-परमकारीषगन्धीबन्धुः ॥११६॥

## कृत् सगतिकारकस्यापि ।७।४।११७॥

कृत्प्रत्ययः प्रकृत्यादेः समुदायस्य गतिकारकपूर्वस्य , केवलस्य च विशेषणं स्यात् । यथेह समासो-भस्मनिहुतं , तथा-उदकेविशीर्णम् , अवतप्तेनकुलस्थितम् ॥११७॥

## परः ।७।४।११८॥

प्रत्ययः प्रकृतेः पर एव स्यात् । अजा , वृक्षः , जुगुप्सते ॥११८॥

## स्पर्द्धे ।७।४।११९॥

द्वयोर्विध्योरन्यत्र सावकाशयोस्तुल्यबलयोरेकत्रानेकत्र चोपनिपातः स्पर्द्धः ,

तत्र यः सूत्रपाठे परः स विधिः स्यात् । वनानि , अत्र *शसोऽता सश्च नः पुंसि [१।४।४९]* इत्यतो *नपुंसकस्य शिः [१।४।५५]* इत्येव स्यात् ॥११९॥

**आसन्नः ।७।४।१२०॥**

यथास्वं स्थाना-ऽर्थ-प्रमाणादिभिरासन्न एव विधिः स्यात् । दण्डाग्रम् , अत्र कण्ठ्ययोरतोः कण्ठ्य एव आ दीर्घः । वातण्ड्ययुवतिः , वतण्ड्याः पुंवद्भावेऽर्थत आसन्नः-वातण्ड्यः ; अमुष्मै , *मादुवर्णोऽनु [२।१।४७]* इति मात्रिकस्य मात्रिकः ॥१२०॥

**सम्बन्धिनां सम्बन्धे ।७।४।१२१॥**

सम्बन्धिशब्दानां यत् कार्यमुक्तं तत् सम्बन्ध एव सति स्यात् । श्वशुर्यः , संज्ञायास्तु इञेव-श्वाशुरिः ॥१२१॥

**समर्थः पदविधिः ।७।४।१२२॥**

समर्थपदाश्रयत्वात् समर्थः , पदसम्बन्धी विधिः पदविधिः , सर्वः पदविधिः समर्थो ज्ञेयः , सामर्थ्यं च व्यपेक्षा एकार्थीभावश्च । पदविधिस्तु समास-नामधातु-कृत्-तद्धितोपपदविभक्ति-युष्मदस्मदादेश-प्लुतरूपः । धर्मश्रितः , पुत्रीयति , कुम्भकारः , औपगवः , नमो देवेभ्यः , धर्मस्ते स्वम् , धर्मो मे स्वम् , अङ्ग ! कूज३ इदानीं ज्ञास्यसि जाल्म ! । समर्थ इति किम् ? पश्य धर्मं श्रितो मैत्रो गुरुकुलम् , पश्यति पुत्रमिच्छति सुखम् , पश्य कुम्भं करोति कटम् , गृहमुपगोरपत्यं तव , इदं नमो देवाः ! शृणुत , ओदनं पच तव मम वा भविष्यति । अङ्ग ! कूजत्ययमिदानीं ज्ञास्यति जाल्मः । पदोक्तवर्णविधिरसामर्थ्येऽपि स्यात्—तिष्ठतु दध्यशान त्वं शाकेन । एवं समास-नामधातु-कृत्-तद्धितेषु वाक्ये व्यपेक्षा । वृत्तावेकार्थीभावः , शेषेषु पुनर्व्यपेक्षैव सामर्थ्यम् ॥१२२॥

इत्याचार्यश्री**हेमचन्द्र**विरचितायां

**सिद्धहेमचन्द्रा**भिधानस्वोपज्ञशब्दानुशासनलघुवृत्तौ

सप्तमस्याध्यायस्य चतुर्थः पादः समाप्तः ॥७।४॥

॥ सप्तमोऽध्यायः समाप्तः ॥

क्षितिधव ! भवदीयः क्षीरधारावलक्षै
रिपुविजययशोभिः श्वेत एवासिदण्डः ।
किमुत कवलितैस्तैः कज्जलैर्मालवीनां
परिणतमहिमाऽसौ नीलिमानं बिभर्ति ॥२८॥

# [ समाप्तम् ]

## अपरं शुद्धिपत्रकम् ।

| पृ. | पं. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ११ | २४ | मूवाऽत्य | वाऽत्य |
| ४५ | २६ | स्रंस- | स्रंस्- |
| २५७ | १९ | नेमिः । | नेमि । |
| ३३६ | २१ | परुल्नम् | परुत्नम् |
| ३३६ | २२ | प्ररुत्तनम् | परुत्तनम् |
| ३६८ | २२ | दहरतोश्च | दद्दरतोऽश्च |
| ४२६ | ११ | सक्त्थ्यक्ष्णः | सक्थ्यक्ष्ण |
| ४२६ | १२ | सक्त्थ्यक्षी | सक्थ्यक्षी |
| ४२७ | १७ | सक्त्थि | सक्थि |
| ४२७ | १९ | असक्त्थः | असक्थः |
| ४२७ | १९ | असक्त्थिः | असक्थिः |
| ८११ | ८ | सक्त्थ्यक्ष्ण | सक्थ्यक्ष्णः |

# प्रथमं परिशिष्टम् ।

## श्री सिद्धहेमचन्द्रशब्दानुशासनसप्ताध्यायीसूत्राणामकाराद्यनुक्रमः ।

सूत्रम् सूत्राङ्कः

अइउवर्ण-देः ।१।२।४१।।
अं अः-सर्गौ ।१।१।८।।
अं अः ≍क-ट् ।१।१।१६।।
अंशं हारिणि ।७।१।१८२।।
अंशादृतोः ।७।४।१४।।
अः सपत्न्याः ।७।१।११९।।
अः सृजिदृशो० ।४।४।१११।।
अः स्थाम्नः ।६।१।२२।।
अकखाद्य-वा।२।३।८०।।
अकट्घिनोश्च रञ्जेः ।४।२।५०।।
अकद्रू-ये ।७।४।६९।।
अकमेरुकस्य ।२।२।९३।।
अकल्पात् सूत्रात् ।६।२।१२०।।
अकालेऽव्ययीभावे ।३।२।१४६।।
अकेन क्रीडाजीवे ।३।१।८१।।
अक्लीबेऽध्वर्युक्रतोः ।३।१।१३९।।
अक्ष्णोऽप्राण्यङ्गे ।७।३।८५।।
अगारान्तादिकः ।६।४।७५।।
अगिलाद्गिलगिल० ।३।२।११५।।
अग्निचित्या ।५।१।३७।।
अग्नेश्चेः ।५।१।१६४।।
अग्रहानुपदेशे०।३।१।५।।
अघञ्क्यबल-वीं।४।४।२।।

सूत्रम् सूत्राङ्कः

अघोषे प्र-टः ।१।३।५०।।
अघोषे शिटः ।४।१।४५।।
अङप्रतिस्त-म्भः ।२।३।४१।।
अङे हि-हनो-र्वात् ४।१।३४।।
अज्ञान्निरसने णिङ् ।३।४।३८।।
अङ्स्थाच्छत्रादेरञ् ।६।४।६०।।
अच् ।५।१।४९।।
अचः ।१।४।६९।।
अचि ।३।४।१५।।
अचित्तादेदशकालात् ।६।३।२०६।।
अचित्ते टक् ।५।१।८३।।
अच्च् प्रा-श्च ।२।१।१०४।।
अजातेः पञ्चम्याः ।५।१।१७०।।
अजातेः शीले ।५।१।१५४।।
अजातेर्नृ-वा ।७।३।३५।।
अजादिभ्यो धेनोः ।६।१।३४।।
अजादेः ।२।४।१६।।
अज्ञाने ज्ञः षष्ठी ।२।२।८०।।
अश्वः ।२।४।३।।
अश्वोऽनर्चायाम् ।४।२।४६।।
अञ्जनादीनां गिरौ ।३।२।७७।।
अञ्वर्ग-तः ।१।३।३३।।
अञ्वर्गात्-न् ।१।२।४०।।

एये जिह्माशिनः ।७।४।४७।।
एषामीर्व्यञ्जनेऽदः ।४।२।९७।।
एष्यत्यवधौ-गे ।५।४।६।।
एष्यदृणेनः ।२।२।९४।।
ऐकार्थ्ये ।३।२।८।।
ऐदौत्-रैः ।१।२।१२।।
ऐषमःपरु-र्ष ।७।२।१००।।
ऐषमोह्यःश्वसो वा ।६।३।१९।।
ओजःसहो-ते ।६।४।२७।।
ओजोञ्जःस-ष्टः ।३।२।१२।।
ओजोऽप्सरसः ।३।४।२८।।
ओत औः ।१।४।७४।।
ओतः श्ये ।४।२।१०३।।
ओदन्तः ।१।२।३७।।
ओदौतोऽवाव् ।१।२।२४।।
ओमः प्रारम्भे ।७।४।९६।।
ओमाङि ।१।२।१८।।
ओर्जाऽन्तस्था-र्णे ।४।१।६०।।
ओष्ठ्यादुर् ।४।४।११७।।
औता ।१।४।२०।।
औदन्ताः स्वराः ।१।१।४।।
औरी ।१।४।५६।।
कंशंभ्यां-भम् ।७।२।१८।।
कंसार्धात् ।६।४।१३५।।
कंसीयात् ञ्यः ।६।२।४१।।

ककुदस्या-म् ।७।३।१६७।।
कखोपान्त्य-दोः ।६।३।५९।।
कगेवनूजनै-रञ्जः ।४।२।२५।।
कङश्चञ् ।४।१।४६।।
कच्छाग्निवक्त्र-दात् ।६।३।६०।।
कच्छादेर्नृनृस्थे ।६।३।५५।।
कच्छ्वा डुरः ।७।३।३९।।
कटः ।७।१।१२४।।
कटपूर्वात्प्राचः ।६।३।५८।।
कठादिभ्यो वेदे लुप् ।६।३।१८३।।
कडारादयः कर्म० ।३।१।१५८।।
कणेमनस्तृप्तौ ।३।१।६।।
कण्ड्वादेस्तृतीयः ।४।१।९।।
कतरकतमौ-श्ने ।३।१।१०९।।
कत्रिः ।३।२।१३३।।
कत्र्यादेश्चैयकञ् ।६।३।१०।।
कथमित्थम् ।७।२।१०३।।
कथमि सप्तमी च वा ।५।४।१३।।
कथादेरिकण् ।७।१।२१।।
कदाकर्ह्योर्नवा ।५।३।८।।
कन्थाया इकण् ।६।३।२०।।
कन्यात्रिवेण्याः-च ।६।१।६२।।
कपिज्ञातेरेयण् ।७।१।६५।।
कपिबोधा-से ।६।१।४४।।
कपेर्गोत्रे ।२।३।२९।।

ज्योतिषम् ।६।३।१९९।।
ज्योत्स्नादिभ्योऽण् ।७।२।३४।।
ज्वलह्वलह्मल-वा ।४।२।३२।।
ञिख्णमोर्वा ।४।४।१०६।।
ञिच् ते पद-च ।३।४।६६।।
ञिणवि घन् ।४।३।१०१।।
ञिदार्षादणिञोः ।६।१।१४०।।
ञ्णिति ।४।३।५०।।
ञ्णिति घात् ।४।३।१००।।
टः पुंसि ना ।१।४।२४।।
टनण् ।५।१।६७।।
टस्तुल्यदिशि ।६।३।२१०।।
टाङसोरिनस्यौ ।१।४।५।।
टाङ्योसि यः ।२।१।७।।
टादौ स्वरे वा ।१।४।९२।।
टौस्यनः ।२।१।३७।।
टौस्येत् ।१।४।१९।।
ट्धेघ्राशाछासो वा ।४।३।६७।।
ट्धेश्वेर्वा ।३।४।५९।।
ट्वितोऽथुः ।५।३।८३।।
डकश्चाष्टाच-णाम् ।६।४।८४।।
डतरडतमौ-श्रे ।७।४।७६।।
डतिष्णः-प् ।१।४।५४।।
डत्यतु संख्यावत् ।१।१।३९।।
डाच्यादौ ।७।२।१४९।।
डाच्लोहिता-षित् ।३।४।३०।।
डित्यन्त्यस्वरादेः ।२।१।११४।।
डिद्वाण् ।६।२।१३६।।
डिन् ।७।१।१४७।।
डीयश्व्यैदितः क्तयोः ।४।४।६१।।
ड्नः सः-श्चः ।१।३।१८।।
ड्वितस्त्रिमक्-तम् ।५।३।८४।।
ढस्तड्ढे ।१।३।४२।।
णकतृचौ ।५।१।४८।।
णश्च विश्रवसो-वा ।६।१।६५।।
णषमसत्परे स्यादि० ।२।१।६०।।
णस्वराघोषा-श्च ।२।४।४।।
णावज्ञाने गमुः ।४।४।२४।।
णिज् बहुलं-षु ।३।४।४२।।
णिद्वान्त्यो णव् ।४।३।५८।।
णिन् चावश्य-र्ण्ये ।५।४।३६।।
णिवेत्त्यास-नः ।५।३।१११।।
णिश्रिद्रुस्रुकमः-ङः ।३।४।५८।।
णिस्तोरेवाऽणि ।२।३।३७।।
णिस्नुश्र्यात्मने-तु ।३।४।९२।।
णेरनिटि ।४।३।८३।।
णेर्वा ।२।३।८८।।
णोऽन्नात् ।७।१।१०।।
णौ क्रीजीङः ।४।२।१०।।
णौ ङसनि ।४।१।८८।।
णौ दान्त-शान्त-क्षम् ।४।४।७४।।
णौ मृगरमणे ।४।२।५१।।

तूष्णीकाम् ।७।३।३२।।
तूष्णीमा ।५।४।८७।।
तृणादेः सल् ।६।२।८१।।
तृणे जातौ ।३।२।।१३२।।
तृतीयस्य पञ्चमे ।१।३।१।।
तृतीया तत्कृतैः ।३।१।६५।।
तृतीयान्तात्-गे ।१।४।१३।।
तृतीयायाम् ।३।१।८४।।
तृतीयाल्पीयसः ।२।२।११२।।
तृतीयोक्तं वा ।३।१।५०।।
तृन्नुदन्ता-स्य ।२।२।९०।।
तृन् शीलधर्मसाधुषु ।५।२।२७।।
तृप्तार्थपूरणा-शा ।३।१।८५।।
तृषिधृषिस्वपो नजिङ् ।५।२।८०।।
तृस्वसृ-र् ।१।४।३८।।
तृहः श्नादीत् ।४।३।६२।।
तॄत्रपफलभजाम् ।४।१।२५।।
ते कृत्याः ।५।१।४७।।
तेन च्छन्ने रथे ।६।२।१३१।।
तेन जित-त्सु ।६।४।२।।
तेन निर्वृत्ते च ।६।२।७१।।
तेन प्रोक्ते ।६।३।१८१।।
तेन वित्ते-णो ।७।१।१७५।।
तेन हृतताद्यः ।६।४।१०१।।
तेर्ग्रहादिभ्यः ।४।४।३३।।
ते लुग्वा ।३।२।१०८।।
तेषु देये ।६।४।९७।।
तो वा ।७।२।१४८।।
तौ माङ्याक्रोशेषु ।५।२।२१।।
तौ मुमो-स्वौ ।१।३।१४।।
तौ सनस्तिकि ।४।२।६४।।
त्यजयजप्रवचः ।४।१।११८।।
त्यदादिः ।३।१।१२०।।
त्यदादिः ।६।१।७।।
त्यदादेर्मयट् ।६।३।१५९।।
त्यदाद्यन्यसमा-च ।५।१।१५२।।
त्यदामेन-ते ।२।१।३३।।
त्यादिसर्वादेः-ऽक् ।७।३।२९।।
त्यादेः सा-न ।७।४।९१।।
त्यादेश्च प्र-पप् ।७।३।१०।।
त्यादौ क्षेपे ।३।२।१२६।।
त्रने या ।४।४।३।।
त्रन्त्यस्वरादेः ।७।४।४३।।
त्रपुजतोः षोऽन्तश्च ।६।२।३३।।
त्रप् च ।७।२।९२।।
त्रसिगृधि-क्नुः ।५।२।३२।।
त्रिंशद्विंशते-र्थे ।६।४।१२९।।
त्रिककुद् गिरौ ।७।३।१६८।।
त्रिचतुरस्-दौ ।२।१।१।।
त्रीणि त्रीण्यन्य-दि ।३।३।१७।
त्रेस्तृ च ।७।१।१६६।।
त्रेस्त्रयः ।१।४।३४।।

त्रैंश-चात्वारिंशम् ।६।४।१७४।।
त्वते गुणः ।३।२।५९।।
त्वमहं-कः ।२।१।१२।।
त्वमौ प्र-न् ।२।१।११।।
त्वे ।२।४।१००।।
त्वे वा ।६।१।२६।।
थे वा ।४।१।२९।।
थो न्थ् ।१।४।७८।।
दंशसञ्जः शवि ।४।२।४९।।
दंशेस्तृतीयया ।५।४।७३।।
दंशेस्त्रः ।५।२।९०।।
दक्षिणाकडङ्गर-यौ ।६।४।१८१।।
दक्षिणापश्चा-त्यण् ।६।३।१३।।
दक्षिणेर्मा व्याधयोगे ।७।३।१४३।।
दक्षिणोत्तराच्चातस् ।७।२।११७।।
दगुकोशल-दिः ।६।१।१०८।।
दण्डादेर्यः ।६।४।१७८।।
दण्डिहस्ति-ने ।७।४।४५।।
दत् ।४।४।१०।।
दध्न इकण् ।६।२।१४३।।
दध्यस्थि-न् ।१।४।६३।।
दध्युरःस-लेः ।७।३।१७२।।
दन्तपादना-वा ।२।१।१०१।।
दन्तादुन्नतात् ।७।२।४०।।
दम्भः ।४।१।२८।।
दम्भो धिप्धीप् ।४।१।१८।।
दयायास्कासः ।३।४।४७।।
दरिद्रोऽद्यतन्यां वा ।४।३।७६।।
दर्भकृष्णाग्निशर्म-त्स्ये ।६।१।१५७।।
दशनावोदै-थम् ।४।२।५४।।
दशैकादशादिकश्च ।६।४।३६।।
दश्चाङः ।५।१।७८।।
दस्ति ।३।२।८८।।
दागोऽस्वास्यप्रसार० ।३।३।५३।।
दा-ट्धेसिशद-रुः ।५।२।३६।।
दाण्डाजिनि-कम् ।७।१।१७१।।
दामः संप्रदा-च ।२।२।५२।।
दामन्यादेरीयः ।७।३।६७।।
दाम्नः ।२।४।१०।।
दाश्वत्साह्वन्मीढ्वत् ।४।१।१५।।
दिक्पूर्वपदादनाम्नः ।६।३।२३।।
दिक्पूर्वात्तौ ।६।३।७१।।
दिक्शब्दात्तीर-र ।३।२।१४२।।
दिक्शब्दा-म्याः ।७।२।११३।।
दिगधिकं संज्ञा-दे ।३।१।९८।
दिगादिदेहांशाद्यः ।६।३।१२४।।
दितेश्चैयण् वा ।६।१।६९।।
दिद्युद्दद्ज्ज-पः ।५।२।८३।।
दिव औः सौ ।२।१।११७।।
दिवस् दिवः-वा ।३।२।४५।।
दिवादेः श्यः ।३।४।७२।।
दिवो द्यावा ।३।२।४४।

दिशो रूढ्या-ले ।३।१।२५।।
दिस्योरीट् ।४।४।८९।।
दीङः सनि वा ।४।२।६।।
दीपजनबुध-वा ।३।४।६७।।
दीप्तिज्ञानयत्न-दः ।३।३।७८।।
दीय् दीङः-रे ।४।३।९३।।
दीर्घः ।६।४।१२७।।
दीर्घङ्याब्-सेः ।१।४।४५।।
दीर्घमवोऽन्त्यम् ।४।१।१०३।।
दीर्घश्च्वियङ्-च ।४।३।१०८।।
दीर्घो नाम्य-श्रः ।१।४।४७।।
दुःखात्प्रातिकूल्ये ।७।२।१४१।।
दुःस्वीषतः-खल् ।५।३।१३९।।
दुगोरू च ।४।२।७७।।
दुनादिकुर्वि-न्यः ।६।१।११८।।
दुर्निन्दाकृच्छ्रे ।३।१।४३।।
दुष्कुलादेयण्वा ।६।१।९८।।
दुहदिहलिह-कः ।४।३।७४।।
दुहेर्डुघः ।५।१।१४५।।
दूरादामन्त्र्य-नृत् ।७।४।९९।।
दूरादेत्यः ।६।३।४।।
दृग्दृशदृक्षे ।३।२।१५१।।
दृतिकुक्षि-यण् ।६।३।१३०।।
दृतिनाथात्पशाविः ।५।१।९७।।
दृन्पुनर्वर्षाकारैर्भुवः ।२।१।५९।।
दृ-वृग्-स्तु-जुषे-सः ।५।१।४०।।
दृशः क्वनिप् ।५।१।१६६।।
दृश्यभिवदोरात्मने ।२।२।९।।
दृश्यर्थैश्चिन्तायाम् ।२।१।३०।।
दृष्टे साम्नि नाम्नि ।६।२।१३३।।
देये त्रा च ।७।२।१३३।।
देर्दिगिः परोक्षायाम् ।४।१।३२।।
देवता ।६।२।१०१।।
देवतानामात्वादौ ।७।४।२८।।
देवतान्तात्तदर्थे ।७।१।२०।।
देवपथादिभ्यः ।७।१।१११।।
देववातादापः ।५।१।९९।।
देवव्रतादीन् डिन् ।६।४।८३।।
देवात् तल् ।७।२।१६२।।
देवाद्यञ् च ।६।१।२१।।
देवानांप्रियः ।३।२।३४।।
देवार्चामैत्री-स्थः ।३।३।६०।।
देविका-शिं-वाः ।७।४।३।।
देशे ।२।३।७०।।
देशेऽन्तरो-नः ।२।३।९१।।
दैर्घ्येऽनुः ।३।१।३४।।
दैवयज्ञिशौचिवृ-र्वा ।२।४।८२।।
दो मः स्यादौ ।२।१।३९।।
दोरप्राणिनः ।६।२।४९।।
दोरीयः ।६।३।३२।।

पुरंदरभगंदरौ ।५।१।११४।।
पुराणे कल्पे ।६।३।१८७।।
पुरायावतोर्वर्त्तमाना ।५।३।७।।
पुरुमगधकलिङ्ग-दण् ।६।१।११६।।
पुरुषः स्त्रिया ।३।१।१२६।।
पुरुषहृदयादसमासे ।७।१।७०।।
पुरुषात् कृत-यञ् ।६।२।२९।।
पुरुषाद्वा ।२।४।२५।।
पुरुषायु-वम् ।७।३।१२०।।
पुरुषे वा ।३।२।१३५।।
पुरोऽग्रतोऽग्रे सर्त्तेः ।५।१।१४०।।
पुरोडाश-टौ ।६।३।१४६।।
पुरो नः ।६।३।८६।।
पुरोऽस्तमव्ययम् ।३।१।७।।
पुव इत्रो दैवते ।५।२।८५।।
पुष्करादेर्देशे ।७।२।७०।।
पुष्यार्थाद्भे पुनर्वसुः ।३।१।१२९।।
पुस्पौ ।४।३।३।।
पूगादमुख्य-द्रिः ।७।३।६०।।
पूङ्क्लिशिभ्यो नवा ।४।४।४५।।
पूङ्यजः शानः ।५।२।२३।।
पूजाचार्यक-यः ।३।३।३९।।
पूजास्वतेः प्राक् टात् ।७।३।७२।।
पूतक्रतुवृषा-च ।२।४।६०।।
पूदिव्यञ्चेर्ना-ने ।४।२।७२।।
पूरणाद् ग्रन्थ-स्य ।७।१।१७६।।
पूरणाद्वयसि ।७।२।६२।।
पूरणार्द्धादिकः ।६।४।१५९।।
पूरणीभ्यस्तत्-प् ।७।३।१३०।।
पूर्णमासोऽण् ।७।२।५५।।
पूर्णाद्वा ।७।३।१६६।।
पूर्वकालैक-लम् ।३।१।९०।।
पूर्वपदस्था-गः ।२।३।६४।।
पूर्वपदस्य वा ।७।३।४५।।
पूर्वप्रथमा-ये ।७।४।७७।।
पूर्वमनेन-न् ।७।१।१६७।।
पूर्वस्याऽस्वे स्वरे० ।४।१।३७।।
पूर्वाग्रेप्रथमे ।५।४।४९।।
पूर्वात् कर्तुः ।५।१।१४१।।
पूर्वापरप्र-रम् ।३।१।१०३।।
पूर्वापराध-ना ।३।१।५२।।
पूर्वापरा-द्युस् ।७।२।९८।।
पूर्वावराध-षाम् ।७।२।११५।।
पूर्वाह्णा-नट् ।६।३।८७।।
पूर्वाह्णा-कः ।६।३।१०२।।
पूर्वोत्तर-क्थ्नः ।७।३।११३।।
पृथिवीमध्यान्-स्य ।६।४।१५६।।
पृथिव्या ञाऽञ् ।६।१।१८।।
पृथिवीसर्व-श्चाञ् ।६।१।१८।।
पृथुमृदु-रः ।७।४।३९।।
पृथ्वादेरिमन्वा ।७।१।५८।।
पृषोदरादयः ।३।२।१५५।।

भावे चाशि-खः ।५।१।१३०॥
भावे त्वतल् ।७।१।५५॥
भावेऽनुपसर्गात् ।५।३।४५॥
भिक्षादेः ।६।२।१०॥
भिक्षा-सेनाऽऽदायात् ।५।१।१३९॥
भित्तं शकलम् ।४।२।८१॥
भिदादयः ।५।३।१०८॥
भियो नवा ।४।२।९९॥
भियो रुरुकलुकम् ।५।२।७६॥
भिस एस् ।१।४।२॥
भीमादयोऽपादाने ।५।१।१४॥
भीरुष्ठानादयः ।२।३।३३॥
भीषिभूषि-भ्यः ।५।३।१०९॥
भीह्रीभृहोस्तिवत् ।३।४।५०॥
भुजन्युब्जं-गे ।४।१।१२०॥
भुजिपत्या-ने ।५।३।१२८॥
भुजो-भक्ष्ये ।४।१।११७॥
भुनजोऽत्राणे ।३।३।३७॥
भुवो वः-न्योः ।४।२।४३॥
भुवोऽवज्ञाने वा ।५।३।६४॥
भूङः प्राप्तौ णिङ् ।३।४।१९॥
भूजेः ष्णुक् ।५।२।३०॥
भूतपूर्वे प्चरट् ।७।२।७८॥
भूतवच्चाशंस्ये वा ।५।४।२॥
भूते ।५।४।१०॥
भूयःसंभूयो-च ।६।१।३६॥
भूर्लुक् चेवर्णस्य ।७।४।४१॥
भूश्र्यदोऽल् ।५।३।२३॥
भूषाक्रोधार्थ-नः ।५।२।४२॥
भूषादरक्षेपे-त् ।३।१।४॥
भूषार्थसन्-क्यौ ।३।४।९३॥
भूस्वपोरदुतौ ।४।१।७०॥
भृगो नाम्नि ।५।३।९८॥
भृगोऽसंज्ञायाम् ।५।१।४५॥
भृग्वङ्गिरस्कु-त्रेः ।६।१।१२८॥
भृज्जो भर्ज् ।४।४।६॥
भृतिप्रत्य-कः ।७।३।१४०॥
भृतौ कर्मणः ।५।१।१०४॥
भृवृजित्-म्नि ।५।१।११२॥
भृशाभीक्ष्ण्या-देः ।७।४।७३॥
भृशाभीक्ष्ण्ये हि-दि ।५।४।४२॥
भेषजादिभ्यष्ट्यण् ।७।२।१६४॥
भोगवद्गौरिमतोर्ना० ।३।२।६५॥
भोगोत्तर-नः ।७।१।४०॥
भोजसूतयोः-त्योः ।२।४।८१॥
भौरिक्येषु-क्तम् ।६।२।६८॥
भ्राजभासभाष-नवा ।४।२।३६॥
भ्राज्यलंकृत्-ष्णुः ।५।२।२८॥
भ्रातुर्व्यः ।६।१।८८॥
भ्रातुः स्तुतौ ।७।३।१७९॥
भ्रातुष्पुत्र-यः ।२।३।१४॥
भ्रातृपुत्राःस्वसृ-भिः ।३।१।१२१॥

लघोर्यपि ।४।३।८६।।
लघ्वक्षरास-कम् ।३।१।१६०।।
लङ्गिकम्प्यो-त्योः ।४।२।४७।।
लभः ।४।४।१०३।।
ललाटवात-कः ।५।१।१२५।।
लवणादः ।६।४।६।।
लषपतपदः ।५।२।४१।।
लाक्षारोचनादिकण् ।६।२।२।।
लिप्स्यसिद्धौ ।५।३।१०।।
लिम्पविन्दः ।५।१।६०।।
लियो नोऽन्तः-वे ।४।२।१५।।
लि लौ ।१।३।६५।।
लिहादिभ्यः ।५।१।५०।।
लीङ्लिनो-पि ।३।३।९०।।
लीङ्लिनोर्वा ।४।२।९।।
लुक् ।१।३।१३।।
लुक्चाजिनान्तात् ।७।३।३९।।
लुक्युत्तरपदस्य कप्न् ।७।३।३८।।
लुगस्यादेत्यपदे ।२।१।११३।।
लुगातोऽनापः ।२।१।१०७।।
लुप्यय्वृल्लेनत् ।७।४।११२।।
लुबञ्चेः ।७।२।१२३।।
लुब् बहुलं पुष्पमूले ।६।२।५७।।
लुब्वाध्यायानुवाके ।७।२।७२।।
लुभ्यञ्चेर्विमोहार्चे ।४।४।४४।।
लूधूसू-तः ।५।२।८७।।
लूनवियातात् पशौ ।७।३।२१।।
लोकंपृणम-त्नम् ।३।२।११३।।
लोकज्ञाते-र्ये ।७।४।८४।।
लोकसर्व-ते ।६।४।१५७।।
लोकात् ।१।१।३।।
लोमपिच्छादेः शेलम् ।७।२।२८।।
लोम्नोऽपत्येषु ।६।१।२३।।
लो लः ।४।२।१६।।
लोहितादिश-त् ।२।४।६८।।
लोहितान्मणौ ।७।३।१७।।
वंशादेर्भा-त्सु ।६।४।१६६।।
वंश्यज्यायो-वा ।६।१।३।।
वंश्येन पूर्वार्थे ।३।१।२९।।
वचोऽशब्दनाम्नि ।४।१।११९।।
वञ्चस्रंसध्वंस-नी ।४।१।५०।।
वटकादिन् ।७।१।१९६।।
वतण्डात् ।६।१।४५।।
वत्तस्याम् ।१।१।३४।।
वत्सशालाद्वा ।६।३।१११।।
वत्सोक्षाश्व-पित् ।७।३।५१।।
वदव्रजलः ।४।३।४८।।
वदोऽपात् ।३।३।९७।।
वन्याङ्पञ्चमस्य ।४।२।६५।।
वमि वा ।२।३।८३।।
वम्यविति वा ।४।२।८७।।
वयःशक्तिशीले ।५।२।२४।।

# द्वितीयं परिशिष्टम् ।

## आचार्यभगवत्-कलिकालसर्वज्ञश्रीहेमचन्द्रसूरिप्रणीतो धातुपाठः ।

भ्वादयः (१)

१ भू सत्तायाम् ।
२ पां पाने ।
३ घ्रां गन्धोपादाने ।
४ ध्मां शब्दा-ऽग्निसंयोगयोः ।
५ ष्ठां गतिनिवृत्तौ ।
६ म्नां अभ्यासे ।
७ दां दाने ।
८ जिं ९ ज्रिं अभिभवे ।
१० क्षिं क्षये ।
११ इं १२ दुं १३ द्रुं १४ शुं
१५ सुं गतौ ।
१६ ध्रुं स्थैर्ये च ।
१७ सुं प्रसवैश्वर्ययोः ।
१८ स्मृं चिन्तायाम् ।
१९ गृं २० घृं सेचने ।
२१ औस्वृ शब्दोपतापयोः ।
२२ ह्वृं वरणे ।
२३ ध्वृं २४ ह्वृं कौटिल्ये ।
२५ सृं गतौ ।
२६ ऋं प्रापणे च ।
२७ तॄ प्लवन-तरणयोः ।
२८ ट्धें पाने ।
२९ दैवृ शोधने ।
३० ध्यैं चिन्तायाम् ।
३१ ग्लैं हर्षक्षये ।
३२ म्लैं गात्रविनामे ।
३३ द्यैं न्यक्करणे ।
३४ द्रैं स्वप्ने ।
३५ ध्रैं तृप्तौ ।
३६ कैं ३७ गैं ३८ रैं शब्दे ।
३९ष्टैं ४० स्त्यैं सङ्घाते च ।
४१ खैं खदने ।
४२ क्षैं ४३ जैं ४४ सैं क्षये ।
४५ स्रैं ४६ श्रैं पाके ।
४७ पैं ४८ ओवैं शोषणे ।
४९ ष्णैं वेष्टने ।
५० फक्क नीचैर्गतौ ।
५१ तक हसने ।
५२ तकु कृच्छ्रजीवने ।
५३ शुक गतौ ।
५४ बुक्क भाषणे ।
५५ओखृ ५६ राखृ ५७ लाखृ ५८ द्राखृ ५९ ध्राखृ शोषणालमर्थयोः ।
६० शाखृ ६१ श्लाखृ व्याप्तौ ।
६२ कक्ख हसने ।

६३ उख ६४ नख ६५ णख ६६ वख ६७ मख ६८ रख ६९ लख ७० मखु ७१ रखु ७२ लखु ७३ रिखु ७४ इख ७५ इखु ७६ ईखु ७७ वल्ग ७८ रगु ७९ लगु ८० तगु ८१ श्रगु ८२ श्लगु ८३ अगु ८४ वगु ८५ मगु ८६ स्वगु ८७ इगु ८८ उगु ८९ रिगु ९० लिगु गतौ ।

९१ त्वगु कम्पने च ।

९२ युगु ९३ जुगु ९४ वुगु वर्जने ।

९५ गग्घ हसने ।

९६ दघु पालने ।

९७ शिघु आघ्राणे ।

९८ लघु शोषणे ।[1]

९९ शुच शोके ।

१०० कुच शब्दे तारे ।

१०१ क्रुञ्च गतौ ।

१०२ कुञ्च च कौटिल्याल्पीभावयोः ।

१०३ लुञ्च अपनयने ।

१०४ अर्च पूजायाम् ।

१०५ अञ्चू गतौ च ।

१०६ वञ्चू १०७ चञ्चू १०८ तञ्चू १०९ त्वञ्चू ११० मञ्चू १११ मुञ्चू ११२ म्रुञ्चू ११३ म्रुचू ११४ म्लुचू ११५ ग्लुञ्चू ११६ षस्च गतौ ।

११७ गुचू ११८ ग्लुचू स्तेये ।

११९ म्लेछ अव्यक्तायां वाचि ।

१२० लछ १२१ लाछु लक्षणे ।

१२२ वाछु इच्छायाम् ।

१२३ आछु आयामे ।

१२४ ह्रीछ लज्जायाम् ।

१२५ हुर्छा कौटिल्ये ।

१२६ मुर्छा मोह-समुच्छ्राययोः ।[2]

१२७ स्फुर्छा १२८ स्मुर्छा विस्मृतौ ।

१२९ युछ प्रमादे ।[3]

१३० धृज १३१ धृजु १३२ ध्वज १३३ ध्वजु १३४ ध्रज १३५ ध्रजु १३६ वज १३७ व्रज १३८ षस्ज गतौ ।

१३९ अज क्षेपणे च ।

१४० कुजू १४१ खुजू स्तेये ।

१४२ अर्ज १४३ सर्ज अर्जने ।

१४४ कर्ज व्यथने ।

१४५ खर्ज मार्जने च ।

१४६ खज मन्थे ।

१४७ खजु गतिवैकल्ये ।

१४८ एजृ कम्पने ।

१४९ ट्वोस्फूर्जा वज्रनिर्घोषे ।

१५० क्षीज १५१ कूज १५२ गुज १५३ गुजु अव्यक्ते शब्दे ।

१५४ लज १५५ लजु १५६ तर्ज भर्त्सने ।

१५७ लाज १५८ लाजु भर्जने च ।

१५९ जज १६० जजु युद्धे ।

१६१ तुज हिंसायाम् ।

---

१. "अत्र मधुमण्डने इत्येके पठन्ति" इति हैमधातुपारायणे ॥ २. °समुच्छ्रययोः प्रा० खं. १ ॥ ३. युच्छ प्रा० खं १॥

१६२ तुजु बलने च।
१६३ गर्ज १६४ गुजु १६५ गृज १६६ गृजु
१६७ मुज १६८ मुजु १६९ मृज १७० मज
शब्दे।
१७१ गज मदने च।
१७२ त्यजं हानौ।
१७३ षञ्जं सङ्गे।
१७४ कटे वर्षावरणयोः।
१७५ शट रुजाविशरणगत्यवसादनेषु।
१७६ वट वेष्टने।
१७७ किट १७८ खिट उत्त्रासे।
१७९ शिट १८० षिट अनादरे।
१८१ जट १८२ झट संघाते।
१८३ पिट शब्दे च।
१८४ भट भृतौ।
१८५ तट उच्छ्राये।
१८६ खट काङ्क्षे।
१८७ णट नृत्तौ।
१८८ हट दीप्तौ।
१८९ षट अवयवे।
१९० लुट विलोटने।
१९१ चिट प्रैष्ये।
१९२ विट शब्दे।
१९३ हेट विबाधायाम्।
१९४ अट १९५ पट १९६ इट १९७ किट
१९८ कट १९९ कटु २०० कटै गतौ।

२०१ कुटु वैकल्ये।
२०२ मुट प्रमर्दने।
२०३ चुट २०४ चुटु अल्पीभावे।
२०५ वटु विभाजने।
२०६ रुटु २०७ लुटु स्तेये।
२०८ स्फट २०९ स्फुट्ट विशरणे।
२१० लट बाल्ये।
२११ रट २१२ रठ च परिभाषणे।
२१३ पठ व्यक्तायां वाचि।
२१४ वठ स्थौल्ये।
२१५ मठ मद-निवासयोश्च।
२१६ कठ कृच्छ्रजीवने।
२१७ हठ बलात्कारे।
२१८ उठ २१९ रुठ २२० लुठ उपघाते
२२१ पिठ हिंसा-संक्लेशयोः।
२२२ शठ कैतवे च।
२२३ शुठ गतिप्रतीघाते।
२२४ कुठु २२५ लुठु आलस्ये च।
२२६ शुठु शोषणे।
२२७ अठ २२८ रुठु गतौ।
२२९ पुडु प्रमर्दने।
२३० मुडु खण्डने च।
२३१ मडु भूषायाम्।
२३२ गडु वदनैकदेशे।
२३३ शौडृ गर्वे।
२३४ यौडृ सम्बन्धे।

२३५ मेडृ २३६ म्रेडृ २३७ म्लेडृ २३८ लोडृ
२३९ लौडृ उन्मादे ।
२४० रोडृ २४१ रौडृ २४२ तौडृ अनादरे ।
२४३ क्रीडृ विहारे ।
२४४ तुडृ [२४५ तुं[1]ड्ड] २४६ तूडृ तोडने ।
२४७ हुडृ २४८ हूडृ २४९ हॄडृ २५० हौडृ
गतौ ।
२५१ खोडृ प्रतीघाते ।
२५२ विड आक्रोशे ।
२५३ अड उद्यमे ।
२५४ लड विलासे ।
२५५ कडु मदे ।
२५६ कड्ड कार्कश्ये ।
२५७ अड्ड अभियोगे ।
२५८ चुड्ड हावकरणे ।
२५९ अण २६० रण २६१ वण २६२ व्रण
२६३ बण २६४ भण २६५ भ्रण २६६ मण
२६७ धण २६८ ध्वण २६९ ध्रण २७० कण
२७१ क्वण २७२ चण शब्दे ।
२७३ ओणृ अपनयने ।
२७४ शोणृ वर्ण-गत्योः ।
२७५ श्रोणृ २७६ श्लोणृ संघाते ।
२७७ पैणृ गति-प्रेरण-श्लेषणेषु ।
२७८ चितै संज्ञाने ।
२७९ अत सातत्यगमने ।
२८० च्युतृ आसेचने ।

२८१ चुतृ २८२ स्चुतृ २८३ [2]स्च्युतृ क्षरणे
२८४ जुतृ भासने ।
२८५ अतु बन्धने ।
२८६ कित निवासे ।
२८७ ऋत घृणा-गति-स्पर्द्धेषु ।
२८८ कुथु २८९ पुथु २९० लुथु २९१ म
२९२ मन्थ २९३ मान्थ हिंसा-संक्लेशयोः
२९४ खादृ भक्षणे ।
२९५ बद स्थैर्ये ।
२९६ खद हिंसायां च ।
२९७ गद व्यक्तायां वाचि ।
२९८ रद विलेखने ।
२९९ णद ३०० ञिक्ष्विदा अव्यक्ते शब्दे
३०१ अर्द गति-याचनयोः ।
३०२ नर्द ३०३ णर्द ३०४ गर्द शब्दे ।
३०५ तर्द हिंसायाम् ।
३०६ कर्द कुत्सिते शब्दे ।
३०७ खर्द दशने ।
३०८ अदु बन्धने ।
३०९ इदु परमैश्वर्ये ।
३१० विदु अवयवे ।
३११ णिदु कुत्सायाम् ।
३१२ टुनदु समृद्धौ ।
३१३ चदु दीप्त्याह्लादयोः ।
३१४ त्रदु चेष्टायाम् ।
३१५ कदु ३१६ क्रदु ३१७ क्लदु

१. ''संयुक्तडान्तोऽयमित्येके'' इति हैमधातुपारायणे ।। २. श्च्युतृ प्रा० खं२ ।।

रोदनाह्वानयोः।
३१८ क्लिदु परिदेवने।
३१९ स्कन्दूं गति-शोषणयोः।
३२० षिधू गत्याम्।
३२१ षिधौ शास्त्र-माङ्गल्ययोः।
३२२ शुन्ध शुद्धौ।
३२३ स्तन ३२४ धन ३२५ ध्वन ३२६ चन
३२७ स्वन ३२८ वन शब्दे।
३२९ वन ३३० षन भक्तौ।
३३१ कनै दीप्ति-कान्ति-गतिषु।
३३२ गुपौ रक्षणे।
३३३ तपं ३३४ धूप संतापे।
३३५ रप ३३६ लप ३३७ जल्प व्यक्ते वचने।
३३८ जप मानसे च।
३३९ चप सान्त्वने।
३४० शप समवाये।
३४१ सृप्लृं गतौ।
३४२ चुप मन्दायाम्।
३४३ तुप ३४४ तुम्प ३४५ त्रुप ३४६ त्रुम्प
३४७ तुफ ३४८ तुम्फ ३४९ त्रुफ ३५० त्रुम्फ
हिंसायाम्।
३५१ वर्फ ३५२ रफ ३५३ रफु ३५४ अर्ब
३५५ कर्ब ३५६ खर्ब ३५७ गर्ब ३५८ चर्ब
३५९ तर्ब ३६० नर्ब ३६१ पर्ब ३६२ वर्ब
३६३ शर्ब ३६४ षर्ब ३६३ सर्ब ३६६ रिबु
३६७ रबु गतौ।
३६८ कुबु आच्छादने।
३६९ लुबु ३७० तुबु अर्दने।
३७१ चुबु वक्त्रसंयोगे।
३७२ सृभू ३७३ सृम्भू ३७४ स्रिभू ३७५
षिम्भू ३६७ भर्भ हिंसायाम्।
३७७ शुम्भ भाषणे च।
३७८ यभं ३७९ जभ मैथुने।
३८० चमू ३८१ छमू ३८२ जमू ३८३ झमू
३८४ जिमू अदने।
३८५ क्रमू पादविक्षेपे।
३८६ यमूं उपरमे।
३८७ स्यमू शब्दे।
३८८ णमं प्रह्वत्वे।
३८९ षम ३९० ष्टम वैक्लव्ये।
३९१ अम शब्द-भक्त्योः।
३९२ अम ३९३ द्रम ३९४ हम्म ३९५ मिमृ
३९६ गमॢं गतौ।
३९७ हय ३९८ हर्य क्लान्तौ च।
३९९ मव्य बन्धने।
४००सूर्क्ष्य ४०१ ईर्क्ष्य ४०२ ईर्ष्य ईर्ष्यार्थाः।
४०३ शुच्यै ४०४ चुच्यै अभिषवे।
४०५ त्सर छद्मगतौ।
४०६ क्मर हूर्छने।
४०७ अभ्र ४०८ बभ्र ४०९ मभ्र गतौ
४१० चर भक्षणे च।
४११ धोरृ गतेश्चातुर्ये।

४१२ खोरृ प्रतीघाते ।
४१३ दल ४१४ त्रिफला विशरणे ।
४१५ मील ४१६ श्मील ४१७ स्मील ४१८ क्ष्मील निमेषणे ।
४१९ पील प्रतिष्टम्भे ।
४२० णील वर्णे ।
४२१ शील समाधौ ।
४२२ कील बन्धे ।
४२३ कूल आवरणे ।
४२४ शूल रुजायाम् ।
४२५ तूल निष्कर्षे ।
४२६ पूल संघाते ।
४२७ मूल प्रतिष्ठायाम् ।
४२८ फल निष्पत्तौ ।
४२९ फुल्ल विकसने ।
४३० चुल्ल हावकरणे ।
४३१ चिल्ल शैथिल्ये च ।
४३२ पेल ४३३ फेल ४३४ शेल ४३५ षेल ४३६ सेल ४३७ वेह्ल ४३८ सल ४३९ तिल ४४० तिल्ल ४४१ पल्ल ४४२ वेल्ल गतौ।
४४३ वेल ४४४ चेल ४४५ केल ४४६ क्वेल ४४७ खेल ४४८ स्खल चलने ।
४४९ खल संचये च ।
४५० श्वल ४५१ श्वल्ल आशुगतौ ।
४५२ गल ४५३ चर्व अदने ।
४५४ पूर्व ४५५ पर्व ४५६ मर्व पूरणे ।
४५७ मर्व ४५८ धवु ४५९ शव गतौ ।
४६० कर्व ४६१ खर्व ४६२ गर्व दर्पे ।
४६३ ष्ठिवू ४६४ क्षिवू निरसने ।
४६५ जीव प्राणधारणे ।
४६६ पीव ४६७ मीव ४६८ तीव ४६९ नीव स्थौल्ये ।
४७० उर्वै ४७१ तुर्वै ४७२ थुर्वै ४७३ दुर्वै ४७४ धुर्वै ४७५ जुर्वै ४७६ अर्व ४७७ भर्व ४७८ शर्व हिंसायाम् ।
४७९ मुर्वै ४८० मव बन्धने ।
४८१ गुर्वै उद्यमे ।
४८२ पिवु ४८३ मिवु ४८४ निवु सेचने ।
४८५ हिवु ४८६ दिवु ४८७ जिवु प्राणने ।
४८८ इवु व्याप्तौ च ।
४८९ अव रक्षण-गति-कान्ति-तृप्त्यवगमन-प्रवेश-श्रवण-स्वाम्यर्थ-याचनक्रियेच्छा-दीप्त्यवाप्त्या-ऽऽलिङ्गन-हिंसा-दहन-भाव-वृद्धिषु ।
४९० कश शब्दे ।
४९१ मिश ४९२ मश रोषे च ।
४९३ शश प्लुतिगतौ ।
४९४ णिश समाधौ ।
४९५ दृशृं प्रेक्षणे ।
४९६ दंशं दशने ।
४९७ घुषृ शब्दे ।
४९८ चूष पाने ।

४९९ तूष तुष्टौ ।
५०० पूष वृद्धौ ।
५०१ लुष ५०२ मूष स्तेये ।
५०३ षूष प्रसवे ।
५०४ ऊष रुजायाम् ।
५०४ ईष उञ्छे ।
५०६ कृषं विलेखने ।
५०७ कष ५०८ शिष ५०९ जष ५१० झष ५११ वष ५१२ मष ५१३ मुष ५१४ रुष ५१५ रिष ५१६ यूष ५१७ जूष ५१८ शष ५१९ चष हिंसायाम् ।
५२० वृषू संघाते च ।
५२१ भष भर्त्सने ।
५२२ जिषू ५२३ विषू ५२४ मिषू ५२५ निषू ५२६ पृषू ५२७ वृषू ५२८ मृषू सहने च ।
५२९ उषू ५३० श्रिषू ५३१ श्लिषू ५३२ प्रुषू ५३३ प्लुषू दाहे ।
५३४ घृषू संहर्षे ।
५३५ हृषू अलीके ।
५३६ पुष पुष्टौ ।
५३७ भूष ५३८ तसु अलङ्कारे ।
५३९ तुस ५४० ह्रस ५४१ ह्लस ५४२ रस शब्दे ।
५४३ लस श्लेषण-क्रीडनयोः ।
५४४ घस्लृं अदने ।
५४५ हसे हसने ।
५४६ पिसृ ५४७ पेसृ ५४८ वेसृ गतौ ।
५४९ शसू हिंसायाम् ।
५५० शंसू स्तुतौ च ।
५५१ मिहं सेचने ।
५५२ दहं भस्मीकरणे ।
५५३ चह कल्कने ।
५५४ रह त्यागे । ५५५ रहु गतौ ।
५५६ दह ५५७ दहु ५५८ बृह वृद्धौ ।
५५९ बृह्ह ५६० बृहु शब्दे च ।
५६१ उह्ह ५६२ तुह्ह ५६३ दुह्ह अर्दने ।
५६४ अर्ह ५६५ मह पूजायाम् ।
५६६ उक्ष सेचने ।
५६७ रक्ष पालने ।
५६८ मक्ष ५६९ मुक्ष सङ्घाते ।
५७० अक्षौ व्याप्तौ च ।
५७१ तक्षौ ५७२ त्वक्षौ तनूकरणे ।
५७३ णिक्ष चुम्बने ।
५७४ तृक्ष ५७५ स्तृक्ष ५७६ णक्ष गतौ ।
५७७ वक्ष रोषे ।
५७८ त्वक्ष त्वचने ।
५७९ सूर्क्ष अनादरे ।
५८० काक्षु ५८१ वाक्षु ५८२ माक्षु काङ्क्षायाम् ।
५८३ द्राक्षु ५८४ ध्राक्षु ५८५ ध्वाक्षु घोरवाशिते[1] च ।

**॥ परस्मैभाषाः ॥**

१ वासिते खं१ ॥

५८६ गांङ् गतौ।
५८७ ष्मिंङ् ईषद्धसने।
५८८ डीङ् विहायसां गतौ।
५८९ उंङ् ५९० कुंङ् ५९१ गुंङ् ५९२ घुंङ् ५९३ ङुंङ् शब्दे।
५९४ च्युंङ् ५९५ ज्युंङ् ५९६ जुंङ् ५९७ प्रुंङ् ५९८ प्लुंङ् गतौ।
५९९ रुंङ् रेषणे च।
६०० पूङ् पवने।
६०१ मूङ् बन्धने।
६०२ धृंङ् अविध्वंसने।
६०३ मेंङ् प्रतिदाने।
६०४ देंङ् ६०५ त्रैङ् पालने।
६०६ श्यैङ् गतौ।
६०७ प्यैंङ् वृद्धौ।
६०८ वकुङ् कौटिल्ये।
६०९ मकुङ् मण्डने।
६१० अकुङ् लक्षणे।
६११ शीकृङ् सेचने।
६१२ लोकृङ् दर्शने।
६१३ श्लोकृङ् सङ्घाते।
६१४ द्रेकृङ् ६१५ ध्रेकृङ् शब्दोत्साहे।
६१६ रेकृङ् ६१७ शकुङ् शङ्कायाम्।
६१८ ककि लौल्ये।
६१९ कुकि ६२० वृकि आदाने।
६२१ चकि तृप्ति-प्रतीघातयोः।
६२२ ककुङ् ६२३ श्वकुङ् ६२४ त्रकुङ् ६२५ श्रकुङ् ६२६ श्लकुङ् ६२७ ढौकृङ् ६२८ त्रौकृङ् ६२९ ष्वष्कि ६३० वस्कि ६३१ मस्कि ६३२ तिकि ६३३ टिकि ६३४ टीकृङ् ६३५ सेकृङ् ६३६ स्रेकृङ् ६३७ रघुङ् ६३८ लघुङ् गतौ।
६३९ अघुङ् ६४० वघुङ् गत्याक्षेपे।
६४१ मघुङ् कैतवे च।
६४२ राघृङ् ६४३ लाघृङ् सामर्थ्ये।
६४४ द्राघृङ् आयासे च।
६४५ श्लाघृङ् कत्थने।
६४६ लोचृङ् दर्शने।
६४७ षचि सेचने।
६४८ शचि व्यक्तायां वाचि।
६४९ कचि बन्धने।
६५० क्रचुङ् दीप्तौ च।
६५१ श्वचि ६५२ श्वचुङ् गतौ।
६५३ वर्चि दीप्तौ।
६५४ मचि ६५५ मुचुङ् कल्कने।
६५६ मचुङ् धारणोच्छ्राय-पूजनेषु च।
६५७ पचुङ् व्यक्तीकरणे।
६५८ ष्टुचि प्रसादे।
६५९ एजृङ् ६६० भ्रेजृङ् ६६१ भ्राजि दीप्तौ।
६६२ इजुङ् गतौ।
६६३ ईजि कुत्सने च।

६६४ ऋजि गतिस्थानार्जनोर्जनेषु ।
६६५ ऋजुङ् ६६६ भृजैङ् भर्जने ।
६६७ तिजि क्षमा-निशानयोः ।
६६८ घट्टि चलने ।
६६९ स्फुटि विकसने ।
६७० चेष्टि चेष्टायाम् ।
६७१ गोष्टि ६७२ लोष्टि संघाते ।
६७३ वेष्टि वेष्टने ।
६७४ अट्टि हिंसा-ऽतिक्रमयोः ।
६७५ एठि ६७६ हेठि विबाधायाम् ।
६७७ मठुङ् ६७८ कठुङ् शोके ।
६७९ मुठुङ् पलायने ।
६८० वठुङ् एकचर्यायाम् ।
६८१ अठुङ् ६८२ पठुङ् गतौ ।
६८३ हुडुङ् ६८४ पिडुङ् सङ्घाते ।
६८५ शडुङ् रुजायां च ।
६८६ तडुङ् ताडने ।
६८७ कडुङ् मदे ।
६८८ खडुङ् मन्थे ।
६८९ खुडुङ् गतिवैकल्ये ।
६९० कुडुङ् दाहे ।
६९१ वडुङ् ६९२ मडुङ् वेष्टने ।
६९३ भडुङ् परिभाषणे ।
६९४ मुडुङ् मज्जने ।
६९५ तुडुङ् तोडने ।
६९६ भुडुङ् वरणे ।
६९७ चडुङ् कोपे ।
६९८ द्राडृङ् ६९९ ध्राडृङ् विशरणे ।
७०० शाडृङ् श्लाघायाम् ।
७०१ वाडृङ् आप्लाव्ये ।
७०२ हेडृङ् ७०३ होडृङ् अनादरे ।
७०४ हिडुङ् गतौ च ।
७०५ घिणुङ् ७०६ घुणुङ् ७०७ घृणुङ् ग्रहणे ।
७०८ घुणि ७०९ घूर्णि भ्रमणे ।
७१० पणि व्यवहार-स्तुत्योः ।
७११ यतैङ् प्रयत्ने ।
७१२ युतृङ् ७१३ जुतृङ् भासने ।
७१४ विथृङ् ७१५ वेथृङ् याचने ।
७१६ नाथृङ् उपतापैश्वर्याशीःषु च ।
७१७ श्रथुङ् शैथिल्ये ।
७१८ ग्रथुङ् कौटिल्ये ।
७१९ कत्थि श्लाघायाम् ।
७२० श्विदुङ् श्वैत्ये ।
७२१ वदुङ् स्तुत्यभिवादनयोः ।
७२२ भदुङ् सुख-कल्याणयोः ।
७२३ मदुङ् स्तुति-मोद-मद-स्वप्न-गतिषु ।
७२४ स्पदुङ् किञ्चिच्चलने ।
७२५ क्लिदुङ् परिदेवने ।
७२६ मुदि हर्षे ।
७२७ ददि दाने ।
७२८ हदिं पुरीषोत्सर्गे ।

७२९ ष्वदि ७३० स्वर्दि ७३१ स्वादि आस्वादने ।
७३२ उर्दि मान-क्रीडयोश्च ।
७३३ कुर्दि ७३४ गुर्दि ७३५ गुदि क्रीडायाम् ।
७३६ षूदि क्षरणे ।
७३७ ह्रादि शब्दे ।
७३८ ह्लादैङ् सुखे च ।
७३९ पर्दि कुत्सिते शब्दे ।
७४० स्कुदुङ् आप्रवणे ।
७४१ एधि वृद्धौ ।
७४२ स्पर्द्धि सङ्घर्षे ।
७४३ गाधृङ् प्रतिष्ठा-लिप्सा-ग्रन्थेषु ।
७४४ बाधृङ् रोटने ।
७४५ दधि धारणे ।
७४६ बधि बन्धने ।
७४७ नाधृङ् नाथृङ्वत् ।
७४८ पनि स्तुतौ ।
७४९ मानि पूजायाम् ।
७५० तिपृङ् ७५१ ष्टिपृङ् ७५२ ष्टेपृङ् क्षरणे ।
७५३ तेपृङ् कम्पने च ।
७५४ टुवेपृङ् ७५५ केपृङ् ७५६ गेपृङ् ७५७ कपुङ् चलने ।
७५८ ग्लेपृङ् दैन्ये च ।
७५९ मेपृङ् ७६० रेपृङ् ७६१ लेपृङ् गतौ ।
७६२ त्रपौषि लज्जायाम् ।
७६३ गुपि गोपन-कुत्सनयोः ।
७६४ अबुङ् ७६५ रबुङ् शब्दे ।
७६६ लबुङ् अवस्रंसने च ।
७६७ कबृङ् वर्णे ।
७६८ क्लीबृङ् अधाष्टर्ये ।
७६९ क्षीबृङ् मदे ।
७७० शीभृङ् ७७१ वीभृङ् ७७२ शल्भि कत्थने ।
७७३ वल्भि भोजने ।
७७४ गल्भि धार्ष्टये ।
७७५ रेभृङ् ७७६ अभुङ् ७७७ रभुङ् ७७८ लभुङ् शब्दे ।
७७९ ष्टभुङ् ७८० स्कभुङ् ७८१ ष्टुभुङ् स्तम्भे ।
७८२ जभुङ् ७८३ जभैङ् ७८४ जृभुङ् गात्रविनामे ।
७८५ रभिं राभस्ये ।
७८६ डुलभिंष् प्राप्तौ ।
७८७ भामि क्रोधे ।
७८८ क्षमौषि सहने ।
७८९ कमूङ् कान्तौ ।
७९० अयि ७९१ वयि ७९२ पयि ७९३ मयि ७९४ नयि ७९५ चयि ७९६ रयि गतौ ।

७९७ तयि ७९८ णयि रक्षणे च ।
७९९ दयि दान-गति-हिंसा-दहनेषु च ।
८०० ऊयैङ् तन्तुसन्ताने ।
८०१ पूयैङ् दुर्गन्ध-विशरणयोः ।
८०२ क्नूयैङ् शब्दोन्दनयोः ।
८०३ क्ष्मायैङ् विधूनने ।
८०४ स्फायैङ् ८०५ ओप्यायैङ् वृद्धौ ।
८०६ तायृङ् सन्तान-पालनयोः ।
८०७ वलि ८०८ वल्लि संवरणे ।
८०९ शलि चलने च ।
८१० मलि ८११ मल्लि धारणे ।
८१२ भलि ८१३ भल्लि परिभाषण-हिंसा-दानेषु ।
८१४ कलि शब्द-संख्यानयोः ।
८१५ कल्लि अशब्दे ।
८१६ तेवृङ् ८१७ देवृङ् देवने ।
८१८ षेवृङ् ८१९ सेवृङ् ८२० केवृङ् ८२१ खेवृङ् ८२२ गेवृङ् ८२३ ग्लेवृङ् ८२४ पेवृङ् ८२५ प्लेवृङ् ८२६ मेवृङ् ८२७ म्लेवृङ् सेवने ।
८२८ रेवृङ् ८२९ पवि गतौ ।
८३० काशृङ् दीप्तौ ।
८३१ क्लेशि बाधने[1] ।
८३२ भाषि च व्यक्तायां वाचि ।
८३३ ईष गति-हिंसा-दर्शनेषु ।
८३४ गेषृङ् अन्विच्छायाम् ।
८३५ येषृङ् प्रयत्ने ।
८३६ जेषृङ् ८३७ णेषृङ् ८३८ एषृङ् ८३९ ह्रेषृङ् गतौ ।
८४० रेषृङ् ८४१ हेषृङ् अव्यक्ते शब्दे ।
८४२ पर्षि स्नेहने ।
८४३ घुषुङ् कान्तीकरणे ।
८४४ स्रंसूङ् प्रमादे ।
८४५ कासृङ् शब्दकुत्सायाम् ।
८४६ भासि ८४७ टुभ्रासि ८४८ टुभ्लासृङ् दीप्तौ ।
८४९ रासृङ् ८५० णासृङ् शब्दे ।
८५१ णसि कौटिल्ये ।
८५२ भ्यसि भये ।
८५३ आङः शसुङ् इच्छायाम् ।
८५४ ग्रसूङ् ८५५ ग्लसूङ् अदने ।
८५६ घसुङ् करणे ।
८५७ ईहि चेष्टायाम् ।
८५८ अहुङ् ८५९ प्लिहि गतौ ।
८६० गर्हि ८६१ गल्हि कुत्सने ।
८६२ वर्हि ८६३ वल्हि प्राधान्ये ।
८६४ बर्हि ८६५ बल्हि परिभाषण-हिंसा-च्छादनेषु ।
८६६ वेहृङ् ८६७ जेहृङ् ८६८ वाहृङ् प्रयत्ने ।
८६९ द्राहृङ् निक्षेपे ।

१. विबाधने खंसं२ ॥

८७० ऊहि तर्के ।
८७१ गाहौङ् विलोडने ।
८७२ ग्लहौङ् ग्रहणे ।
८७३ बहुङ् ८७४ महुङ् वृद्धौ ।
८७५ दक्षि शैघ्र्ये च ।
८७६ धुक्षि ८७७ धिक्षि सन्दीपन-क्लेशन-जीवनेषु ।
८७८ वृक्षि वरणे ।
८७९ शिक्षि विद्योपादाने ।
८८० भिक्षि याच्ञायाम् ।
८८१ दीक्षि मौण्ड्येज्योपनयन-नियम-व्रतादेशेषु ।
८८२ ईक्षि दर्शने ।

॥ आत्मनेभाषाः ॥

८८३ श्रिग् सेवायाम् ।
८८४ णींग् प्रापणे ।
८८५ हृंग् हरणे ।
८८६ भृंग् भरणे ।
८८७ धृंग् धारणे ।
८८८ डुकृंग् करणे ।
८८९ हिक्की अव्यक्ते शब्दे ।
८९० अञ्चूग् गतौ च ।
८९१ डुयाचृग् याच्ञायाम् ।
८९२ डुपचींष् पाके ।
८९३ राजृग् ८९४ टुभ्राजि दीप्तौ ।
८९५ भजीं सेवायाम् ।
८९६ रञ्जीं रागे ।
८९७ रेटृग् परिभाषण-याचनयोः ।
८९८ वेणृग् गति-ज्ञान-चिन्ता-निशामन वादित्रग्रहणेषु ।
८९९ चतेग् याचने ।
९०० प्रोथृग् पर्याप्तौ ।
९०१ मिथृग् मेधा-हिंसयोः ।
९०२ मेथृग् सङ्गमे च ।
९०३ चदेग् याचने ।
९०४ ऊबुन्दृग् निशामने ।
९०५ णिदृग् ९०६ णेदृग् कुत्सासन्निकर्षयोः ।
९०७ मिदृग् ९०८ मेदृग् मेधा- हिंसयोः ।
९०९ मेधृग् सङ्गमे च ।
९१० शृधूग् ९११ मृधूग् उन्दे ।
९१२ बुधृग् बोधने ।
९१३ खनूग् अवदारणे ।
९१४ दानी अवखण्डने ।
९१५ शानी तेजने ।
९१६ शपीं आक्रोशे ।
९१७ चायृग् पूजा-निशामनयोः ।
९१८ व्ययी गतौ ।
९१९ अली भूषण-पर्याप्ति-वारणेषु ।
९२० धावूग् गति-शुद्ध्योः ।
९२१ चीवृग् झषीवत् ।
९२२ दाशृग् दाने ।

९२३ झषी आदान-संवरणयोः ।
९२४ भेषृग् भये ।
९२५ भ्रेषृग् चलने च ।
९२६ पषी बाधन-स्पर्शनयोः ।
९२७ लषी कान्तौ ।
९२८ चषी भक्षणे ।
९२९ छषी हिंसायाम् ।
९३० त्विषीं दीप्तौ ।
९३१ अषी ९३२ असी गत्यादानयोश्च ।
९३३ दासृग् दाने ।
९३४ माहृग् माने ।
९३५ गुहौग् संवरणे ।
९३६ भ्लक्षी भक्षणे ।

॥ **उभयतोभाषाः** ॥

९३७ द्युति दीप्तौ ।
९३८ रुचि अभिप्रीत्यां च ।
९३९ घुटि परिवर्त्तने ।
९४० रुटि ९४१ लुटि ९४२ लुठि प्रतीघाते ।
९४३ श्विताङ् वर्णे ।
९४४ ञिमिदाङ् स्नेहने ।
९४५ ञिक्ष्विदाङ् ९४६ ञिष्विदाङ् मोचने च ।
९४७ शुभि दीप्तौ ।
९४८ क्षुभि संचलने ।
९४९ णभि ९५० तुभि हिंसायाम् ।
९५१ स्रम्भूङ् विश्वासे ।
९५२ भ्रंशूङ् ९५३ स्रंसूङ् अवस्रंसने ।
९५४ ध्वंसूङ् गतौ च ।
९५५ वृतूङ् वर्तने ।
९५६ स्यन्दौङ् स्रवणे ।
९५७ वृधूङ् वृद्धौ ।
९५८ शृधूङ् शब्दकुत्सायाम् ।
९५९ कृपौङ् सामर्थ्ये ।

॥ **वृत् द्युतादयः** ॥ **आत्मनेपदिनः** ॥[1]

९६० ज्वल दीप्तौ ।
९६१ कुच् सम्पर्चन-कौटिल्य-प्रतिष्टम्भ-विलेखनेषु ।
९६२ पतॢ ९६३ पथे गतौ ।
९६४ क्वथे निष्पाके ।
९६५ मथे विलोडने ।
९६६ षदॢं विशरण-गत्यवसादनेषु ।
९६७ शदॢं शातने ।
९६८ बुध अवगमने ।
९६९ टुवमू उद्गिरणे ।
९७० भ्रमू चलने ।
९७१ क्षर संचलने ।
९७२ चल कम्पने ।

१. ''वृत् द्युतादिः २३, वृतादि ५ अन्तर्गणसहितो वर्तितः समाप्त इत्यर्थः । वृधेः क्विपि वृत्, वर्धितौ पूर्णावित्येके'' इति हैमप्रकाशे पृ० ५७३, 'कृपः श्वस्तन्याम् ।३।३।४६।' इति सूत्रस्य व्याख्यायाम् ॥

९७३ जल घात्ये ।
९७४ टल ९७५ ट्वल वैक्लव्ये ।
९७६ ष्ठल स्थाने ।
९७७ हल विलेखने ।
९७८ णल गन्धे ।
९७९ बल प्राणनधान्यावरोधयोः ।
९८० पुल महत्वे ।
९८१ कुल बन्धु-संस्त्यानयोः ।
९८२ पल ९८३ फल ९८४ शल गतौ ।
९८५ हुल हिंसा-संवरणयोश्च ।
९८६ क्रुशं आह्वान-रोदनयोः ।
९८७ कस गतौ ।
९८८ रुहं जन्मनि ।

॥ परस्मैभाषाः ॥

९८९ रमिं क्रीडायाम् ।
९९० षहि मर्षणे ।

॥ आत्मनेभाषौ ॥

॥ वृत्[1] ज्वलादिः ॥

९९१ यजीं देवपूजा-सङ्गतिकरण-दानेषु ।
९९२ वेंग् तन्तुसन्ताने ।
९९३ व्येंग् संवरणे ।
९९४ ह्वेंग् स्पर्धा-शब्दयोः ।
९९५ टुवपीं बीजसन्ताने ।
९९६ वहीं प्रापणे ।

॥ उभयतोभाषाः ॥

९९७ ट्वोश्वि गति-वृद्ध्योः ।
९९८ वद व्यक्तायां वाचि ।
९९९ वसं निवासे ।

॥ परस्मैभाषाः ॥

॥ वृत्[2] यजादिः ॥

१००० घटिष् चेष्टायाम् ।
१००१ क्षजुङ् गति-दानयोः ।
१००२ व्यथिष् भय-चलनयोः ।
१००३ प्रथिष् प्रख्याने ।
१००४ म्रदिष् मर्दने ।
१००५ स्खदिष् खदने ।
१००६ कदुङ् १००७ क्रदुङ् १००८ क्लदुङ् वैक्लव्ये ।
१००९ क्रपि कृपायाम् ।
१०१० ञित्वरिष् सम्भ्रमे ।
१०११ प्रसिष् विस्तारे ।
१०१२ दक्षि हिंसा-गत्योः ।

॥ आत्मनेभाषाः ॥

१०१३ श्रां पाके ।
१०१४ मृं आध्याने ।
१०१५ दॄ भये ।
१०१६ नॄ नये ।
१०१७ ष्टक १०१८ स्तक प्रतीघाते ।
१०१९ चक तृप्तौ च ।
१०२० अक कुटिलायां गतौ ।
१०२१ कखे हसने ।
१०२२ अग अकवत् ।

१. "वृत् ज्वलादिः, ज्वलादयो वृत्ता समाप्ता इत्यर्थः" इति हैमधातुपारायणे, पृ० १४५ ॥
२. "वृत् यजादिः । वर्तिताः समापिता यजादय इत्यर्थः" इति हैमधातुपारायणे पृ० १५१ ॥

१०२३ रगे शङ्कायाम् ।
१०२४ लगे सङ्गे ।
१०२५ ह्रगे १०२६ ह्लगे १०२७ षगे १०२८ सगे १०२९ ष्टगे १०३० स्थगे संवरणे ।
१०३१ वट १०३२ भट परिभाषणे ।
१०३३ णट नतौ ।
१०३४ गड सेचने ।
१०३५ हेड वेष्टने ।
१०३६ लड जिह्वोन्मन्थने ।
१०३७ फण १०३८ कण १०३९ रण गतौ ।
१०४० चण हिंसा-दानयोश्च ।
१०४१ शण १०४२ श्रण दाने ।
१०४३ स्नथ १०४४ क्नथ १०४५ क्रथ १०४६ क्लथ हिंसार्थाः ।
१०४७ छद ऊर्जने ।
१०४८ मदै हर्ष-ग्लपनयोः ।
१०४९ ष्टन १०५० स्तन १०५१ ध्वन शब्दे ।
१०५२ स्वन अवतंसने ।
१०५३ चन हिंसायाम् ।
१०५४ ज्वर रोगे ।
१०५५ चल कम्पने ।
१०५६ ह्वल १०५७ ह्मल चलने ।
१०५८ ज्वल दीप्तौ च ।

॥ परस्मैभाषाः ॥

इत्याचार्यश्रीहेमचन्द्रानुस्मृता भ्वादयो निरनुबन्धा धातवः समाप्ताः ॥

## अथ अदादयः (२)

१(१०५९) अदं २(१०६०) प्सांक् भक्षणे ।
३(१०६१) भांक् दीप्तौ ।
४(१०६२) यांक् प्रापणे ।
५(१०६३) वांक् गति-गन्धनयोः ।
६(१०६४) ष्णांक् शौचे ।
७(१०६५) श्रांक् पाके ।
८(१०६६) द्रांक् कुत्सितगतौ ।
९(१०६७) पांक् रक्षणे ।
१०(१०६८) लांक् आदाने ।
११(१०६९) रांक् दाने ।
१२(१०७०) दांव्क् लवने ।
१३(१०७१) ख्यांक् प्रथने ।
१४(१०७२) प्रांक् पूरणे ।
१५(१०७३) मांक् माने ।
१६(१०७४) इंक् स्मरणे ।
१७(१०७५) इंण्क् गतौ ।
१८(१०७६) वींक् प्रजन-कान्त्यसन[1]खादने च ।
१९(१०७७) युंक् अभिगमे ।
२०(१०७८) षुंक् प्रसवैश्वर्ययोः ।
२१(१०७९) तुंक् वृत्ति-हिंसा-पूरणेषु ।

१. °शन° खं१ ॥

२२(१०८०) युक् मिश्रणे ।
२३(१०८१) णुक् स्तुतौ ।
२४(१०८२) क्ष्णुक् तेजने ।
२५(१०८३) स्नुक् प्रस्नवने ।
२६(१०८४) टुक्षु २७(१०८५) रु
२८(१०८६) कुंक् शब्दे ।
२९(१०८७) रुदृक् अश्रुविमोचने ।
३०(१०८८) ञिष्वपंक् शये ।
३१(१०८९) अन ३२(१०९०) श्वसक् प्राणने ।
३३(१०९१) जक्षक् भक्ष-हसनयोः ।
३४(१०९२) द्ररिद्राक् दुर्गतौ ।
३५(१०९३) जागृक् निद्राक्षये ।
३६(१०९४) चकासृक् दीप्तौ ।
३७(१०९५) शासूक् अनुशिष्टौ ।
३८(१०९६) वचंक् भाषणे ।
३९(१०९७) मृजौक् शुद्धौ ।
४०(१०९८) सस्तुक् स्वप्ने ।
४१(१०९९) विदक् ज्ञाने ।
४२(११००) हनंक् हिंसा-गत्योः ।
४३(११०१) वशक् कान्तौ ।
४४(११०२) असक् भुवि ।
४५(११०३) षसक् स्वप्ने यङ्लुप् च ।

॥ **परस्मैभाषाः** ॥

४६(११०४) इंङ्क् अध्ययने ।
४७(११०५) शीङ्क् स्वप्ने ।
४८(११०६) ह्नुङ्क् अपनयने ।
४९(११०७) षूङौक् प्राणिगर्भविमोचने ।
५०(११०८) पृचैङ् ५१(११०९) पृजुङ्
५२(१११०) पिजुकि संपर्चने ।
५३(११११) वृजैकि वर्जने ।
५४(१११२) णिजुकि शुद्धौ ।
५५(१११३) शिजुकि अव्यक्ते शब्दे ।
५६(१११४) ईडिक् स्तुतौ ।
५७(१११५) ईरिक् गति-कम्पनयोः ।
५८(१११६) ईशिक् ऐश्वर्ये ।
५९(१११७) वसिक् आच्छादने ।
६०(१११८) आङः शासूकि इच्छायाम् ।
६१(१११९) आसिक् उपवेशने ।
६२(११२०) कसुकि गति-शातनयोः ।
६३(११२१) णिसुकि चुम्बने ।
६४(११२२) चक्षिक् व्यक्तायां वाचि ।

॥ **आत्मनेभाषाः** ॥

६५(११२३) ऊर्णुग्क् आच्छादने ।
६६(११२४) ष्टुंगृक् स्तुतौ ।
६७(११२५) ब्रूंगृक् व्यक्तायां वाचि ।
६८(११२६) द्विषींक् अप्रीतौ ।
६९(११२७) दुहींक् क्षरणे ।
७०(११२८) दिहिंक् लेपे ।
७१(११२९) लिहींक् आस्वादने ।

॥ **उभयतोभाषाः** ॥

७२(११३०) हुंक् दाना-ऽदनयोः ।

७३(११३१) ओहांक् त्यागे ।
७४(११३२) ञिभींक् भये ।
७५(११३३) ह्रींक् लज्जायाम् ।
७६(११३४) पृंक् पालन-पूरणयोः ।
७७(११३५) ऋंक् गतौ ।

॥ परस्मैभाषाः ॥

७८(११३६) ओहांङ्क् गतौ ।
७९(११३७) मांङ्क् मान-शब्दयोः ।

॥ आत्मनेभाषौ ॥

८०(११३८) डुदांगृक् दाने ।
८१(११३९) डुधांगृक् धारणे च ।
८२(११४०) टुडुभृंगृक् पोषणे च ।
८३(११४१) णिजृंकी शौचे च ।
८४(११४२) विजृंकी पृथग्भावे ।
८५(११४३) विषृलंकी व्याप्तौ ।

॥ उभयतोभाषाः ॥

**इत्याचार्यश्रीहेमचन्द्रास्मृता अदादयः कितो धातवः समाप्ताः ॥**

**अथ दिवादयः (३)**

१(११४४) दिवूच् क्रीडा-जयेच्छा-पणि-द्युति-स्तुति-गतिषु ।
२(११४५) जॄष् ३(११४६) झॄष्च् जरसि।
४(११४७) शोंच् तक्षणे ।
५(११४८) दों ६(११४९) छोंच् छेदने ।
७(११५०) षोंच् अन्तकर्मणि ।
८(११५१) व्रीडच् लज्जायाम् ।
९(११५२) नृतैच् नर्तने ।
१०(११५३) कुथच् पूतिभावे ।
११(११५४) पुथच् हिंसायाम् ।
१२(११५५) गुधच् परिवेष्टने ।
१३(११५६) राधंच् वृद्धौ ।
१४(११५७) व्यधंच् ताडने ।
१५(११५८) क्षिपंच् प्रेरणे ।
१६(११५९) पुष्पच् विकसने ।
१७(११६०) तिम १८(११६१) तीम १९(११६२) ष्टिम २०(११६३) ष्टीमच् आर्द्रभावे ।
२१(११६४) षिवूच् उतौ ।
२२(११६५) श्रिवूच् गति-शोषणयोः ।
२३(११६६) ष्ठिवू २४(११६७) क्षिवूच् निरसने ।
२५(११६८) इषच् गतौ ।
२६(११६९) ष्णसूच् निरसने ।
२७(११७०) क्नसूच् ह्वृति-दीप्त्योः ।
२८(११७१) त्रसैच् भये ।
२९(११७२) प्युसच् दाहे ।
३०(११७३) षह ३१(११७४) षुहच् शक्तौ ।
३२(११७५) पुषंच् पुष्टौ ।
३३(११७६) उचच् समवाये ।
३४(११७७) लुटच् विलोटने ।
३५(११७८) ष्विदांच् गात्रप्रक्षरणे ।

३६(११७९) क्लिदौच् आर्द्रभावे।
३७(११८०) ञिमिदाच् स्नेहने।
३८(११८१) ञिक्ष्विदाच् मोचने च।
३९(११८२) क्षुधंच् बुभुक्षायाम्।
४०(११८३) शुधंच् शौचे।
४१(११८४) क्रुधंच् कोपे।
४२(११८५) षिधूंच् संराद्धौ।
४३(११८६) ऋधूच् वृद्धौ।
४४(११८७) गृधूच् अभिकाङ्क्षायाम्।
४५(११८८) रधौच् हिंसा-संराद्धयोः।
४६(११८९) तृपौच् प्रीतौ।
४७(११९०) दृपौच् हर्ष-मोहनयोः।
४८(११९१) कुपच् क्रोधे।
४९(११९२) गुपच् व्याकुलत्वे।
५०(११९३) युप ५१(११९४) रुप
५२(११९५) लुपच् विमोहने।
५३(११९६) डिपच् क्षेपे।
५४(११९७) ष्टूपच् समुच्छ्राये।
५५(११९८) लुभच् गार्द्ध्ये।
५६(११९९) क्षुभच् संचलने।
५७(१२००) णभ ५८(१२०१) तुभच् हिंसायाम्
५९(१२०२) नशौच् अदर्शने।
६०(१२०३) कुशच् श्लेषणे।
६१(१२०४) भृशू ६२(१२०५) भ्रंशूच् अधःपतने।

६३(१२०६) वृशच् वरणे।
६४(१२०७) कृशच् तनुत्वे।
६५(१२०८) शुषंच् शोषणे।
६६(१२०९) दुषंच् वैकृत्ये।
६७(१२१०) श्लिषंच् आलिङ्गने।
६८(१२११) प्लुषूच् दाहे।
६९(१२१२) ञितृषच् पिपासायाम्।
७०(१२१३) तुषं ७१(१२१४) हृषच् तुष्टौ।
७२(१२१५) रुषच् रोषे।
७३(१२१६) प्युष् ७४(१२१७) प्युस्
७५(१२१८) पुसच् विभागे।
७६(१२१९) विसच् प्रेरणे।
७७(१२२०) कुसच् श्लेषे।
७८(१२२१) असूच् क्षेपणे।
७९(१२२२) यसूच् प्रयत्ने।
८०(१२२३) जसूच् मोक्षणे।
८१(१२२४) तसू ८२(१२२५) दसूच् उपक्षये।
८२(१२२६) वसूच् स्तम्भे।
८३(१२२७) बुसच् उत्सर्गे।
८४(१२२८) मुसच् खण्डने।
८५(१२२९) मसैच् परिणामे।
८६(१२३०) शमू ८७(१२३१) दमूच् उपशमे।
८८(१२३२) तमूच् काङ्क्षायाम्।

८९(१२३३) श्रमूच् खेद-तपसोः ।
९०(१२३४) भ्रमूच् अनवस्थाने ।
९१(१२३५) क्षमौच् सहने ।
९२(१२३६) मदैच् हर्षे ।
९३(१२३७) क्लमूच् ग्लानौ ।
९५(१२३८) मुहौच् वैचित्त्ये ।
९६(१२३९) द्रुहौच् जिघांसायाम् ।
९७(१२४०) ष्णुहौच् उद्गिरणे ।
९८(१२४१) ष्णिहौच् प्रीतौ ।

॥ वृत् पुषादिः ६७ ॥

॥ परस्मैभाषाः ॥

९९(१२४२) षूङौच् प्राणिप्रसवे ।
१००(१२४३) दूङ्च् परितापे ।
१०१(१२४४) दींङ्च् क्षये ।
१०२(१२४५) धींङ्च् अनादरे ।
१०३(१२४६) मींङ्च् हिंसायाम् ।
१०४(१२४७) रींङ्च् स्रवणे ।
१०५(१२४८) लींङ्च् श्लेषणे ।
१०६(१२४९) डीङ्च् गतौ ।
१०७(१२५०) व्रींङ्च् वरणे ।

॥ वृत् स्वादिः ९ ॥

१०८(१२५१) पींङ्च् पाने ।
१०९(१२५२) ईङ्च् गतौ ।
११०(१२५३) प्रींङ्च् प्रीतौ ।
१११(१२५४) युजिंच् समाधौ ।
११२(१२५५) सृजिंच् विसर्गे ।
११३(१२५६) वृतूचि वरणे ।
११४(१२५७) पदिंच् गतौ ।
११५(१२५८) विदिंच् सत्तायाम् ।
११६(१२५९) खिदिंच् दैन्ये ।
११७(१२६०) युधिंच् सम्प्रहारे ।
११८(१२६१) अनो रुधिंच् कामे ।
११९(१२६२) बुधिं १२०(१२६३) मनिंच् ज्ञाने ।
१२१(१२६४) अनिच् प्राणने ।
१२२(१२६५) जनैचि प्रादुर्भावे ।
१२३(१२६६) दीपैचि दीप्तौ ।
१२४(१२६७) तपिंच् ऐश्वर्ये वा ।
१२५(१२६८) पूरैचि आप्यायने ।
१२६(१२६९) घूरैङ् १२७(१२७०) जूरैचि जरायाम् ।
१२८(१२७१) धूरैङ् १२९(१२७२) गुरैचि गतौ ।
१३०(१२७३) शूरैचि स्तम्भे ।
१३१(१२७४) तूरैचि त्वरायाम् ।
घूरादयो हिंसायां च ।
१३२(१२७५) चूरैचि दाहे ।
१३३(१२७६) क्लिशिच् उपतापे ।
१३४(१२७७) लिशिंच् अल्पत्वे ।
१३५(१२७८) काशिच् दीप्तौ ।
१३६(१२७९) वाशिच् शब्दे ।

॥ आत्मनेभाषाः ॥

१३७(१२८०) शकींच् मर्षणे ।
१३८(१२८१) शुचृगैच् पूतिभावे ।
१३९(१२८२) रञ्जींच् रागे ।
१४०(१२८३) शपींच् आक्रोशे ।
१४१(१२८४) मृषीच् तितिक्षायाम् ।
१४२(१२८५) णहींच् बन्धने ।

॥उभयतोभाषाः ॥

**इत्याचार्यश्रीहेमचन्द्रानुस्मृता दिवादयश्चितो धातवः समाप्ताः ॥**

**अथ स्वादयः (४)**

१(१२८६) षुंगूट् अभिषवे ।
२(१२८७) षिंगूट् बन्धने ।
३(१२८८) शिंगूट् निशाने ।
४(१२८९) डुमिंगूट् प्रक्षेपणे ।
५(१२९०) चिंगूट् चयने ।
६(१२९१) धूगूट् कम्पने ।
७(१२९२) स्तृंगूट् आच्छादने ।
८(१२९३) कृंगूट् हिंसायाम् ।
९(१२९४) वृगूट् वरणे ।

**॥ उभयतोभाषाः ॥**

१०(१२९५) हिंट् गति-वृद्ध्योः ।
११(१२९६) श्रुंट् श्रवणे ।
१२(१२९७) टुदुंट् उपतापे ।
१३(१२९८) पृंट् प्रीतौ ।
१४(१२९९) स्मृंट् पालने च ।
१५(१३००) शकॢंट् शक्तौ ।
१६(१३०१) तिक १७(१३०२) तिग
१८(१३०३) षघट् हिंसायाम् ।
१९(१३०४) राधं २०(१३०५) साधंट् संसिद्धौ ।
२१(१३०६) ऋधूट् वृद्धौ ।
२२(१३०७) आपॢंट् व्याप्तौ ।
२३(१३०८) तृपट् प्रीणने ।
२४(१३०९) दम्भूट् दम्भे ।
२५(१३१०) कृवुट् हिंसा-करणयोः ।
२६(१३११) धिवुट् गतौ ।
२७(१३१२) ञिधृषाट् प्रागल्भ्ये ।

**॥ परस्मैभाषाः ॥**

२८(१३१३) ष्टिघिट् आस्कन्दने ।
२९(१३१४) अशौटि व्याप्तौ ।

**॥ आत्मनेभाषाः ॥**

**इत्याचार्यश्रीहेमचन्द्रानुस्मृताः स्वादयष्टितो धातवः समाप्ताः ॥**

**अथ तुदादयः (५)**

१(१३१५) तुदींत् व्यथने ।
२(१३१६) भ्रस्जींत् पाके ।
३(१३१७) क्षिपींत् प्रेरणे ।
४(१३१८) दिशींत् अतिसर्जने ।
५(१३१९) कृषींत् विलेखने ।
६(१३२०) मुचॢंती मोक्षणे ।
७(१३२१) षिचींत् क्षरणे ।
८(१३२२) विदॢंती लाभे ।

९(१३२३) लुपॢंती छेदने ।

१०(१३२४) लिपींत् उपदेहे ।

॥विभाषिताः ॥

११(१३२५) कृतैत् छेदने ।

१२(१३२६) खिदंत् परिघाते ।

१३(१३२७) पिशत् अवयवे ।

॥वृत् मुचादिः ८ ॥

१४(१३२८) रिं १५(१३२९) पिंत् गतौ ।

१६(१३३०) धिंत् धारणे ।

१७(१३३१) क्षिंत् निवास-गत्योः ।

१८(१३३२) षूत् प्रेरणे ।

१९(१३३३) मृंत् प्राणत्यागे ।

२०(१३३४) कृत् विक्षेपे ।

२१(१३३५) गृत् निगरणे ।

२२(१३३६) लिखत् अक्षरविन्यासे ।

२३(१३३७) जर्च २४(१३३८) झर्चत् परिभाषणे ।

२५(१३३९) त्वचत् संवरणे ।

२६(१३४०) रुचत् स्तुतौ ।

२७(१३४१) ओव्रस्चौत् छेदने ।

२८(१३४२) ऋछत् इन्द्रियप्रलय-मूर्त्तिभावयोः ।

२९(१३४३) विछत् गतौ ।

३०(१३४४) उछैत् विवासे ।

३१(१३४५) मिछत् उत्क्लेशे ।

३२(१३४६) उछुत् उञ्छे ।

३३(१३४७) प्रछंत् ज्ञीप्सायाम् ।

३४(१३४८) उब्जत् आर्जवे ।

३५(१३४९) सृजंत् विसर्गे ।

३६(१३५०) रुजोंत् भङ्गे ।

३७(१३५१) भुजोंत् कौटिल्ये ।

३८(१३५२) टुमस्जोंत् शुद्धौ ।

३९(१३५३) जर्ज ४०(१३५४) झर्झत् परिभाषणे ।

४१(१३५५) उद्झत् उत्सर्गे ।

४२(१३५६) जुडत् गतौ ।

४३(१३५७) पृड ४४(१३५८) मृडत् सुखने ।

४५(१३५९) कडत् मदे ।

४६(१३६०) पृणत् प्रीणने ।

४७(१३६१) तुणत् कौटिल्ये ।

४८(१३६२) मृणत् हिंसायाम् ।

४९(१३६३) द्रुणत् गति-कौटिल्ययोश्च ।

५०(१३६४) पुणत् शुभे ।

५१(१३६५) मुणत् प्रतिज्ञाने ।

५२(१३६६) कुणत् शब्दोपकरणयोः ।

५३(१२६७) घुण ५४(१३६८) घूर्णत् भ्रमणे ।

५५(१३६९) चृतैत् हिंसा-ग्रन्थयोः ।

५६(१३७०) णुदंत् प्रेरणे ।

५७(१३७१) षदॢंत् अवसादने ।

५८(१३७२) विधत् विधाने ।

